१. गायत्री, बृहती - श्रीः, ब्रम्हणी, भारती, गरुड, स्वाहा, तारा
२. अनुष्टुप् - ब्रम्हाणी, रोहिणी　　３. त्रिष्टुप् - इन्द्राणी
४. जगती - वारुणी　　५. पङ्क्ति - शची
६. उष्णिक् - सौरी　　७. जगती - सर्वदेवस्त्रियः
८. विराट् - मित्रावरुणभार्ये

These deities are not identical with the chandas. These are only abhimani deities. It may be noted here that all these deities are women. There are more than one deity for certain chandas.

नात्र देवतानां छन्दसामैक्यमुच्यते किन्तु तत्तदभिमानितया तन्नामवत्त्वम् । तच्च बह्वीनां देवतानामेकच्छन्दोभिमानित्वेन एक नामवत्त्वं न विरुध्यते ।
(टीका)

All the above issues are discussed in Sri Madhvāchārya's Ṛgbhāṣya and fully explained in Sri Jayatirtha's Tīkā and Sri Raghavendra tirtha's Mantrārtha Manjarī.

Three levels of meaning viz i) The ritual deity Agñi (ii) The Supreme God present in him and (iii) the adhyātma meaning. These three are explained for each hymn in the Bhāṣya.

ऋगर्थः त्रिविधो भवति एकस्तावत् प्रसिद्धाग्न्यादिरूपः, अपरः तदन्तर्गतेश्वरलक्षणः, अन्यः अध्यात्मरूपः । तत् त्रितयपरं च इदं भाष्यम् ।

For instance, the word Agñi in the first hymn refers to the ritual deity Agñi and the God present in him at बाह्ययज्ञ i.e. the sacrifice, and adhyātma form of the God in meditation etc ज्ञानयज्ञ.

अयमादितः प्रयुक्तः अग्निशब्दः अग्रेः तदन्तर्गतहरेश्च बाह्ययज्ञे अध्यात्मं च हरेः ज्ञानयज्ञे मुख्यामुख्यत्वाभ्यां अग्र एव अशेषपूज्येभ्यः पूर्वमेव अभिपूज्यतामाह ।

The import of the word Agñi is explained in a number of ways :

a) अग्रणीत्वम् अग्नित्वम्

b) अग्य्रत्वमग्रे भवत्वम् - उत्तमत्वम्

c) अग्रनेतृत्वम् - प्रथमप्रवर्तकत्वम्

d) अत्तृत्वम् - संहर्तृत्वम्, हविषो अत्तृत्वम्
 (अध्यात्मम्) विषयाणामत्तृत्वम्

e) अङ्गनेतृताम् - सर्वशरीराणां प्रवर्तकत्वम् ।

f) अगनेतृताम् - स्वयं न गच्छतः विश्वस्य प्रवर्तकत्वम् ।

Through these meanings a number of attributes of the Supreme God are conveyed.

The other words of the first hymn also are similarly explained to bring out certain special characteristic of the Supreme God.

ii) पुरोहितम् - पुरः अनादितः एव हितम् ।

iii) प्रभुमिति उदात्तस्वरार्थः । उदात्तस्य उच्चतार्थता इति वक्ष्यति ।

iv) यज्ञस्य ऋत्विजम् - यज्ञानां ज्योतिष्टोमादीनां कर्तृतया ऋत्विङ् नामकेषु नियामकतया स्थितत्वेन ऋत्विङ् नामकम् ।

v) होतारम् - होतृ नामकतया विशिष्य तत्र सांनिध्यात् होतृ नामकम् ।

vi) रत्नधातमम्- रत्नं सुखं धत्ते इति रत्नधाः अतिशयेन रत्नधा रत्न धातमः । निरवधिका नन्दमित्यर्थः ।

vii) देवम् - क्रीडादि कर्तारम् ।

In this way all adjectives are explained as conveying the attributes of the Supreme God. These attributes are found in the ritual deity Agni also in a limited way. However, these are unlimited in Supreme God.

अत्र उक्तानां गुणानां हरौ निरवधिकत्वम् ।
तदधिष्ठाने अग्नौ यथायोग्यम् । एवमग्रेपि ॥ (मन्त्रार्थमञ्जरी)

The above explanation is from बाह्ययज्ञ point of view. From Adyātma point of view it is explained as under :

अध्यात्मपरत्वे तु अयमर्थः पुरोहितम्– अनादितः सर्वानुकूलम्, यज्ञस्य ज्ञानयज्ञस्य ऋत्विजम् ऋत्विग्भूतेन्द्रियाभिमानिनियामकतया तत्र स्थितत्त्वेन ऋत्विङ् नियामकम्, होतारम् इन्द्रियाख्याग्निषु विषयलक्षणहविषां होतारम्, अग्निम् सर्वशरीरप्रवर्तकम् ।

For the purpose of adhyātma explanation a Sātvika mumukṣu has to be taken as Yajamana अत्र अध्यात्मं सर्वत्र मोक्षसाधकः कश्चित् सात्त्विक एव यजमानो ज्ञेयः । (मन्त्रार्थमञ्जरी)

We may briefly notice the meaning of वायु इन्द्र etc also.

a) वायुः वाय्वादिशब्दो महायोगविद्धद्रूढिभ्यां विष्णौ परममुख्यवृत्तिः । वाय्वदिप्रसिद्धदेवेषु तु विष्णुसम्बन्धनिमित्तकः ।

i) व शब्दः वलवाची प्रसिद्धः । आयुः गमनकर्ता । वश्चासौ आयुश्च वायुः - बलरूपः गमनकर्ता च ।

अयमादितः प्रयुक्तः अग्निशब्दः अग्नेः तदन्तर्गतहरेश्च बाह्ययज्ञे अध्यात्मं च हरेः ज्ञानयज्ञे मुख्यामुख्यत्वाभ्यां अग्र एव अशेषपूज्येभ्यः पूर्वमेव अभिपूज्यतामाह ।

The import of the word Agñi is explained in a number of ways :

a) अग्रणीत्वम् अग्नित्वम्

b) अग्य्रत्वमग्रे भवत्वम् - उत्तमत्वम्

c) अग्रनेतृत्वम् - प्रथमप्रवर्तकत्वम्

d) अत्तृत्वम् - संहर्तृत्वम्, हविषो अत्तृत्वम्
(अध्यात्मम्) विषयाणामत्तृत्वम्

e) अङ्गनेतृताम् - सर्वशरीराणां प्रवर्तकत्वम् ।

f) अगनेतृताम् - स्वयं न गच्छतः विश्वस्य प्रवर्तकत्वम् ।

Through these meanings a number of attributes of the Supreme God are conveyed.

The other words of the first hymn also are similarly explained to bring out certain special characteristic of the Supreme God.

ii) पुरोहितम् - पुरः अनादितः एव हितम् ।

iii) प्रभुमिति उदात्तस्वरार्थः । उदात्तस्य उच्चतार्थता इति वक्ष्यति ।

iv) यज्ञस्य ऋत्विजम् - यज्ञानां ज्योतिष्टोमादीनां कर्तृतया ऋत्विङ् नामकेषु नियामकतया स्थितत्वेन ऋत्विङ् नामकम् ।

v) होतारम् - होतृ नामकतया विशिष्य तत्र सांनिध्यात् होतृ नामकम् ।

vi) रत्नधातमम्- रत्नं सुखं धत्ते इति रत्नधाः अतिशयेन रत्नधा रत्न धातमः । निरवधिका नन्दमित्यर्थः ।

vii) देवम् - क्रीडादि कर्तारम् ।

In this way all adjectives are explained as conveying the attributes of the Supreme God. These attributes are found in the ritual deity Agni also in a limited way. However, these are unlimited in Supreme God.

अत्र उक्तानां गुणानां हरौ निरवधिकत्वम् ।
तदधिष्ठाने अग्नौ यथायोग्यम् । एवमग्रेपि ॥ (मन्त्रार्थमञ्जरी)

The above explanation is from बाह्ययज्ञ point of view. From Adyātma point of view it is explained as under :

अध्यात्मपरत्वे तु अयमर्थः पुरोहितम्– अनादितः सर्वानुकूलम्, यज्ञस्य ज्ञानयज्ञस्य ऋत्विजम् ऋत्विग्भूतेन्द्रियाभिमानिनियामकतया तत्र स्थितत्त्वेन ऋत्विङ् नियामकम्, होतारम् इन्द्रियाख्याग्निषु विषयलक्षणहविषां होतारम्, अग्निम् सर्वशरीरप्रवर्तकम् ।

For the purpose of adhyātma explanation a Sātvika mumukṣu has to be taken as Yajamana अत्र अध्यात्मं सर्वत्र मोक्षसाधकः कश्चित् सात्त्विक एव यजमानो ज्ञेयः । (मन्त्रार्थमञ्जरी)

We may briefly notice the meaning of वायु इन्द्र etc also.

a) वायुः वाय्वादिशब्दो महायोगविद्धद्रूढिभ्यां विष्णौ परममुख्यवृत्तिः । वाय्वदिप्रसिद्धदेवेषु तु विष्णुसम्बन्धनिमित्तकः ।

i) व शब्दः वलवाची प्रसिद्धः । आयुः गमनकर्ता । वश्चासौ आयुश्च वायुः - बलरूपः गमनकर्ता च ।

ii) वाति गच्छतीति वः, लोकस्य प्राणधारणहेतुत्वादायुः ।

iii) वाति जानातीति वायुः

iv) वृणोति व्रियते इति वा वायुः

b) इन्द्रः -

i) इदि परमैश्वर्ये इत्यस्माद् रन् प्रत्यये इन्द्रः

ii) इदं विषयजातमुद्दिश्य द्रवति इति इन्द्रः

iii) इदं पश्यतीति इन्द्रः 'इदमदर्शमिति तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम ।

In this way the निरुक्ति of Vedic deities and the adjectives given to them are explained all along the Bhāṣya of Sri Madhvāchārya, Teekā of Sri Jayatīrtha and Mantrārtha Manjari of Sri Raghavendra tīrtha. Those who are familiar with Yāska's Nirukta and the nirukti of good many words given in Brahmaṇa, Araṇyaka and Upaniṣads do not feel tired to go through these niruktis, nor they will consider these as fanciful. The etemology given in Yāska's Nirukta and occuring in Brahmaṇa, Aranyaka etc do not conform to Pāninī's etemologies. These are not strictly grammatical etemologies. In that case Nirukta and Vyākaraṇa would not have been two different Vedangas. These etemology take us deep into the cultural and prehistorical ideas symbolised by these expressions. These Niruktas are schattered over the entire vedic literature. Several of these must have been preserved orally also. Yāska has compiled some

of these. He indicates that there were similar works before him. Sri Madhvāchārya refers to an older Nirukta called Vyāsa Nirukta. Yāska's Nirukta is not Vedanga Nirukta, nor Paṇinī's Vyākaraṇa is Vedānga Vyākaraṇa. The Vedānga Nirukta and Vedanga Vyākaraṇa are mentioned in Ātharvaṇa Upaniṣat. Vedāngas as such are mentioned still earlier. The Vedānga Nirukta is to be found in the very Veda, particularly, in Brāhmaṇa and Araṇyaka. These need not be considered as fanciful simply on the ground that these do not conform to Paṇinī's rules. Sri Madhvāchārya's explanation of the names of Vedic deities and other Vedic words should be comprehended with this background and also the background of his philosophical approach.

Further, Sri Madhva Bhāṣya's commentators have also fully utilised Paṇinī's grammer to explain the names of Vedic deities and other Vedic words since Pāṇini's grammer has been commanly respected. In this effort the nicities explained need not be taken as over laboured since Philosophical explanation needed such nicities. Intellectual exercise at high level may look over laboured to an ordinary man but the scholars should look at it from the angle of driving point.

Mahāmahopadhyaya
**Prof. K.T. Pandurangi**
Former Prof. of Sanskrit,
Bangalore University.

# ಮುನ್ನುಡಿ

ಶ್ರೀಮನ್ ಮಧ್ವಾಚಾರ್ಯರು ವಿರಚಿಸಿದ 37 ಗ್ರಂಥಗಳು ಸರ್ವಮೂಲ ಗ್ರಂಥ-ಗಳೆಂದು ಪ್ರಸಿದ್ಧವಾಗಿವೆ. ಇವುಗಳಲ್ಲಿ 1) ಗೀತಾಪ್ರಸ್ಥಾನ 2) ಉಪನಿಷತ್ ಪ್ರಸ್ಥಾನ 3) ಸೂತ್ರಪ್ರಸ್ಥಾನ 4) ಋಕ್‌ಪ್ರಸ್ಥಾನ, 5) ಇತಿಹಾಸಪುರಾಣಗಳು ಎಂದು ವಿಂಗಡಿಸ-ಲಾಗಿದೆ. ಸಕಲ ಶಾಸ್ತ್ರಗಳ ಸಾರರೂಪವಾದದ್ದೇ ಸರ್ವಮೂಲ ಗ್ರಂಥ. ಸರ್ವಮೂಲ-ದಲ್ಲಿ ಎಲ್ಲವೂ ವಿಲಕ್ಷಣ, ಜಿಜ್ಞಾಸುವಿಗೆ ಆಳವಾದ ಚಿಂತನೆಯಲ್ಲಿ ಮುಳುಗಿಸುವ ದಶಪ್ರಕರಣಗಳು, ಉಪನಿಷತ್ತಿನ ಬಗ್ಗೆಯ ಹೊಸ ಬೆಳಕನ್ನು ಚೆಲ್ಲುವ ಉಪನಿಷತ್-ಪ್ರಸ್ಥಾನ, ಪರವಿದ್ಯೆ ಎನಿಸಿದ ಬ್ರಹ್ಮಸೂತ್ರಗಳಿಗೆ ಭಾಷ್ಯ ಲಕ್ಷಣಗಳನ್ನು ಒಳಗೊಂಡ ಸೂತ್ರಪ್ರಸ್ಥಾನ, ಭಾಗವತ, ಮಹಾಭಾರತಗಳ ಹಾಗೂ ಎಲ್ಲ ಪುರಾಣಗಳ ಅರ್ಥವನ್ನು ನಿರ್ಣಯಿಸುವ ಇತಿಹಾಸ ಪುರಾಣಪ್ರಸ್ಥಾನ, ವೇದಮಂತ್ರಗಳಿಗೆ ಅಧ್ಯಾತ್ಮಪರವಾದ ಅರ್ಥವನ್ನು ಕೊಡುವ ಋಕ್‌ಪ್ರಸ್ಥಾನ, ಕೃಷ್ಣನ ನಿಜವಾದ ಅಭಿಪ್ರಾಯವನ್ನು ತಿಳಿಸುವ ಗೀತಾಪ್ರಸ್ಥಾನ, ನಿತ್ಯದ ಅನುಷ್ಠಾನಕ್ಕೆ ಬೇಕಾದ ತಂತ್ರಸಾರಾದಿಗಳು, ಹೀಗೆ ಆಚಾರ್ಯರ ಗ್ರಂಥರಾಶಿ ನಮಗೆ ಎಲ್ಲರೀತಿಯಲ್ಲಿ ಉಪಕಾರವನ್ನು ಮಾಡಿದೆ.

ಪ್ರಕೃತ ದ್ವೈತವೇದಾಂತ ಸಂಸ್ಥೆಯು ಸರ್ವಮೂಲಗ್ರಂಥಗಳ ಮೂಲಮಾತ್ರ ಪ್ರಕಟಿಸುವ ಯೋಜನೆಯನ್ನು ಕೈಗೆತ್ತಿಕೊಂಡಿದೆ. ಅದರ ಮೂಲಕವಾಗಿ ಮೊದಲನೆಯ ಭಾಗವಾಗಿ ಗೀತಾಪ್ರಸ್ಥಾನ ಹಾಗೂ ಋಕ್‌ಪ್ರಸ್ಥಾನವು ಪ್ರಕಾಶನಗೊಳ್ಳುತ್ತಿದೆ. ಗೀತಾಭಾಷ್ಯ ಆಚಾರ್ಯರ ಕೃತಿಗಳಲ್ಲಿ ಮೊದಲನೆಯದು. ಆದ್ದರಿಂದ ಇದನ್ನೇ ಮೊದಲ ಸಂಪುಟದಲ್ಲಿ ಪ್ರಕಟಪಡಿಸುತ್ತಿದ್ದೇವೆ. ನಾರಾಯಣ ಪಂಡಿತಾಚಾರ್ಯರು ಸುಮಧ್ವವಿಜಯದಲ್ಲಿ ತಿಳಿಸಿದಂತೆ गीतातात्पर्यभाष्याभ्यां आभ्यां विश्वं प्रकाशते ಸೂರ್ಯಚಂದ್ರರಂತೆ ನಮಗೆ ಗೀತೆಯ ಮೇಲೆ ವಿಶೇಶ ಬೆಳಕನ್ನು ಚೆಲ್ಲಿವೆ. ಇದರ ಜೊತೆಗೆ ಇನ್ನೊಂದು ಋಕ್‌ಪ್ರಸ್ಥಾನ. ಇದರ ವಿಶೇಶ- ಆಚಾರ್ಯರು ಋಗ್‌ಭಾಷ್ಯವನ್ನು ರಚಿಸಿದ್ದಿಲ್ಲಾ ಎಂದಾಗಿದ್ದರೆ ''सर्वे वेदा: यत्पदमामनन्ति'' वेदैश्च सर्वै: अहमेव वेद्य: ಎಂಬ ಪ್ರುತಿಸ್ಮೃತಿಯಲ್ಲಿ ಹೇಳಿದ ಸರ್ವವೇದ ಭಗವತ್ ಪರ ಎಂಬ ಪ್ರಮೇಯವೇ ಸಿದ್ದವಾಗುತ್ತಾ ಇರಲಿಲ್ಲ.

40 ಸೂಕ್ತಗಳಿಗೆ ಭಾಷ್ಯವನ್ನು ರಚಿಸುವ ಮೂಲಕ ಆಚಾರ್ಯರು ವೇದಗಳಿಗೆ ಅರ್ಥ ಮಾಡುವುದರ ಬಗೆಗೆ ನಮಗೊಂದು ದಿಗ್ದರ್ಶನವನ್ನು ಮಾಡಿದ್ದಾರೆ. त्रयोर्था: सर्व वेदेषु ಎಂಬ ಮಾತನ್ನು ಉಲ್ಲೇಖಿಸಿದವರು ಶ್ರೀಮದಾಚಾರ್ಯರು. आध्यात्मिक आधिदैविक, आधिभौतिकವೆಂಬ ಮೂರು ಬಗೆಯ ಅರ್ಥವನ್ನು ಪ್ರತಿಯೊಂದು ಮಂತ್ರದಲ್ಲಿ ತೋರಿಸಿರುವವರು ಆಚಾರ್ಯರು.

ಇಂಥಹ ಕ್ಲಿಷ್ಟವಾದ ಎರಡು ಪ್ರಸ್ಥಾನಗಳು ಮೊದಲನೆಯ ಭಾಗದಲ್ಲಿ ಪ್ರಕಟಿತ-ಗೊಳ್ಳುತ್ತವೆ. ಇದರ ಸಂಪಾದನಾಕಾರ್ಯವನ್ನು ನಮ್ಮ ಸಂಸ್ಥೆಯ ಸಂಶೋಧಕರು ಹಾಗೂ ಹಿರಿಯ ವಿದ್ವಾಂಸರೂ ಆದರೆ ಡಾ. ಮಾಳಗಿ ರಾಮಾಚಾರ್ಯರನ್ನು ನಾನು ವಿಶೇಶವಾಗಿ ಅಭಿನಂದಿಸುತ್ತೇನೆ. ಅದರಂತೆ ಇನ್ನೊಬ್ಬರು ನಮ್ಮ ಸಂಸ್ಥೆಯ ಖಜಾಂಚಿ-ಗಳೂ ಆದ ಡಾ. ಎಸ್.ಆರ್. ಪಾಂಡುರಂಗಿಯವರು, ಇವರು ಮೊದಲಿನಿಂದಲೂ ಸಂಸ್ಥೆಯ ಎಲ್ಲ ತರಹದ ಜವಾಬ್ದಾರಿಗಳ ಜೊತೆಗೆ ಗ್ರಂಥಸಂಪಾದನೆಯಲ್ಲಿಯೂ ತಮ್ಮನ್ನು ತೊಡಗಿಸಿಕೊಂಡಿದ್ದಾರೆ. ಅವರಿಗೂ ನನ್ನ ವಿಶೇಶವಾದ ಅಭಿನಂದನೆಗಳು.

**ಡಾ. ಸತ್ಯಧ್ಯಾನಾಚಾರ್ಯ ಕಟ್ಟಿ**
*ಉಪಾಧ್ಯಕ್ಷರು,* ದ್ವೈತವೇದಾಂತ ಅಧ್ಯಯನ
ಮತ್ತು ಸಂಶೋಧನ ಪ್ರತಿಷ್ಠಾನ, ಬೆಂಗಳೂರು.

श्रीः

# प्रस्तावना

भारतदेशे आध्यात्मिकक्षेत्रे प्रस्थानत्रयं विशिष्टस्थानं प्राप्नोति । प्रस्थानत्रयमवलम्ब्यैव समग्रतत्त्वज्ञानं प्रवृद्धम् । उपनिषदः भगवद्गीता ब्रह्मसूत्राणि इति प्रस्थानत्रयम् ।

तत्रापि भगवद्गीता विश्वमान्या । सर्वेषाम् आस्तिकानाम् अतिप्रियोऽयं ग्रन्थः । गात्रे ह्रस्वापि गीता तात्विकविषये त्रिविक्रमरूपा । आध्यात्मिक-तत्त्वप्रतिपादने तत्समानः ग्रन्थः नान्योऽस्तीत्युक्ते अतिशयोक्तिः न स्यात् ।

भगवद्गीता महाभारतान्तर्गता । महाभारतकर्ता भगवान् वेदव्यासः । महाभातरम् [1]अर्थे परिमाणे च विश्वमान्यम् । महाभारतं कृष्णकथारूपम् । गीता तु कृष्णकृतोपदेशरूपा । भगवद्गीता वामनरूपा महाभारतन्तु त्रिविक्रमरूपम् । युद्धाद्विमुखम् अर्जुनं प्रति उपदिष्टा गीता । महाभारतन्तु [2] समग्रजगतः सज्ज्ञानाय भगवता वासिष्ठकृष्णेन रचितम् ।

महाभारतस्य महिमा गीतातात्पर्ये श्रीमन्मध्वाचार्यैः समीचीनतया प्रतिपादिता । महाभारतं सर्वप्रकारेण विशिष्टा कृतिः । स च इतिहासग्रन्थः । तस्य कर्ता वेदव्यासः । सः सर्वानपि विषयान् तत्र प्रतिपादितवान् । अत एव [3] शब्दप्रपञ्चे सर्वं व्यासोच्छिष्टं इति प्रथा वर्तते ।

[4] साक्षाद्विष्णुरूपिणा वेदव्यासेन कृतत्वादेव महाभारतं सर्वश्रेष्ठग्रन्थः इति प्रख्यातः ।

१. महत्वात् भारतत्वाच्च महाभारतमुच्यते । गीतातात्पर्यम् ।

२. एकान्ते कथयन्नपि व्यासरूपेण तदेव लोके प्रकाशयिष्यति । गीतातात्पर्यम् ।

३. व्यासोच्छिष्टं जगत् सर्वम् ।

४. कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ।
को ह्यन्यः पुण्डरीकाक्षात् महाभारतकृद्भवेत् ॥ महाभारतम् ।

न केवलं महाभारतकर्ता वेदव्यासः किन्तु महाभारतप्रधानपात्रधारी च । कुरुपाण्डवजनकयोः धृतराष्ट्रपाण्ड्वोः जन्मदाता च । तथा च कौरवपाण्डवाः वेदव्यासस्य पौत्राः ।

महाभारतं सर्वैरपि श्रुतम् । किन्तु [5]एकेनापि सम्यक् न ज्ञातम् । अत एव महाभारतं "पञ्चमो वेदानां वेदः" इति च प्रथा ।

अपि च महाभारतं [6]सकलशास्त्रसारभूतम् अत एव तत्रान्तर्गत-भगवद्गीताविष्णुसहस्रनामनी सर्वैरपि ज्ञेये पाठ्ये च इति कूर्मपुराणे उक्तम् ।

किञ्च अर्थापेक्षयाऽपि महाभारतं जगति अद्वितीयम् । [7]महाभारतं प्रतिश्लोकं प्रतिपदं च अन्यूनदशार्थोपेतम् । भारतान्तर्गतविष्णुसहस्रनाम-स्तोत्रं प्रतिनाम शतार्थोपेतम् । गीताऽपि तथैव । [8]धर्मार्थकाममोक्ष-रूपपुरुषार्था अपि महाभारते सुष्ठु प्रतिपादिताः ।

महाभारतं [9]पारिजातपुष्पम् । गीता तु पुष्पान्तर्गतं मधु इति श्रीमदाचार्यैः गीताभाष्ये उक्तम् ।

अपि च [10]सर्वाः उपनिषदः गावः गोपालनन्दनः दोग्धा । पार्थः वत्सः गीतामृतम् क्षीरम् । सुधीः भोक्ता इत्यप्युक्तम् ।

---

५. ब्रह्माऽपि तत्र जानाति ईषत्सर्वोऽपि जानीते । उपनारदीयपुराणम् ।

६. भारतं सर्वशास्त्रेषु भारते गीतिका वरा ।
विष्णोः सहस्रनामापि ज्ञेयं पाठ्यं च तद्द्वयम् ॥ महाकौर्मे ।

७. त्रयोऽर्थाः सर्ववेदेषु दशार्थाः सर्वभारते ।
विष्णोः सहस्रनामाऽपि निरन्तरशतार्थकम् ॥ स्कान्दपुराणम् ।

८. धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न कुत्रचित् ॥ महाभारतम् ।

९. भारतपारिजातमधुभूताम् । गीताभाष्यम् ।

१०. सर्वोपनिषदो गावः दोग्धा गोपालनन्दनः ।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत् ॥

किञ्च महाभारते एतदप्युक्तम् - [11]गीता गङ्गा गायत्री गोविन्दः इति एतच्चतुष्टयं यो हृदये धरति सः पुनर्जन्म न प्राप्नोति इति ।

## गीताभाष्यम्

गीताभाष्यं गीतातात्पर्यम् इति व्याख्यानद्वयं श्रीमदानन्दतीर्थ-भगवत्पादैः रचितम् । ''[12]गीतातात्पर्यभाष्याभ्याम् आभ्यां विश्वं प्रकाश्यते ।'' इति सुमध्वविजये श्रीनारायणपण्डिताचार्यैः उक्तम् ।

गीताभाष्यं श्रीमदाचार्यैः प्रप्रथमतया रचितम् । अयं च विषयः [13]अणुमध्वचरिते [14]ग्रन्थमालिकास्तोत्रे च सुस्पष्टः ।

श्रीमदाचार्याः प्रप्रथमतया गीताभाष्यं निर्माय सञ्चारत्वेन वदरिकाश्रमं गताः तत्रत्यनारायणाय स्वकृतं भाष्यम् उपायनरूपेण समर्पयामासुः । भगवान् वेदव्यासः भाष्यमिदं दृष्ट्वा सन्तुष्टः [15]मङ्गलपद्ये विद्यमानस्य ''शक्तितः'' इति पदस्य स्थाने ''लेशतः'' इति पदं निवेशयितुम् आज्ञापयामास इति कथा [16]सुमध्वविजये प्रसिद्धा । ''गीतायाः समग्रार्थवर्णते त्वं समर्थ एव अतः शक्तितः इति पदप्रयोगः मास्तु । तथा

---

११. गीता गङ्गा च गायत्री गोविन्देति हृदि स्थिते ।
चतुर्गकारसंयुक्ते पुनर्जन्म न विद्यते ॥ महाभारतम् ।

१२. गीतातात्पर्यभाष्याभ्यां आभ्यां विश्वं प्रकाश्यते ।
गोगणैरप्रतीकारैः अर्केन्दुभ्यामिवाधिकम् ॥ सुमध्वविजयः

१३. गीताभाष्यं विधायादौ दृष्ट्वा च वदरीतटे ।
वेदव्यासस्य चादेशात् सूत्रभाष्यमथाकरोत् ॥ अणुमध्वचरितम्

१४. गीताभाष्यं विधायादौ प्रथमं तुष्टिदं हरेः ॥ ग्रन्थमालिकास्तोत्रम् ।

१५. देवं नारायणं नत्वा सर्वदोषविवर्जितम् ।
परिपूर्णं गुरूंश्चान् गीतार्थं वक्ष्यामि शक्तितः । (लेशतः) गीताभाष्यम्

१६. एतदर्थमतिसूक्ष्ममपि त्वं शक्त एव न यदात्थ समस्तम् ।
तेन लेशत इतीह पदं स्यात् इत्यगयत जगज्जनकेन ॥ सुमध्वविजयः ६-४

सति तव समग्रगीतार्थवर्णने शक्तिः नास्तीति जनाः जानीयुः अतः तत्पदस्थाने लेशतः इति पदं निक्षिप्यताम्'' इति वेदव्यासाभिप्रायं ज्ञात्वा आचार्याः तथा चक्रुः ।

प्रदक्षिणावर्तशङ्खसमानस्य भाष्यस्य एकाक्षरलेखने गङ्गातीरे देवस्थान-निर्माणपुण्यं लभते । तादृशमहिमायुक्तं समग्रं भाष्यं सत्यतीर्थयतिः अलिखत् इति [17] सुमध्वविजये उक्तम् ।

गीताभाष्यस्यारम्भे उपोद्घाततया गीतायाः प्रामाण्यसिद्ध्यर्थं महा-भारतस्य महिमा सप्रमाणं विस्तृततया उपपादितः । देवतानां प्रार्थनानुसारेण वेदव्यासनाम्ना भूमाववतीर्णः साक्षात् नारायणः वेदविभागं कृत्वा, तदर्थनिर्णयाय ब्रह्मसूत्राणि विरचय्य, येषां स्त्रीशूद्रब्रह्मबन्धूनां वेदाधिकारः नास्ति । तेषामपि मोक्षसाधनार्थं महाभारतम् अचीक्लृपत् । इत्युक्त्वा तत्प्रामाण्यसिद्ध्यर्थम् अनेकानि प्रमाणानि उदाहृतानि ।

ततः ''सर्वभारतार्थसङ्ग्रहां वासुदेवार्जुनसंवादरूपां भारतपारिजात-मधुभूतां गीताम् उपनिबबन्ध ।'' इति गीतामहत्वं प्रस्तूय, ततः द्वितीयाध्याये ''अशोच्यानन्वशोचस्त्वम्'' इति श्लोकमारभ्य व्याख्या कृता । प्रतिश्लोकस्य भाष्याभावेऽपि प्रतिश्लोकार्थः भाष्ये निरूपितः । अनेकेषां पारिभाषिकशब्दानाम् अर्थः स्वारस्यतया उपवर्णितः । अनेकेषां श्लोकानामपि आचार्योक्तः अर्थः चिन्तकानामपूर्व एव । भगवान् साकार एव न तु निराकार इति विश्वरूपदर्शनाध्याये प्रतिपादितम् । गीतायां फलनिषेधः अमुख्यस्वर्गादिफलनिषेध एव न तु ज्ञानभक्त्यादीनां मुख्यफलानां निषेधः । कर्माचरणम् अज्ञानिनामिव ज्ञानिनामप्या-वश्यकम् । निष्कामकर्मानुष्ठानम् अज्ञानिनाम् अपरोक्षज्ञानाय ज्ञानिनान्तु

१७. गाङ्गमङ्गलतरङ्गभङ्गदप्रान्तसुस्थिहरिवेश्मकृत् समः ।
यद्गतैकतमवर्णलेखकः सत्यतीर्थ इह भाष्यमालिखत् ॥
सुमध्वविजयः ९-१३

मोक्षे आनन्दातिशयाय भवति । द्वेषः न मुक्तिसाधनः । भक्तिरेव मुक्तेः साधनम् इत्यादिविषयाः सप्रमाणं भाष्ये निरूपिताः ।

दशमाध्याये विभूतियोगे चतुर्विधाः विभूतयः इति इतरमताचार्यैः अनिरूपितः नूतनार्थः आचार्यैः निरूपितः ।

द्वादशाध्याये - भगवतः उपासना श्रेष्ठा वा अव्यक्तोपासना श्रेष्ठा वा इति अर्जुनप्रश्नस्य सगुणोपासना श्रेष्ठा वा, निर्गुणोपासना श्रेष्ठा वा ? इति अद्वैतिनां विवरणं निराकृत्य, नारायणोपासना श्रेष्ठा वा, लक्ष्म्याः उपासना श्रेष्ठा वा इति अर्जुनस्य प्रश्नाभिप्रायः इति सप्रमाणं निरूप्य महालक्ष्म्याः उपासनापेक्षया नारायणोपासना एव श्रेष्ठा इति श्रीकृष्णाभिप्रायः इति स्पष्टं निरूपितम् । एवमादायः अनेके विशेषाः भाष्ये उपलभ्यन्ते ॥

## गीतातात्पर्यनिर्णयः

श्रीमदानन्दतीर्थभगवत्पादाचार्यैः भगवद्गीतामधिकृत्य अपरं व्याख्यानं रचितम् । तस्य नाम गीतातात्पर्यनिर्णय इति 'गीतातात्पर्यम्' इत्यपि तस्यैव नामान्तरम् । यथा ब्रह्मसूत्राण्यधिकृत्य ब्रह्मसूत्रभाष्यं निर्माय तदनन्तरम् अनुव्याख्यानमपि रचितमाचार्यैः एवमेव गीताभाष्यं विरचय्य गीतातात्पर्यमपि रचितमाचार्यैः ।

तत्र यथा अनुव्याख्याने ब्रह्मसूत्रभाष्यरचनेन गतार्थतामाशङ्क्य, ''स्वयं कृताऽपि तद्व्याख्या क्रियते स्पष्टतार्थतः'' । इति भाष्यरचनानन्तरमपि अनुव्याख्यानप्रणयनस्य सार्थक्यं प्रतिपादितम् । तथा अत्रापि ''गीतातात्पर्यमुच्यते'' इति प्रतिज्ञयैव गीताभाष्यरचनानन्तरमपि गीतातात्पर्यरचनस्य आवश्यकतां स्वयमेवाचार्यः अवोचत् । गीतातात्पर्यटीकाकाराः जयतीर्थमहाभागा अपि ''स्वयमेव गीताभाष्यस्य कृतत्वात् किं पुनरारम्भेण इत्यतः ''तात्पर्यम्'' इत्युक्तम् । व्याख्यातत्वेऽपि गीतायाः

शिष्याणां बुद्ध्यारोहार्थं शब्दानुकरणाद्यन्तरेण पुनस्तात्पर्यमेवोच्यत इति भावः'' इति उक्तवन्तः ।

अनेनेदं ज्ञायते यत् गीताभाष्य एव संक्षेपतः सूचितस्य, तत्र तत्र विक्षिप्य उक्तस्य वा, क्वचिच्च भाष्ये अनुक्तस्यैव वा गीतायास्तात्पर्यस्य स्फुटीकरणम्, अपव्याख्याननिराकरणेन स्वोक्तार्थस्य दृढीकरणं च गीतातात्पर्ये क्रियते इति ।

गीताभाष्यस्य आदौ, ''महाभारतान्तर्गतत्वात् भगवद्गीतायाः, महाभारतस्य प्रामाण्यादिसिद्धौ भगवद्गीताया अपि प्रामाण्यं सिद्ध्यति'' इति अभिप्रायेण महाभारतप्रामाण्यं साधयितुकामेन भगवता आचार्येण महाभारतसंहिता तावत् ''सर्ववेदार्थोपबृंहिता तदनुक्तकेवलेश्वरज्ञान-दृष्टार्थयुक्ता च'' इति उपवर्णितम् । अनन्तरं गीतेयं ''सर्वभारतार्थ-सङ्ग्रहात्मिका भारतपारिजातमधुभूता'' च इति गीतायाः सर्वशास्त्रसारत्वं सूचितम् ।

गीतातात्पर्ये तु आरम्भे गीतामवतारयितुकामेन आचार्येण ''स्व-विहितवृत्या भक्त्या भगवदाराधनमेव परमो धर्मः तद्विरुद्धः सर्वोऽप्यधर्मः भगवदधीनत्वात् सर्वस्य इति बोधयति भगवान्नारायणः'' इति गीता-प्रतिपाद्यः सर्वशास्त्रार्थसारः उक्तः ।

अत्रैव गीतातात्पर्ये ''स्वधर्मेणैव भगवदाराधनस्यैव कर्तव्यत्वं, तदन्यस्य त्याज्यत्वम्, विष्णुभक्तेः सर्वसाधनोत्तमत्वम्, ज्ञानिनोऽपि मोक्षस्य भगवदधीनत्वं, भगवतः सर्वस्मात् भेदः, सर्वस्य भगवदधीनत्वं, भगवतः सर्वगुणपरिपूर्णत्वं, सर्वशास्त्राणां भगवत्परत्वम् इत्यादयः प्रमेयाः गीतायां निरूपत्यन्ते'' इति तत्तत्प्रमेयप्रतिपादकगीताश्लोकोदाहरणेन अत्यन्तसमीचीनतया आचार्यैः प्रदर्शितम् ।

एवमादावेव गीतातात्पर्यस्य गीताभाष्यस्पष्टीकरणत्वं श्रीमदाचार्यैः प्रतिपादितम् ।

''नासतो विद्यते भावः'' इति श्लोकव्याख्यानसन्दर्भे, गीताभाष्ये असच्छब्दस्य प्रकृतिपरत्वं, सच्छब्दस्य ब्रह्मपरत्वम्, 'असतः अभावः' इति पदच्छेदं स्वीकृत्य न केवलमात्मा नित्यः किन्तु प्रकृतिः ब्रह्म च नित्यमिति नित्यत्वसाधने दृष्टान्तप्रदर्शनपरतया उपपादितः । गीतातत्पर्ये तु सदसच्छब्दयोः सत्कर्मासत्कर्मपरत्वं भावाभावशब्दयोश्च सुखदुःखपरत्वं प्रमाणपुरस्सरं प्रदर्श्य, भगवद्द्वेषिहननरूपस्वधर्मस्य सत्कर्मत्वात् सत्कर्मणः सकाशात् दुःखस्य, असत्कर्मणः सकाशात् सुखस्य च अभावात् बन्धुहननादिरूपात् युद्धात् परलोके दुःखशङ्कया युद्धत्यागो न कर्तव्यः इति मनोहरतया व्याख्या प्रदर्शिता । एवं भाष्यानुक्तार्थवर्णन-पुरस्सरं गीतायाः बह्वर्थगर्भितत्वं तत्र तत्र प्रदर्शयन्त्याचार्या ।

गीतायां तत्र तत्र उक्तस्यैव पुनरुक्तिरस्तीति भाति । पुनरुक्तेः दोषत्वं नास्तीत्यभिमानेन वा पुनरुक्तिमेवालक्षयन्तो वा तत्परिहारे केचन नैव प्रवर्तन्ते । श्रीमदाचार्यास्तु सर्वशास्त्रोत्तमत्वेन प्रथिते गीताशास्त्रे पुनरुक्ते-रवकाशः यथा न स्यात्तथा व्याख्यास्यन्ति । पुनरुक्तिवदाभासमानाः भागाः वस्तुतः अतिमहत्वपूर्णप्रमेयाणां प्रतिपादकाः इत्यपि प्रदर्शयन्ति ।

गीतातात्पर्यनिर्णये ''शब्दनिर्णया''ख्यं कोशविशेषं तत्र तत्र उदाहर-न्त्याचार्याः । अयं च कोशः इदानीं नोपलभ्यते । तथापि अत्यन्त-समुचितव्याख्यानोपयोगीति आचार्याः तं कोशमुदाहरन्ति । दशमेऽध्याये '' बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः'' । इति श्लोके 'बुद्धिः ज्ञानम्' इति पर्यायशब्दप्रयोग इति भाति । अत्राचार्यास्तु शब्दनिर्णय-कोशमुदाहृत्य बुद्धिशब्दस्य अन्तःकरणार्थत्वम् उपपाद्य अपर्यायत्वं समर्थितवन्तः । ''बुद्धिर्बोधनिधित्वात् तदन्तः करणमुच्यते'' इति शब्द-

निर्णयः, अन्तःकरणस्य बुद्धिशब्दवाच्यत्वे बोधनिधित्वरूपं प्रवृत्तिनिमित्तत्वमपि वदति ।

एवं गीतातात्पर्ये नूतनानां बहूनां विषयाणामुपपादितत्वात् 'गीतातात्पर्यभाष्याभ्याम् आभ्यां विश्वं प्रकाश्यते' । इति नारायणपण्डिताचार्योक्तिः अर्थपूर्णा भवति ।

## भगवद्गीतायाः व्याख्यानपरम्परा

भागवद्गीताभाष्यं, गीतातात्पर्यनिर्णयः इति द्वयं श्रीमदानन्दतीर्थभगवत्पादैः कृतं व्याख्यानम् ।

श्रीमज्जयतीर्थश्रीमच्चरणास्तु गीताभाष्यमधिकृत्य ''प्रमेयदीपिकाख्यां, गीतातात्पर्यनिर्णयमधिकृत्य न्यायदीपिकाख्यां च व्याख्यां विस्तारतया लिखितवन्तः ।

गीताभाष्यप्रमेयदीपिकामधिकृत्य, श्रीरघूत्तमतीर्थाः, श्रीविजयीन्द्रतीर्थाः, श्रीराघवेन्द्रतीर्थाः, श्रीसत्यनाथतीर्थाः एवमादयः षोडशसंख्याकाः ज्ञानिनः टिप्पणीः रचितवन्तः ।

गीतातात्पर्यन्यायदीपिकामधिकृत्य, श्रीविजयीन्द्रतीर्थाः, श्रीराघवेन्द्रतीर्थाः, श्रीसत्यनाथतीर्थाः इत्यादयः महानुभावाः टिप्पणीः रचितवन्तः ।

एतदतिरिक्ततया श्री विद्याधिराजतीर्थाः, श्रीविजयीन्द्रतीर्थाः, श्रीराघवेन्द्रतीर्थाः, श्रीविश्वेश्वरतीर्थाः इत्यादयः भगवदनुग्रहपात्रीभूताः महान्तः समग्रगीतामधिकृत्य, भाष्यतात्पर्यानुसारेण स्वतन्त्रतया गीताविवृतिः, गीतार्थसङ्ग्रहः, भगवद्गीताविवरणम् इत्यादि विविधनाम्ना च व्याख्यानानि कृतवन्तः ।

एवं भगवद्गीताव्याख्यानप्रवाहः भारतभूमौ एव न, किन्तु समग्रे प्रपञ्चे निरन्तरं अविच्छिन्नतया प्रवहति ॥

# ऋग्भाष्यम्

## वेदाः

''सदागमैकविज्ञेयं समतीतक्षराक्षरम्'' इति विष्णुतत्वनिर्णयमङ्गलपद्ये ''भगवान् नारायणः सदागमैकविज्ञेयः'' इति श्रीमदानन्दतीर्थभगवत्पादैः प्रतिज्ञातम् । तस्मिन् एव ग्रन्थे भगवतः सदागमैकविज्ञेयत्वं प्रतिपादितं च ।

तत्र आगमः द्विविधः अपौरुषेयः पौरुषेयश्चेति । अपौरुषेयागमः चतुर्विधः । वेदः उपनिषत् ब्राह्मणम् आरण्यकं चेति । वेद एव श्रुतिः इत्यपि व्यवह्रियते । ''वेदास्ते नित्यविन्नत्वात् श्रुतयश्चाखिलैः श्रुतेः'' । इति प्रमाणानुसारेण नित्यविन्नत्वात्=शश्वदेकप्रकारेण वर्तमानत्वात् वेदाः । अखिलैः श्रुता एव न तु कृताः इति श्रुतयः ।

ऋग्वेदः यजुर्वेदः सामवेदः अथर्ववेदः इति चत्वारः वेदाः । वेदास्तावदपौरुषेयाः अतः पुरुषदोषनिबन्धनदौषाः वेदेषु न सन्ति । अपौरुषेयत्वादेव तेषां परमं प्रामाण्यम् ।

## वेदाध्ययनस्यावश्यकता

''धर्मो विश्वस्य जगतः प्रतिष्ठा'' सनातनधर्म एव लोकं नाशा द्रक्षति । वेदः धर्मस्य मूलम् । ''वेदोऽखिलो धर्ममूलम्'' तथा च धर्ममूलभूतं वेदाध्ययनं मानवानामावश्यकम् ।

वेदाध्ययनमेव तपः इति वेदे एवोक्तम्-

''स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः । तद्धि तपः तद्धि तपः । ऋभवः मानवजन्मन्येव तपः तप्त्वा देवाः सम्भूता इति ऋग्वेदे वर्तते । ज्ञानरूपवृक्षस्य सर्वासां शाखानां वेदाः मूलानि भवन्ति ।

भारतीयतत्त्वशास्त्रस्य, सनातनधर्मस्य, संस्कृतेश्च मूलं वेदाः । ऋषिपरम्परया गुरूच्चारणानूच्चारणपूर्वकाध्ययनेन वेदप्रवाहः अद्यावधि निस्सृतः । अत एव तेषां वेदानां ''श्रुतयः'' इति नामान्तरम् ।

''त्रयोर्थाः सर्ववेदेषु'' इति वचनं प्रसिद्धम् । ''त्र्यर्थतां श्रुतिषु वित्त दशार्थम्'' इति सुमध्वविजयेऽपि नारायणपण्डिताचार्यैः वेदानां त्र्यर्थत्वं प्रतिपादितम् ।

## ऋग्भाष्यम्

श्रीमन्मध्वाचार्याः ऋग्वेदस्य चत्वारिंशत् (४०) सूक्तानां भाष्यं विरचय्य वेदार्थाध्येतॄणां मार्गदर्शका अभूवन् । तावत्पर्यन्तं तत्वचिन्तकेषु वेदानाम् आध्यात्मिकपरतया चिन्तनं नासीदेव । वेदानां त्र्यर्थतायुतत्वं मध्वाचार्याणामेव अनुदानम् । आध्यात्मिकः, आदिभौतिकः, आदि-दैविकः इति त्रिविधार्थाः प्रतिमन्त्रेऽपि वर्तन्ते ।

अग्निसूक्तं, वायुसूक्तम् इत्यादिसूक्तेषु अग्न्यादयः यदि प्रतिपाद्याः तदा स अर्थः आधिभौतिकार्थः । तदेव सूक्तम् अग्न्यादिदेवानां अग्र्यत्वादि-महिमादातुः अग्निनामकभगवत्परतया व्याख्यायते तदा सः अर्थः आधि-दैविकार्थः । तदेव सूक्तम्, अग्निसूक्तप्रतिपाद्यः भगवान् अस्मदादिशरीरेषु स्थित्वा सर्वान् नियमयति इति यदा व्याख्यायते । तदा सः अर्थः आध्यात्मिकार्थः । इति सर्वेष्वपि मन्त्रेषु त्र्यर्थता वर्तते इति आचार्याः प्रप्रथमतया प्रत्यपादयन् ।

एतदप्युक्तं श्रीमदाचार्यैः, यत् - यथा अज्ञानिनः वेदार्थज्ञानपुरस्सरं निष्कामकर्माचरणेन अन्तःकरणशुद्धिः विरक्तिश्च भवति । तथा ज्ञानिनोऽपि निष्कामकर्मकरणेन भक्त्युद्रेको भवति । तेन च मोक्षे आनन्दवृद्धिर्जायते । एतादृशनिष्कामकर्मैव भगवतः प्रीतिकरं श्रेष्ठं भगवदाराधनं च । अतः अज्ञानिवत् ज्ञानिनापि वेदोक्तकर्म अनुष्ठेयम् ।

मुक्तस्तु न विधिबद्धः तथापि भगवत्प्रीत्यैव वेदोक्तकर्म करोति । वेदोक्तकर्मैव सनातनधर्म इति कथ्यते ।

ऋग्वेदे इन्द्रः, अग्निः, वरुणः इत्यादिशब्दाः प्रसिद्धाः ते सर्वेऽपि शब्दाः इन्द्रादिदेवेषु प्रसिद्धा अपि परममुख्यवृत्या भगवद्वाचकाः ।

'इदि परमैश्वर्ये' इति धातोः निष्पन्नः इन्द्रशब्दः । स्वर्गाधिपतिः इन्द्रः परमैश्वर्यवान् । अपारैश्वर्यवान् । अपाराधिकारवांश्चेत्यर्थः । स एव इन्द्रशब्दः इन्द्रान्तर्यामिणः विष्णोः वाचकश्चेत् इन्द्रस्यापि परमैश्वर्यप्रदः, अधिकारदाता च इन्द्रान्तर्यामी नारायणः इति भगवत एव इन्द्रशब्द-परममुख्यवाच्यत्वं सिद्ध्यति । इन्द्रस्यैव परमैश्वर्यवत्त्वे तद्दातुः तदन्तर्यामिणः परमैश्वर्यवत्त्वं किमु वक्तव्यम् । एवं परममुख्यवृत्या सर्वेऽपि शब्दाः विष्णुवाचकाः इति सर्वेषां शब्दानामपि आध्यात्मिकार्थः ऋग्भाष्ये श्रीमदाचार्यैः प्रमाणपुरस्सरं प्रतिपादितः ।

वेदानामर्थः सुलभतया ज्ञातुं न शक्यते पाणिनिव्याकरणेन वेदार्थज्ञानं दुश्शकम् । किन्तु वेदाङ्गज्ञानं वेदार्थज्ञानं प्रति मुख्य कारणम् । ''शिक्षा व्याकरणं छन्दः निरुक्तं ज्यौतिषं तथा । कल्पश्चेति षडङ्गानि'' ।। इति शिक्षाव्याकरणादिज्ञाने एव वेदार्थः सुगमः । वेदगतवाक्यानाम् अक्षराणां स्वराणां च बह्वर्थाः वर्तन्ते । कम्पस्वरस्यापि विशेषार्था वतन्ते इति श्री व्यासनिर्मितऋक्संहितोदाहरणपूर्वकम् आचार्यैः ऋग्भाष्ये प्रतिपादितम् ।

## पिष्टपशुयागः ।

''अश्वं नैव गजं नैव व्याघ्रं नैव च नैव च ।
अजापुत्रं वलिं दद्यात् देवो दुर्वलघातकः ।।'' इति

सुभाषितश्लोके अश्वादिप्राणिनिराकरणेन अजवलिः उक्तः । पूर्वं प्रायः सर्वेषु यागेषु पशुवलिः प्रसिद्धः पशुर्नाम अज एव ।

श्रीमदाचार्याः पशुबलिं निराकृत्य तत्स्थाने पिष्टपशुबलिं दद्यादिति निरूपितवन्तः । तदारभ्य पिष्टपशुयागः प्रसिद्धः । ''मा हिंस्यात् सर्वा भूतानि'' इति प्राणिहिंसां वेदः निषेधति । ''अहिंसा प्रथमं पुष्पम्'' इति पुराणवाक्यमपि अष्टसु भावपुष्पेषु मध्ये अहिंसा एव प्रथमं पुष्पम् इति वदति ।

यागेषु पशुबलिः देवानामिष्टः इति न मन्तव्यम् । यजुर्वेदे ''अमेध्या पशवः'' इति पशुबलिः निषिद्धः । तत्रैव ''तस्मादेतेषां नाश्नीयात्'' पशुमांसः न भक्षणीयः । ''पुरोडाशमनु निर्वपन्ति'' अन्नाहुतिरेव देवेभ्यः देया इति प्रतिपादितम् । भागवते तु ''न दद्यादामिषं श्राद्धे'' इत्यत्र श्राद्धे मांसार्पणं निषिद्धम् ।

''अजसंज्ञानि बीजानि छागं नो हन्तुमर्हथ'' । इति महाभारते - अज इति धान्यविशेषस्य नाम, तस्मात् धान्याहुतिमेवदद्यात् न पशुबलिः इति स्पष्टम् उपपादितम् ।

देवाः न हिंसाप्रियाः । नापि मांसलोलुपाः । यथा एकेनापि तुलसी-दलेन पूजितो देवः तुष्टो भवति । तथा याज्ञिकैः दत्तेन पिष्टपशुबलिनैव देवा तृप्ताः भवन्ति । श्रीरामः मांसं भक्षितवान् इत्यस्यापि, श्रीरामः पिष्टपशुयागं कृत्वा हुतशेषं भक्षितवान् इत्येवार्थः ।

## इतिहासपुराणानाम् आवश्यकत्वम् ।

**''इतिहासपुराणाभ्यां वेदं समुपवृंहयेत् ।**
**विभेत्यल्पश्रुताद्वेदः मामयं प्रचलिष्यति'' ॥**

इति महाभारते ''इतिहासपुराणानाम् अध्ययनं विना तेषां साहाय्यं विना वेदाध्ययनं न कुर्यात् । यदि तयोः साहाय्यं विना वेदाध्ययनं क्रियते तदा तादृशाध्ययनेन, ''अयं पुरुषः माम् अबद्धतया जानाति । अन्यानपि

जनान् दुष्टमार्गे नयति'' इति वेद एव बिभेति ।'' इति वेदाध्ययनं प्रति इतिहासपुराणज्ञानं कारणमिति सुस्पष्टम् उपपादितम् ।

ऋग्वेदेऽपि अयमेवार्थः सूच्यतयोक्तः - ''कः छन्दसां योगमावेद धीरः'' ? इति । वेदानां तात्त्विकार्थं को वा जानाति ? इति प्रश्नार्थः । न कोऽपि जानातीत्युत्तरम् ।

वेदार्थः केनापि न ज्ञायते चेत् तेषामध्ययनं किमर्थम् ? इति प्रश्नस्य तदेवोत्तरम् - ''कः धीरः छन्दसां योगमावेद'' इति । कः प्रजापतिः वेदानाम् अर्थं जानाति । कोऽसौ प्रजापतिः ? इति चेत् - ''ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः'' इति विष्णुसहस्रनामस्तोत्रे प्रजापतिः नारायणः इति स्पष्टीकृतम् । तथा च प्रजापतिशब्देन परममुख्यवृत्त्या वाच्यः विष्णुः समग्रस्यापि वेदस्यार्थं परिपूर्णतया जानाति । एवं पवमानसूक्ते ''पवमानः प्रजापतिः'' इत्युक्तत्वात् पवमानावतारभूतः श्रीमन्मध्वाचार्योऽपि अपरः प्रजापतिः । तथा च लक्ष्मीपतिः श्रीनारायणः, सर्वज्ञाचार्याः श्रीमध्वाचार्याः तावुभावपि प्रजापती वेदार्थं समीचीनतया जानीतः इति तस्य वेदवाक्यस्यार्थः ।

''श्रुतिस्मृती हरेराज्ञे'' इति प्रमाणानुसारेण सर्वा अपि श्रुतयः स्मृतयश्च भगवद्वचनानि । वेदैः भगवदादेशं ज्ञात्वा वेदोक्तधर्मानुष्ठानं कर्तव्यम् । वेदोक्तमार्गेण भगवतः आराधनम् उपासनं च कर्तव्यम् । तथा सति–

> **''काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।**
> **देशोऽयं क्षोभरहितः सज्जनास्सन्तु निर्भयाः ॥**
> **अपुत्राः पुत्रिणः सन्तु पुत्रिणस्सन्तु पौत्रिणः ।**
> **अधनास्सधनास्सन्तु जीवन्तु शरदां शतम्'' ॥**

इति भगवत्प्रार्थना सार्थकीभवति । वेदोक्तकर्मानुष्ठाने सकाले वृष्टि-

र्भवति । धनधान्यसमृद्धिश्च भवति । तेन च सन्ततेः वृद्धिः जायते । सन्ततिमन्तः वेदाध्ययनेन भगवदाराधनेन लोककल्याणकारणीभूता भवन्ति । इदमेकं जगच्चक्रम् - वेदाध्ययनेन यज्ञादिसत्कर्म सत्कर्मणा च सन्ततिः, सन्तत्या च वेदाध्ययनम् इति । एतज्जगच्चक्रं सर्वदा चलति चेत् तदा लोककल्याणम् । यदा च एतज्जगच्चक्रं स्तब्धम् । तदा लोकविनाशः । इति कृष्णेन गीतायामुक्तम् ।

**''अदुःखमितरत् सर्वं जीवा एव तु दुःखिनः ।**
**तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते ॥''**

जडपदार्थानां दुःखं नास्ति । जीवानामेव दुःखम् । जीवानां दुःखनिवारणाय करुणामयी वेदवाणी प्रवृत्ता । वेदवाणी नाम भगवतः दिव्यवाणी ।

**''यादृशी भावना यस्य सिद्धिर्भवति तादृशी ।''**

इति वाक्यानुसारेण विश्वासेन अनुष्ठिता वेदवाक् अस्मान् अनुदिनं रक्षति ॥

## कृतज्ञतासमर्पणम्

भगवद्गीताप्रतिपाद्याय तथा ऋग्वेदप्रतिपाद्याय भगवते नारायणाय अनन्तानि नमांसि समर्पयामि ।

गीताभाष्यगीतातात्पर्यऋग्भाष्यकर्तृभ्यः श्रीमदानन्दतीर्थभगवत्पादाचार्येभ्यः भूयांसि नमांसि अर्पये ।

शुभाशीर्वचनैः तथा अनुग्रहसन्देशेन च अस्माननुगृहीतवद्भ्यः द्वैतवेदान्ताध्ययनसंशोधनप्रतिष्ठानस्य संरक्षकेभ्यः तथा मार्गदर्शकेभ्यः, सदा पाठप्रवचनशीलेभ्यः, श्रीमन्न्यायसुधासमुद्रे अवगाहिभ्यः, पूज्येभ्यः,

श्रीमदुत्तरादिमठाधीशेभ्यः श्री सत्यात्मतीर्थश्रीमच्चरणेभ्यः साष्टाङ्गं भूयांसि नमांसि समर्पयापि ।

ग्रन्थमिमं सम्पादयितुम् अवकाशं दत्तवद्भ्यः प्रतिष्ठानस्य भूतपूर्व-गौरवाध्यक्षेभ्यः, तथा भूतपूर्वगौरवनिर्देशकेभ्यः दिवंगतेभ्यः प्रो.के.टि. पाण्डुरङ्गि महाभागेभ्यः, ''महामहोपाध्ययः'' इति विरुदभाग्भ्यः, शताधिकग्रन्थसम्पादकेभ्यः, प्रथितविद्वद्भ्यः, अनेकपीठाधिपतिभिः सम्मानितेभ्यः भूयांसि नमांसि अर्पये ।

द्वैतवेदान्ताध्ययनसंशोधनप्रतिष्ठानस्य इदानीन्तनाध्यक्षेभ्यः, तथा गौरवनिर्देकेभ्यः, सदा पाठप्रवचनशीलेभ्यः, श्रीजयतीर्थविद्यापीठस्य प्रांशुपालेभ्यः, जनानुरागिभ्यः, कार्यदक्षेभ्यः, जनानुरागोपन्यासकेभ्यः श्री डा. सत्यध्यानाचार्य कट्टी महाभागेभ्यः हार्दानि वन्दनानि अर्पये ।

ग्रन्थस्यास्य सम्पादनकर्मणि सश्रद्धं सहकृतवन्तं, सदा उत्साहशीलं, कार्यदक्षं, परोपकारिणं, डा. एस्.आर्. पाण्डुरङ्गि महाभागं हरिवायुगुरवः विशेषतयानुगृह्णन्तु इत्याशासे ।

ग्रन्थमिममधीत्य सहृदयाः सन्तोषं प्राप्नुयुश्चेत् सफलोऽयं परिश्रमः इत्युक्त्वा विरमामि ॥

सुधीविधेयः

बेङ्गळूरु-८५ रामाचार्य, माळगी

# श्रीमद्भगवद्गीता-भाष्य-तात्पर्याणाम्
# विषयानुक्रमणिका

पृ.सं.

देहातिरिक्तात्मनः श्रुतिप्रमाणसिद्धत्वं, श्रुतेः अपौरुषेयत्वं, धर्मस्य सर्वसमयाभिमतत्वम् (भा)

१४-१५ मात्रा स्पर्शशब्दार्थः, आत्मनः स्वतः न सुखदुःखादि, देहात्मभ्रम एव सुखदुःखकारणं (भा) पुरुषशब्दार्थः (ता)

१६ 'नासतो विद्यते' इत्यत्र 'सत्' 'असत्' शब्दयोरर्थः, सदसद्विलक्षणे प्रमाणाभावः, विश्वसत्यत्वे श्रुतयः (ता)

१७ सर्वप्रकारेण अविनाशित्वं विष्णोरेव, चतुर्विधनाशनिरूपणं (ता)

१८ जीवस्य परमात्मप्रतिबिम्बत्वं, नित्योपाधिः (भा) मुक्तानामपि स्वरूपदेहो विद्यते, मुक्तौ न जीवेश्वरैक्यं, 'यत्र तु अस्य' 'अहं ब्रह्मास्मि' इत्यादिश्रुतयः न ऐक्यप्रतिपादकाः, 'तत्त्वमसि' इत्यत्र नवकृत्वोऽपि भेद एव दृष्टान्तः इति प्रतिपादनं, पञ्चभेदनिरूपणं, भेदवाक्यानां न अनुवादकत्वं, जीवेश्वरयोः भेदः (ता)

१९-२३ जीवस्य स्वातन्त्र्येण न हन्तृत्वादि, प्रतिबिम्बस्य क्रियाभावः, जीवेश्वरयोः नित्यत्वे मन्त्रवर्णः (भा) जीवेश्वरयोः भेदकधर्माः कर्तृत्वं स्वातन्त्र्यं हरेरेव (ता)

२४ अंशत्वप्रतिबिम्बत्वविचारः, विष्णुप्रसादस्य मोक्षसाधनत्वं, विष्णोरेव सर्वोत्तमत्वं न अन्येषां (भा)

२५ परमात्मा अदेहः देहवांश्चैव, परमात्मनि विरुद्धधर्मसद्भावः, परमात्मनः अवयवगुणकर्मणां तेन सह अभेदः, अवताराणाम् अभेदः (ता) विशेषनिरूपणं (ता) सुदर्शनाद्यायुधानि विष्णुना आविष्टानि, ब्रह्मरुद्रशेषगरुडादयः विष्णुना आविष्टाः (ता)

२६-२८ देहयोगवियोगयोः नियतत्वात् न शोकः कार्यः

२९ आश्चर्यो भगवान् विष्णुः (ता)

३०-३८ युद्धः क्षत्रियस्य स्वधर्मः, ततो युद्धाय युज्यस्व

३९ सांख्ययोगशब्दयोरर्थः, (भा,ता) हैतुकपाषण्डादिस्वरूपनिरूपणं (ता) वैष्णवधर्मत्रैविद्यधर्मयोः भेदनिरूपणं (ता)

४०-४५ सम्यग्ज्ञानान्यथाज्ञानयोः भेदनिरूपणं (ता) वेदानां परोक्षार्थत्वं (भा)

४६ 'यावानर्थ उदपाने' इति श्लोकतात्पर्यं, सम्प्लुतोदकशब्दार्थः (भा,ता) आनीदवातमित्यादिश्रुतितात्पर्यम् (ता)

४७-४८ 'कर्मण्येवाधिकारस्त' इति श्लोकतात्पर्यं, 'कर्मफलहेतुः' इति समस्त-पदार्थनिरूपणं (भा) सिद्ध्यसिद्ध्योः समत्वं योगः

## तृतीयोऽध्यायः 80

(अस्मिन् अध्याये अकर्म विनिन्द्य कर्म ज्ञानसाधनत्वेन विधीयते - भा)
(कर्मयोगं विशेषतः प्रपञ्चयति अनेनाध्यायेन - ता)

## ऋग्भाष्यम्

## Appendix

सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः ।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत् ।।

।। श्रीवेदव्यासाय नमः ।।

# ।। श्रीमद्भगवद्गीताप्रस्थानम् ।।

धृतराष्ट्र उवाच

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय ।।

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

## श्रीमद्भगवद्गीताभाष्यम्

देवं नारायणं नत्वा सर्वदोषविवर्जितम् ।
परिपूर्णं गुरूंश्चान् गीतार्थं वक्ष्यामि लेशतः ।।

(उपोद्घातः)

नष्टधर्मज्ञानलोककृपालुभिर्ब्रह्मरुद्रेन्द्रादिभिरर्थितो ज्ञानप्रदर्शनाय भगवान् व्यासोऽवततार । ततश्चेष्टानिष्टप्राप्तिपरिहारसाधनादर्शनात् वेदार्थाज्ञानाच्च संसारे क्लिश्यमानानां वेदानधिकारिणां स्त्रीशूद्रादीनां च धर्मज्ञानद्वारा मोक्षो भवेदिति कृपालुः सर्ववेदाद्यर्थोपबृंहितां तदनुक्तकेवलेश्वर-ज्ञानदृष्टार्थयुक्तां च सर्वप्राणिनामवगाह्यानवगाह्यरूपां केवलभगवत्स्वरूप-परां परोक्षार्थां महाभारतसंहिताम् अचीक्लृपत् ।
तच्चोक्तम् -

लोकेशा ब्रह्मरुद्राद्याः संसारे क्लेशिनं जनम् ।
वेदार्थाज्ञमधीकारवर्जितं च स्त्रियादिकम् ।।

अवेक्ष्य प्रार्थयामासुर्देवेशं पुरुषोत्तमम् ।
ततः प्रसन्नो भगवान् व्यासो भूत्वा च तेन च ।।

अन्यावताररूपैश्च वेदानुक्तार्थभूषितम् ।
केवलेनाऽत्मबोधेन दृष्टं वेदार्थसंयुतम् ।।

वेदादपि परं चक्रे पञ्चमं वेदमुत्तमम् ।
भारतं पञ्चरात्रं च मूलरामायणं तथा ।।

पुराणं भागवतं चेति सम्भिन्नः शास्त्रपुङ्गवः ।। इति नारायणाष्टाक्षरकल्पे ।

ब्रह्माऽपि तन्न जानाति ईषत् सर्वोऽपि जानते ।
बह्वर्थमृषयस्तत्तु भारतं प्रवदन्ति हि ।। इत्युपनारदीये

ब्रह्माद्यैः प्रार्थितो विष्णुर्भारतं स चकार ह ।
यस्मिन् दशार्थाः सर्वत्र न ज्ञेयाः सर्वजन्तुभिः ।। इति नारदीये ।

भारतं चापि कृतवान् पञ्चमं वेदमुत्तमम् ।
दशावरार्थं सर्वत्र केवलं विष्णुबोधकम् ।।
परोक्षार्थं तु सर्वत्र वेदादप्युत्तमं तु यत् ।। इति स्कान्दे ।

यदि विद्याच्चतुर्वेदान् साङ्गोपनिषदान् द्विजः ।
न चेत् पुराणं संविद्यान्नैव स स्याद् विचक्षणः ।।

इतिहासपुराणाभ्यां वेदं समुपवृंहयेत् ।
विभेत्यल्पश्रुताद् वेदो मामयं प्रचलिष्यति ।

मन्वादि केचिद् ब्रुवते ह्यास्तीकादि तथाऽपरे ।
तथोपरिचराद्यन्ये भारतं परिचक्षते ।

भारतं सर्ववेदाश्च तुलामारोपिताः पुरा ।
देवैर्ब्रह्मादिभिः सर्वैः ऋषिभिश्च समन्वितैः ।
व्यासस्यैवाज्ञया तत्र त्वत्यरिच्यत भारतम् ।।

महत्त्वाद् भारवत्त्वाच्च महाभारतमुच्यते ।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न कुत्रचित् ।।

**'विराटोद्योगसारवान्'** इत्यादितद्वाक्यपर्यालोचनया, ऋषिसम्प्रदायात्, 'को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद् भवेत्' इत्यादिपुराणग्रन्थान्तरगत-वाक्यान्यथाऽनुपपत्त्या, नारदाध्ययनादिलिङ्गैश्चावसीयते । कथमन्यथा भारतनिरुक्तिज्ञानमात्रेण सर्वपापक्षयः ? प्रसिद्धश्च सोऽर्थः । कथं चान्यस्य न कर्तुं शक्यते? ग्रन्थान्तरगतत्वाच्च नाविद्यमानस्तुतिः । न च कर्तुरेव । इतरत्रापि साम्यात् । तत्र च सर्वभारतार्थसङ्ग्रहां वासुदेवार्जुनसंवादरूपां भारतपारिजातमधुभूतां गीतामुपनिबबन्ध । तच्चोक्तम्–

भारतं सर्वशास्त्रेषु भारते गीतिका वरा ।
विष्णोः सहस्रनामापि ज्ञेयं पाठ्यं च तद् द्वयम् ।। इति महाकौर्मे ।

'स हि धर्मः सुपर्याप्तो ब्रह्मणः पदवेदने' । इत्यादि च ।

(उपोद्घातः समाप्तः ।)

***

### श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः

# श्रीमद्भगवद्गीतातात्पर्यनिर्णयः

समस्तगुणसम्पूर्णं सर्वदोषविवर्जितम् ।
नारायणं नमस्कृत्य गीतातात्पर्यमुच्यते ।।

(उपोद्घातः)

शास्त्रेषु भारतं सारं तत्र नामसहस्रकम् ।
वैष्णवं कृष्णगीता च तज्ज्ञानान्मुच्यतेऽञ्जसा ।।

न भारतसमं शास्त्रं कुत एवानयोः समम् ।
भारतं सर्ववेदाश्च तुलामारोपिताः पुरा ।।

देवैर्ब्रह्मादिभिः सर्वैर्ऋषिभिश्च समन्वितैः ।
व्यासस्यैवाज्ञया तत्र त्वत्यरिच्यत भारतम् ।
महत्त्वाद् भारवत्त्वाच्च महाभारतमुच्यते ।।

निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ।
स्वयं नारायणो देवैर्ब्रह्मरुद्रेन्द्रपूर्वकैः ।।

अर्थितो व्यासतां प्राप्य केवलं तत्त्वनिर्णयम् ।
चकार पञ्चमं वेदं महाभारतसञ्ज्ञितम् ।। इति ब्रह्माण्डे ।

तत्र साक्षादिन्द्रावतारमुत्तमाधिकारिणमात्मनः प्रियतमर्जुनं क्षत्रियाणां विशेषतोऽपि परमधर्मं नारायणद्विट्तदनुबन्धिनिग्रहं बन्धुस्नेहाद-धर्मत्वेनाऽऽशङ्क्य ततो निवृत्तप्रायं स्वविहितवृत्त्या भक्त्या भगवदाराधनमेव परमो धर्मः, तद्विरुद्धः सर्वोऽप्यधर्मः, भगवदधीनत्वात् सर्वस्येति बोधयति भगवान् नारायणः । सर्वं चैतदत्रैवावगम्यते -

"अथ चेत्त्वमिमं धर्म्यं सङ्ग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि" ।। (२-३३)

इत्यादिना युद्धस्य स्वधर्मत्वम् ।

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ।। (१८-४६)

श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ।। (१८-४७)

सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ।।

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ।।

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ।। (१८-६४-६६)

इत्यादिना स्वधर्मेणैव भगवदाराधनस्यैव कर्तव्यत्वं तदन्यस्य त्याज्यत्वं च ।

नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवं विधो द्रष्टुं दृष्टवानसि मां यथा ।।

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ।। (११-५३, ५४)

इत्यादिना विष्णुभक्तेरेव सर्वसाधनोत्तमत्वं परोक्षापरोक्षज्ञानयोर्ज्ञानिनोऽपि मोक्षस्य तदधीनत्वं च ।

मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ।। (११-५५)

इत्यादिना भक्तस्यापि तत्कर्म विकर्मत्यागश्च ।

''कुरु कर्मैव तस्मात् त्वं पूर्वैः पूर्वतरं कृतम् ।'' (४-१५)

इत्यादिना ज्ञानिनोऽपि भगवत्कर्म ।

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ।। (११-५२)

इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् । (१८-६४)

दैवीसम्पद्विमोक्षाय निवन्धायासुरी मता ।
मा शुचः सम्पदं दैवीमभिजातोऽसि पाण्डव ।। (१६-५)

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ।। (९-१३)

'दर्शयात्मानमव्ययं'
दर्शयामास पार्थाय परमं रूपमैश्वरम् । (११-९)

इत्यादिनाऽर्जुनस्योत्तमाधिकारित्वमपरोक्षज्ञानित्वं च ।

न मे विदुः सुरगणाः प्रभवं न महर्षयः ।
अहमादिर्हि देवानां महर्षीणां च सर्वशः ।।

यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।
असम्मूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ।।

वुद्धिर्ज्ञानमसम्मोहः क्षमा सत्यं दमः शमः । (१०, २-४)

'महर्षयः सप्त पूर्वे' ................. । (१०-६)
'एतां विभूतिं योगं च' ................ । (१०-७)

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ।। (१०-८)

'तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयामि' (१०-११)

'तेषामहं समुद्धर्ता मृत्युसंसारसागरात्' । (१२-७)

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ।। (५-२९)

ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ।। (७-२)

अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।
मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय ।।

मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव । (७-६,७)

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ।

'राजविद्या राजगुह्यम्' ............ । (९-१,२)

मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ।। (९-४)

'भूतभृन्न च भूतस्थः' ............. । (९-५)
'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः' (११-४३)

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् । (१४-१)

मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।।
सम्भवः सर्वभूतानां ततो भवति भारत । (१४-३)

ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च ।।

शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च । (१४-२७)

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।।

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य विभर्त्यव्यय ईश्वरः ।।

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ।।

यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।
स सर्वविद् भजति मां सर्वभावेन भारत ।।

इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।
एतद्बुध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारत ।। (१५, १६-२०)

न मे पार्थाऽस्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।
नानवाप्तमवाप्तव्यम् ......... ।। (३-२२)

इत्यादिना सर्वस्माद् भगवतो भेदः, सर्वस्य तदधीनत्वं, तस्यानन्या-धीनत्वं, सर्वोत्तमत्वं, सर्वगुणपूर्णत्वं, सर्वशास्त्राणां तत्परत्वं, तथा तज्ज्ञानादेव मोक्ष इत्यादि ।

'अधाँ ते विष्णो विदुषा चिदर्ध्यः स्तोमो यज्ञश्च राध्यो हविष्मता' ।
(ऋ.मं १, सू. १५६-१)

पश्यन्नपीममात्मानं कुर्यात् कर्माविचारयन् ।
यदात्मनः सुनियतमानन्दोत्कर्षमाप्नुयात् ।
भक्त्या प्रसन्नः परमो दद्याज्ज्ञानमनाकुलम् ।
भक्तिं च भूयसीं ताभ्यां प्रसन्नो दर्शनं व्रजेत् ।।

ततोऽपि भूयसीं भक्तिं दद्यात्ताभ्यां विमोचयेत्
मुक्तोऽपि तद्वशो नित्यं भूयो भक्तिसमन्वितः ।
सान्द्राऽनन्दस्वरूपैव भक्तिर्नैवात्र साधनम्
ब्रह्मरुद्रमादिभ्योऽप्युत्तमत्वं स्वतन्त्रताम् ।।

सर्वस्य तदधीनत्वं सर्वसद्गुणपूर्णताम् ।
निर्दोषत्वं च विज्ञाय विष्णोस्तत्राखिलाधिकः ।।
स्नेहो भक्तिरिति प्रोक्तः सर्वोपायोत्तमोत्तमः ।
तेनैव मोक्षो नान्येन दृष्ट्यादिस्तस्य साधनम् ।।

अधमाधिकारिणो मर्त्या मुक्तावृष्यादिकाः समाः ।
अधिकार्युत्तमा देवाः प्राणस्तत्रोत्तमोत्तमः ।

नैव देवपदं प्राप्ता ब्रह्मदर्शनवर्जिताः ।
तिरोहितं तथाऽप्येते शृण्वन्ति क्रीडयाऽथवा ।।

वहुवारतदभ्यासात्तिरोभावोऽपि नो भवेत् ।
यथा व्यासानुशिष्टानां देवानां क्षत्रजन्मनाम् ।।
पार्थानामतिरोधानं ज्ञानं सुस्थिरतां गतम् ।

अस्य देवस्य मीळ्हुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः ।
विदेहि रुद्रो रुद्रियं महित्वं यासिष्टं वर्तिरश्विना विरावत् ।। (ऋ. ७-४०-५)

'एको नारायण आसीन्न ब्रह्मा न च शङ्करः' ।
स मुनिर्भूत्वा समचिन्तयत्तत एते व्यजायन्त
विश्वो हिरण्यगर्भोऽग्नि[illegible]ा वरुणरुद्रेन्द्रा इति' ।

'एको नारायण आसीन्न ब्रह्मा नेशानः' ।

'वासुदेवो वा इदमग्र आसीन्न ब्रह्मा न च शङ्करः' ।

'यं यं कामयते विष्णुस्तं ब्रह्माणं च शङ्करम् ।
शक्रं सूर्यं यमं स्कन्दं कुर्यात् कर्ताऽस्य न क्वचित्' ।।

सर्वोत्कर्षे देवदेवस्य विष्णोर्महातात्पर्यं नैव चान्यत्र सत्यम् ।
अवान्तरं तत्परत्वं तदन्यत् सर्वागमानां पुरुषार्थस्ततोऽतः ।। इति पैङ्गिश्रुतिः ।

'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति' । (ऋ. ६-९९-१)

'अनन्तगुणमाहात्म्यो निर्दोषो भगवान् हरिः ।
न समो वाऽधिको वाऽपि विद्यते तस्य कश्चन ।
नाऽसीन्न च भविष्यो वा परतः स्वत एव च' । इत्यादिश्रुतेश्च ।

'यस्त्वात्मरतिरेव स्याद्' इत्यादि तु मुक्तविषयम् ।
यस्त्वेवाऽत्मरतो मुक्तः कार्यं तस्यैव नास्ति हि ।
तस्मात् कुर्वीत कर्माणीत्याह कृष्णोऽर्जुनं स्मयन् ।। इति च स्कान्दे ।

ज्ञानयोगेन साङ्ख्यानाम् इत्यादि तु बाह्यकर्मसङ्कोचापेक्षया ।

न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् । (३-५)

शरीरयात्राऽपि च ते न प्रसिद्ध्येदकर्मणः । (३-८)

एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम्' । (१८-६)

'ज्ञानी च कर्माणि सदोदितानि कुर्यादकामः सततं भवेत ।'

न सर्वकर्मणां त्यागः कस्यचिद् भवति क्वचित् ।
त्यागिनो यतयोऽपि स्युः सङ्कोचाद् वाह्यकर्मणाम् । इत्यादि ।

'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः' इत्यादि चोत्पन्नज्ञानतिरो-
भावनिवृत्त्यर्थम् ।।

(इत्युपोद्घातः)

# प्रथमोऽध्यायः

**धृतराष्ट्र उवाच**

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय ॥ १ ॥

**सञ्जय उवाच**

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।
आचार्यमुपसङ्गम्य राजा वचनमब्रवीत् ॥ २ ॥

पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् ।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥

अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।
युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥

धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ।
पुरुजित् कुन्तिभोजश्च शैब्यश्च नरपुङ्गवः ॥ ५ ॥

युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ।
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥ ६ ॥

अस्माकं तु विशिष्टा ये तान् निबोध द्विजोत्तम ।
नायका मम सैन्यस्य सञ्ज्ञार्थं तान् ब्रवीमि ते ॥ ७ ॥

भवान् भीष्मश्च कर्णश्च कृपश्च समितिञ्जयः ।
अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च ॥ ८ ॥

अन्ये च वहवः शूरा मदर्थे त्यक्तजीविताः ।
नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ९ ॥

अपर्याप्तं तदस्माकं वलं भीष्माभिरक्षितम् ।
पर्याप्तं त्विदमेतेषां वलं भीमाभिरक्षितम् ॥ १० ॥

अयनेषु च सर्वेषु यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥ ११ ॥

तस्य सञ्जनयन् हर्षं कुरुवृद्धः पितामहः ।
सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥ १२ ॥

ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।
सहसैवाभ्यहन्यन्त स शव्दस्तुमुलोऽभवत् ॥ १३ ॥

ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।
माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥ १४ ॥

पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः ।
प्रौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥ १५ ॥

अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६ ॥

काश्यश्च परमेष्वासः शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥ १७ ॥

द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ।
सौभद्रश्च महाबाहुः शङ्खान् दध्मुः पृथक् पृथक्॥ १८ ॥

स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥ १९ ॥

अथ व्यवस्थितान् दृष्ट्वा धार्तराष्ट्रान् कपिध्वजः ।
प्रवृत्ते शस्त्रसम्पाते धनुरुद्यम्य पाण्डवः ॥ २० ॥

हृषीकेशं तदा वाक्यमिदमाह महीपते ।

### अर्जुन उवाच

सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥ २१ ॥

यावदेतान् निरीक्षेऽहं योद्धुकामानवस्थितान् ।
कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे ॥ २२ ॥

योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।
धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ २३ ॥

### सञ्जय उवाच

एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २४ ॥

भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ।
उवाच पार्थ पश्यैतान् समवेतान् कुरूनिति ॥ २५ ॥

तत्रापश्यत् स्थितान् पार्थः पितॄनथ पितामहान् ।
आचार्यान् मातुलान् भ्रातॄन् पुत्रान् पौत्रान् सखींस्तथा ।।२६।।

श्वशुरान् सुहृदश्चैव सेनयोरुभयोरपि ।
तान् समीक्ष्य स कौन्तेयः सर्वान् बन्धूनवस्थितान् ।। २७ ।।

कृपया परयाऽऽविष्टो विषीदन्निदमब्रवीत् ।

अर्जुन उवाच

दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ।। २८ ।।

सीदन्ति मम गात्राणि मुखं च परिशुष्यति ।
वेपथुश्च शरीरे मे रोमहर्षश्च जायते ।। २९ ।।

गाण्डीवं स्रंसते हस्तात् त्वक् चैव परिदह्यते ।
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ।। ३० ।।

निमित्तानि च पश्यामि विपरीतानि केशव ।
न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ।। ३१ ।।

न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ।
किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा।। ३२ ।।

येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ।
त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च।। ३३ ।।

आचार्याः पितरः पुत्रास्तथैव च पितामहाः ।
मातुलाः श्वशुराः पौत्राः श्यालाः सम्बन्धिनस्तथा ।।३४।।

एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ।
अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ।। ३५ ।।

निहत्य धार्तराष्ट्रान् नः का प्रीतिः स्याज्जनार्दन ।
पापमेवाऽश्रयेदस्मान् हत्वैतानाततायिनः ।। ३६ ।।

तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान् स्वबान्धवान् ।
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव।। ३७ ।।

यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ।। ३८ ।।

कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ।। ३९ ।।

कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ।। ४० ।।

अधर्माभिभवात् कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः ।। ४१ ।।

सङ्करो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ।। ४२ ।।

दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः ।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ।। ४३ ।।

उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥ ४४ ॥

अहो वत महत् पापं कर्तुं व्यवसिता वयम् ।
यद् राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥ ४५ ॥

यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥ ४६ ॥

सञ्जय उवाच

एवमुक्त्वार्जुनः सङ्ख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं शोकसंविग्नमानसः ॥ ४७ ॥

॥ ओं तत्सदिति श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे अर्जुनविषादयोगो नाम प्रथमोऽध्यायः ॥

*****

# द्वितीयोऽध्यायः

सञ्जय उवाच

तं तथा कृपयाऽऽविष्टमश्रुपूर्णाकुलेक्षणम् ।
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥ १ ॥

श्री भगवानुवाच

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ २ ॥

क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप ॥ ३ ॥

अर्जुन उवाच

कथं भीष्ममहं सङ्ख्ये द्रोणं च मधुसूदन ।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४ ॥

गुरूनहत्वा हि महानुभावान्
श्रेयो भोक्तुं भैक्ष्यमपीह लोके ।
हत्वाऽर्थकामांस्तु गुरूनिहैव
भुञ्जीय भोगान् रुधिरप्रदिग्धान् ॥ ५ ॥

न चैतद्विद्मः कतरन्नो गरीयो
यद्वा जयेम यदि वा नो जयेयुः ।

यानेव हत्वा न जिजीविषाम–
स्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥ ६ ॥

कार्पण्यदोषोपहतस्वभावः
पृच्छामि त्वा धर्मसम्मूढचेताः ।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे
शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥ ७ ॥

न हि प्रपश्यामि ममापनुद्याद्
यच्छोकमुच्छोषणमिन्द्रियाणाम् ।
अवाप्य भूमावसपत्नमृद्धं
राज्यं सुराणामपि चाधिपत्यम् ॥ ८ ॥

सञ्जय उवाच

एवमुक्त्वा हृषीकेशं गुडाकेशः परन्तपः ।
न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं वभूव ह ॥ ९ ॥

तमुवाच हृषीकेशः प्रहसन्निव भारत ।
सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥ १० ॥

श्रीभगवानुवाच

अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ ११ ॥

### भाष्यम्

तत्र सेनयोर्मध्ये बान्धवादिमोहजालसंवृतं विषीदन्तम् अर्जुनं भगवानुवाच ।

**प्रज्ञावादान्** स्वमनीषोत्थवचनानि । कथमशोच्या:? गतासून् ।। ११ ।।

### तात्पर्यम्

प्रकर्षेण जानन्तीति प्रज्ञा:, तदवाद: प्रज्ञावाद: । प्राज्ञमतविरुद्धवादं वदसि । कथम् ? गतासून् ।। ११ ।।

**न त्वेवाहं जातु नाऽसं न त्वं नेमे जनाधिपाः ।**
**न चैव न भविष्यामः सर्वे वयमतः परम् ।। १२ ।।**

### भाष्यम्

किमिति ? न त्वेवाहम् । ईश्वरनित्यत्वस्याप्रस्तुतत्वाद् दृष्टान्तत्वेनाऽह **नत्वेवेति** । यथाऽहं नित्य: सर्ववेदान्तेषु प्रसिद्ध:, एवं त्वमेते जनाधिपाश्च नित्या: ।। १२ ।।

### तात्पर्यम्

बन्धुस्नेहाद्धि त्वया स्वधर्मनिवृत्ति: क्रियते । तत्र देहनाशभयात् किं वा चेतननाशभयात्? देहस्य सर्वथा विनाशित्वान्न तत्र भये प्रयोजनम् । न च चेतननाशभयात् । तस्याविनाशित्वादेव । न तावत्परमचेतनस्य मम नाशोऽस्ति । एवमेव तवान्येषां च ।

**'नित्यो नित्यानां चेतनश्चेतनानाम् एको वहूनां यो विदधाति कामान्' ।। इत्यादिश्रुतेः ।**

'स्वदेहयोगविगमौ नाम जन्ममृती पुरा ।
इष्येते ह्येव जीवस्य मुक्तेर्न तु हरेः क्वचित्' ।। इति स्कान्दे ।

ईश्वरस्यापि युद्धगतत्वान्मोहात् तस्याप्युभयविधानित्यत्वशङ्काप्राप्तौ तदपि निवार्यते - **न त्वेवाहमिति** । यद्यप्येषा शङ्काऽर्जुनस्य नास्ति । तथाऽपि प्राप्तलोकोपकारार्थं भगवता निवार्यते । एकान्ते कथयन्नपि व्यासरूपेण तदेव लोके प्रकाशयिष्यति हि ।।१२।।

**देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ।**
**तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ।। १३ ।।**

### भाष्यम्

देहिनो भाव एतद् भवति; तदेवासिद्धमिति चेत्, न - **देहिनोऽस्मिन्** । यथा कौमारादिशरीरभेदेऽपि देही तदीक्षिता सिद्धः, एवं देहान्तरप्राप्तावपि, ईक्षितृत्वात् । न हि जडस्य शरीरस्य कौमाराद्यनुभवः सम्भवति । मृतस्यादर्शनात् । मृतस्य वाय्वाद्यपगमादनुभवाभावः । अहं मनुष्य इत्याद्यनुभवाच्चैतत् सिद्धमिति चेत्, न । सत्येवाविशेषे देहे सुप्त्यादौ ज्ञानादिविशेषादर्शनात् । समश्चाभिमानो मनसि । काष्ठादिवच्च । श्रुतेश्च । प्रामाण्यं च प्रत्यक्षादिवत् । न च बौद्धादिवाक्यवत् । अपौरुषेयत्वात् । नह्यपौरुषेये पौरुषेयाज्ञानादयः कल्पयितुं शक्याः । विना च कस्यचिद् वाक्यस्यापौरुषेयत्वं सर्वसमयाभिमतधर्माद्यसिद्धिः । यश्च तौ नाङ्गीकुरुते नासौ समयी । अप्रयोजकत्वात् । माऽस्तु धर्मोऽनिरूप्यत्वादिति चेत्, न । सर्वाभिमतस्य प्रमाणं विना निषेद्धुमशक्यत्वात् । न च सिद्धिरप्रामाणिकस्येति चेत्, न । सर्वाभिमतेरेव प्रमाणत्वात् । अन्यथा सर्ववाचिकव्यवहारासिद्धेश्च । न च मया श्रुतमिति तव ज्ञातुं शक्यम् ।

अन्यथा वा प्रत्युत्तरं स्यात् । भ्रान्तिर्वा तव स्यात् । सर्वदुःखकारणत्वं वा स्यात् । एको वाऽन्यथा स्यात् । रचितत्वे च धर्मप्रमाणस्य कर्तुरज्ञानादिदोषशङ्का स्यात् । न चादोषत्वं स्ववाक्येन एव सिद्ध्यति । न च येन केनचिदपौरुषेयमित्युक्तमुक्तवाक्यसमम् । आनादिकाल-परिग्रहसिद्धत्वात् । अतः प्रामाण्यं श्रुतेः । अतः कुतर्कैः धीरस्तत्र न मुह्यति ॥

अथवा, जीवनाशं देहनाशं वाऽपेक्ष्य शोकः? न तावत् जीवनाशम् । नित्यत्वादित्याह– न **त्वेवेति** । नापि देहनाशमित्याह– **देहिन इति** । यथा कौमारादिदेहहानेन जरादिप्राप्तावशोकः, एवं जीर्णादिदेहहानेन देहान्तरप्राप्तावपि ॥ १३ ॥

### तात्पर्यम्

मम स्वकीयदेहान्तरप्राप्तिरपि नास्तीति दर्शयितुं देहिन इति विशेषणम् । भवदादीनां सा भविष्यतीत्यपि शोको न कर्तव्यः । देहस्येदानी-मप्यन्यथात्वदर्शनात् ॥ १३ ॥

**मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।**
**आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥ १४ ॥**

### भाष्यम्

तथाऽपि तद्दर्शनाभावादिना शोक इति चेत्, नेत्याह- **मात्रास्पर्शा इति** । मीयन्त इति मात्रा विषयाः । तेषां स्पर्शाः सम्बन्धाः । त एव हि शीतोष्णसुखदुःखदाः । देहे शीतोष्णादिसम्बन्धाद्धि शीतोष्णाद्यनुभव आत्मनः । ततश्च सुखदुःखे । नह्यात्मनः स्वतः

सुखदुःखादि सम्भवति । कुतः? आगमापायित्वात् । यद्यात्मनः स्वतः स्युः सुप्तावपि स्युः । अतो यतो मात्रास्पर्शा जाग्रदादावेव ते सन्ति नान्यदेति तदन्वयव्यतिरेकित्वात् तन्निमित्ता एव नाऽत्मनः स्वतः । आत्मनश्च तैर्विषयविषयिभावसम्भन्धादन्यः सम्बन्धो नास्ति । न चागमापायित्वेऽपि प्रवाहरूपत्वेनापि नित्यत्वमस्ति । सुप्ति-प्रलयादावभावादित्याह - **अनित्या इति** । अत आत्मनो देहाद्यात्मभ्रम एव सुखदुःखकारणम् । अतस्तद्विमुक्तस्य बन्धुमरणादिदुःखं न भवति । अतोऽभिमानं परित्यज्य तान् शीतोष्णादीन् तितिक्षस्व ।। १४ ।।

## तात्पर्यम्

तददर्शनादिनिमित्तं सोढव्यमित्याह - **मात्रास्पर्शा इति** । विषयसम्बन्धाः ।। १४ ।।

**यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।**
**समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ।। १५ ।।**

## भाष्यम्

अतः प्रयोजनमाह – **यं हीति** । यमेते मात्रास्पर्शा न व्यथयन्ति पुरिशयमेव सन्तम् । शरीरसम्बन्धाभावे सर्वेषामपि व्यथाभावात् पुरुषमिति विशेषणम् । कथं न व्यथयन्ति ? समदुःखसुखत्वात् । तत् कथम् ? धैर्येण ।। १५ ।।

## तात्पर्यम्

फलमाह । **यं हीति** । न केवलमव्यथामात्रेणामृतत्वं किन्तु पुरुषम् ।

'पुरु ब्रह्म गुणाधिक्यात् तज्ज्ञानात्पुरुषः स्मृतः' । इति प्रवृत्ते । पुरुसरणात् पुरुष इत्यर्थः ।। १५ ।।

**नासतो विद्यतेऽभावो नाभावो विद्यते सतः ।**
**उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ।। १६ ।।**

## भाष्यम्

नित्य आत्मेत्युक्तम् । किमात्मैव नित्य आहोस्विदन्यदपि ? अन्यदपि । तत् किमिति ? आह - **नासत** इति असतः कारणस्य सतः ब्रह्मणश्च अभावो न विद्यते ।

'प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तम' ।
इति वचनात् श्रीविष्णुपुराणे । पृथक् विद्यत इत्यादरार्थः । असतः कारणत्वं च
'सदसद्रूपया चासौ गुणमय्याऽगुणो विभुः' । इति श्रीभागवते ।

'असतः सदजायत' इति च । अव्यक्तेश्च । सम्प्रदायतश्चैतत् सिद्धमित्याह– **उभयोरपीति** । अन्तो निर्णयः ।। १६ ।।

## तात्पर्यम्

न च युद्धात्परलोकदुःखमिति शोकः । असत्कर्मणः सकाशात् भावो नास्ति सत्कर्मणः सकाशात् अभावो नास्तीति नियतत्वात् ।

'सद्भाववाचिनः शब्दाः सर्वे ते सुखवाचकाः ।
अभाववाचिनः शब्दाः सर्वे ते दुःखवाचकाः' ।। इति शब्दनिर्णये ।

**'सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।**
**प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ।।' इति वक्ष्यमाणत्वात् ।**
(गीता. १७-२६)

**'असन्नेव स भवति, असद्ब्रह्मेति वेद चेत्' इत्यादेश्च ।**

अन्तो निर्णयः । न चाविद्यामानविद्यमानयोरुत्पत्तिनाशनिषेधकोऽयं श्लोकः । प्रत्यक्षविरोधात् । सन्निति व्यवह्रियमाणमेव पदार्थस्वरूप-मुत्पत्तेः प्राङ्नाशोत्तरं च नास्तीति सर्वलोको व्यवहरति । न च विपर्यये किञ्चिन्मानम् । इदं तु वाक्यमन्यथासिद्धम् ।

**'आद्यन्तयोः सर्वकार्यमसदेवेति निश्चितम् ।**
**यद्यसन्न विशेषोऽत्र जायते कोऽत्र जायते ।।**
**व्यक्तावपि समं ह्येतदनवस्थाऽन्यथा भवेत् ।**
**एवं नाशेऽपि वोद्धव्यमतोऽसन्नेव जायते ।।**
**तथाप्यभेदानुभवात् कार्यकारणयोः सदा ।**
**भेदस्य चाविशेषेण देहोऽगात् क्षितितामिति ।।**
**व्यवहारो भवेद्यस्माद्भल्येवानुभवः सदा ।।' इति ब्रह्मतर्के ।**

न च सदसद्विलक्षणं किञ्चिदस्तीत्यत्र किञ्चिन्मानम् । न चासतः ख्यात्ययोगात् सतो बाधायोगादुभयविलक्षणं भ्रान्तिविषयम् । असतः ख्यात्ययोगादिति वदतोऽसतः ख्यातिरभून्न वा ? यदि नाभूत् न तत्ख्यातिनिराकरणम् । यद्यभूत् तथापि । न चासतोऽसत्वेन भ्रान्तौ सत्वेन च ख्यातिर्नास्तीत्यत्र किञ्चिन्मानम् । असद्व्यवहारलोप-प्रसङ्गाच्च । यदविद्यमानं रूपं तस्य सत्त्वेन प्रतीतेरेव भ्रान्तित्वाच्च । अनिर्वचनीयत्वपक्षेऽपि सदिदं रजतमित्यविद्यमानसत्त्वप्रतीतिं विना न हि भ्रान्तित्वम् । भ्रान्तिसत्त्वाङ्गीकारेऽप्यभ्रान्तं सदिदं रजतमित्य-विद्यमानसत्वप्रतीतौ हि प्रवर्तते । तस्मादुभयविलक्षणं न किञ्चित् ।

'विश्वं सत्यम्' । 'यच्चिकेत सत्यमित्' । 'कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः' इत्यादि-श्रुतेश्च ।। १६ ।।

**अविनाशि तु तद् विद्धि येन सर्वमिदं ततम् ।**
**विनाशमव्ययस्यास्य न कश्चित् कर्तुमर्हति ।। १७ ।।**

### भाष्यम्

किं बहुना । यद् देशतोऽनन्तं तन्नित्यमेव वेदाद्यन्यदपीत्याह - **अविनाशीति** । नापि शापादिना विनाश इत्याह – **विनाशमिति** । अव्ययं च तत् ।। १७ ।।

### तात्पर्यम्

यद्यपि नित्यत्वं जीवस्याप्यस्ति । तथापि सर्वप्रकारेणाविनाशित्वं विष्णोरेवेति तुशब्दः ।

'अनित्यत्वं देहहानिर्दुःखप्राप्तिरपूर्णता ।
नाशश्चतुर्विधः प्रोक्तस्तदभावो हरेः सदा ।
तदन्येषां तु सर्वेषां नाशाः केचिद् भवन्ति हि' ।। इति महावाराहे ।

'देशतः कालतश्चैव गुणतश्च त्रिधा ततिः ।
सा समस्ता हरेरेव न ह्यन्ये पूर्णसद्गुणाः' ।। इति परमश्रुतिः ।। १७ ।।

**अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।**
**अनाशिनोऽप्रमेयस्य तस्माद् युद्ध्यस्व भारत ।। १८ ।।**

'सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ।।' इति वक्ष्यमाणत्वात् ।
(गीता. १७-२६)

'असन्नेव स भवति, असद्ब्रह्मेति वेद चेत्' इत्यादेश्च ।

अन्तो निर्णयः । न चाविद्यामानविद्यमानयोरुत्पत्तिनाशनिषेधकोऽयं श्लोकः । प्रत्यक्षविरोधात् । सन्निति व्यवह्रियमाणमेव पदार्थस्वरूप-मुत्पत्तेः प्राङ्नाशोत्तरं च नास्तीति सर्वलोको व्यवहरति । न च विपर्यये किञ्चिन्मानम् । इदं तु वाक्यमन्यथासिद्धम् ।

'आद्यन्तयोः सर्वकार्यमसदेवेति निश्चितम् ।
यद्यसन्न विशेषोऽत्र जायते कोऽत्र जायते ।।
व्यक्तावपि समं ह्येतदनवस्थाऽन्यथा भवेत् ।
एवं नाशेऽपि बोद्धव्यमतोऽसन्नेव जायते ।।
तथाप्यभेदानुभवात् कार्यकारणयोः सदा ।
भेदस्य चाविशेषेण देहोऽगात् क्षितितामिति ।।
व्यवहारो भवेद्यस्माद्बल्येवानुभवः सदा ।।' इति ब्रह्मतर्के ।

न च सदसद्विलक्षणं किञ्चिदस्तीत्यत्र किञ्चिन्मानम् । न चासतः ख्यात्ययोगात् सतो बाधायोगादुभयविलक्षणं भ्रान्तिविषयम् । असतः ख्यात्ययोगादिति वदतोऽसतः ख्यातिरभून्न वा ? यदि नाभूत् न तत्ख्यातिनिराकरणम् । यद्यभूत् तथापि । न चासतोऽसत्वेन भ्रान्तौ सत्वेन च ख्यातिर्नास्तीत्यत्र किञ्चिन्मानम् । असद्व्यवहारलोप-प्रसङ्गाच्च । यदविद्यमानं रूपं तस्य सत्त्वेन प्रतीतेरेव भ्रान्तित्वाच्च । अनिर्वचनीयत्वपक्षेऽपि सदिदं रजतमित्यविद्यमानसत्त्वप्रतीतिं विना न हि भ्रान्तित्वम् । भ्रान्तिसत्त्वाङ्गीकारेऽप्यभ्रान्तं सदिदं रजतमित्य-विद्यमानसत्वप्रतीतौ हि प्रवर्तते । तस्मादुभयविलक्षणं न किञ्चित् ।

'विश्वं सत्यम्' । 'यच्चिकेत सत्यमित्' । 'कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः' इत्यादि-श्रुतेश्च ।। १६ ।।

**अविनाशि तु तद् विद्धि येन सर्वमिदं ततम् ।**
**विनाशमव्ययस्यास्य न कश्चित् कर्तुमर्हति ।। १७ ।।**

### भाष्यम्

किं बहुना । यद् देशतोऽनन्तं तन्नित्यमेव वेदाद्यन्यदपीत्याह - **अविनाशीति** । नापि शापादिना विनाश इत्याह – **विनाशमिति** । अव्ययं च तत् ।। १७ ।।

### तात्पर्यम्

यद्यपि नित्यत्वं जीवस्याप्यस्ति । तथापि सर्वप्रकारेणाविनाशित्वं विष्णोरेवेति तुशब्दः ।

'अनित्यत्वं देहहानिर्दुःखप्राप्तिरपूर्णता ।
नाशश्चतुर्विधः प्रोक्तस्तदभावो हरेः सदा ।
तदन्येषां तु सर्वेषां नाशाः केचिद् भवन्ति हि' ।। इति महावाराहे ।

'देशतः कालतश्चैव गुणतश्च त्रिधा ततिः ।
सा समस्ता हरेरेव न ह्यन्ये पूर्णसद्गुणाः' ।। इति परमश्रुतिः ।। १७ ।।

**अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।**
**अनाशिनोऽप्रमेयस्य तस्माद् युद्ध्यस्व भारत ।। १८ ।।**

## भाष्यम्

भवतु देहस्यापि कस्यचिन्नित्यत्वमिति । नेत्याह– **अन्तवन्त इति** । अस्तु तर्हि दर्पणनाशात् प्रतिबिम्बनाशवदात्मनाश इत्यत आह- **नित्यस्येति** । शरीरिण इतीश्वरव्यावृत्तये । न च नैमित्तिक इत्याह- **अनाशिन इति** । कुतः ? अप्रमेयेश्वरसरूपत्वात् । न ह्युपाधिबिम्ब-सान्निध्यनाशे प्रतिबिम्बनाशः सति च प्रदर्शके । स्वयमेवात्र प्रदर्शकः । चित्त्वात् । नित्यश्चोपाधिः कश्चिदस्ति ।

**'प्रतिपत्तौ विमोक्षस्य नित्योपाध्या स्वरूपया ।**
**चिद्रूपया युतो जीवः केशवप्रतिबिम्बकः' ।।**
**इति भगवद्वचनात् ।। १८ ।।**

## तात्पर्यम्

शरीरिणां तु देहहान्यादिनाशो विद्यत एव । **'येन सर्वमिदं ततम्'** इति तस्यैव लक्षणंकथनात् न जीवानां देशतो गुणतश्च पूर्णता । अनिच्छया देहहान्यादेरेव दुःखावाप्तिः सिद्धा । तस्मादनाशिनोऽप्रमेयस्य विष्णोः पूजार्थं युद्ध्यस्व । तत्प्रसादाधीनत्वाद् दुःखनिवृत्तेः सुखस्य च ।

**'ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।**
**तेषामहं समुद्धर्ता' (गीता १२-६) इत्यादेः ।**

जीवपक्षे 'नित्यस्योक्ताः' इत्युक्तत्वात् 'अनाशिनः' इति पुनरुक्तिः । 'अविनाशि, येन सर्वमिदं ततम्' इत्युक्तस्यैव 'अनाशिनोऽप्रमेयस्य' इति प्रत्यभिज्ञानाच्च । 'इमे देहाः' इति विशेषणान्नित्यश्चिदानन्दात्मकः स्वरूपभूतो देहो मुक्तानामपि विद्यत इति ज्ञायते ।

'न वर्तते यत्र रजस्तमस्तयोः
सत्वं च मिश्रं न च कालविक्रमः ।
न यत्र माया किमुतापरे हरे-
रनुव्रता यत्र सुरासुरार्चिताः ।।

श्यामावदाताः शतपत्रलोचनाः
पिशङ्गवस्त्राः सुरुचः सुपेशसः ।
सर्वे चतुर्बाहव उन्मिषन्मणि -
प्रवेकनिष्काभरणाः सुवर्चसः ।।

प्रवालवैडूर्यमृणालवर्चसां
परिस्फुरत्कुण्डलमौलिमालिनाम् ।
भ्राजिष्णुभिर्यः परितो विराजते
लसद्विमानावलिभिर्महात्मनाम् ।।

विद्योतमानप्रमदोत्तमाभिः सविद्युदभ्रावलिभिर्यया नभः' ।।

इति हि भागवते ।

चिदानन्दशरीरेण सर्वे मुक्ता यथा हरिः ।
भुञ्जते कामतो भोगांस्तदन्तर्बहिरेव च ।। इति परमश्रुतिः ।

न च जीवेश्वरैक्यं मुक्तावपि ।

'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च' । (गीता, १४-२)

'यो वेद निहितं गुहायां परमे व्योमन् ।
सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता' ।

'एतमानन्दमयमात्मानमुपसङ्क्रम्य ।
इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन् ।
एतत्सामगायन्नास्ते' ।

'सर्वे नन्दन्ति यशसाऽऽगतेन
सभासाहेन सख्या सखायः ।
किल्विषस्पृत्पितुषणिर्ह्येषामरं
हितो भवति वाजिनाय' ।

'ऋचां त्वः पोषमास्ते पुपुष्वान्
गायत्रं त्वो गायति शक्करीषु ।
ब्रह्मा त्वो वदति जातविद्यां
यज्ञस्य मात्रां विमिमीत उ त्वः' ।

'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते'

'स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा' ।

'तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' ।

'मुक्ताः प्राप्य परं विष्णुं तद्देहं संश्रिता अपि ।
तारतम्येन तिष्ठन्ति गुणैरानन्दपूर्वकैः ।
भूपा मनुष्यगन्धर्वा देवाः पितर एव च ।
आजानेयाः कर्मदेवास्तत्त्व(रूपाः)देवाः पुरन्दरः ।
शिवो विरिञ्चिरित्येते क्रमाच्छतगुणोत्तराः ।
मुक्तावपि तदन्ये ये भूपाच्छतगुणावराः ।
न समो ब्रह्मणः कश्चिन्मुक्तावपि कथञ्चन ।
ततः सहस्रगुणिता श्रीस्ततः परमो हरिः ।
अनन्तगुणितत्वेन तत्समः परमोऽपि न' ।

'अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः ।
आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उ त्वे ददृश्रे ।
कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधीन्द्रायेन्द्रो परिस्रव ।
इत्यादि मोक्षानन्तरमपि भेदवचनेभ्यः । न च
'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' ।

'यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति' ।
'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' ।
'अविनाशित्वान्न तु तद्द्वितीयमस्ति । ततोऽन्यद्विभक्तं यत्पश्येत्' ।
'परमं ब्रह्म वेद ब्रह्मैव भवति' ।
'तत् त्वमसि' 'अहं ब्रह्मास्मि' इत्यादिवाक्यविरोधः ।
'संज्ञानाशो यदि भवेत्किमुक्त्या नः प्रयोजनम् ।
मोहं मां प्रापयामास भवानत्रेति चोदितः ।
याज्ञवल्क्यः प्रियामाह नाहं मोहं ब्रवीमि ते ।
भूतजज्ञानलोपः स्यान्निजं ज्ञानं न लुप्यते ।
न च ज्ञेयविनाशः स्यादात्मनाशः कुतः पुनः ।
स्वभावतः पराद्विष्णोर्विश्वं भिन्नमपि स्फुटम् ।
अस्वातन्त्र्याद्भिन्नमिव स्थितमेव यदेदृशम् ।
तदा प्राणादिभोगः स्यात्स्वरूपज्ञानशक्तितः ।
तदात्मानुभवोऽपि स्यादीश्वरज्ञानमेव च ।
यदाऽन्यं न विजानाति नात्मानं नेश्वरं तथा ।
पुरुषार्थता कुतस्तु स्यात्तदभावाय को यतेत्
तस्मात्स्वभावज्ञानेन भिन्ना विष्णुसमीपगाः ।
भुञ्जते सर्वभोगांश्च मुक्तिरेषा न चान्यथा ।
यन्न पश्येत्परो विष्णुर्द्वितीयत्वेन स स्वतः ।
तद्द्वितीयं न भवति प्रादुर्भावात्मकं वपुः ।
प्रधानपुरुषादन्यद्यत्तस्माद्भिन्नमीश्वरः ।
विभक्तत्वेन नियतं यस्मात्पश्यति सर्वदा ।
पश्यन्नेव यतो विष्णुस्तदभेदं न पश्यति ।
चेतनाचेतनस्यास्य नाभेदोऽस्ति ततोऽमुना ।
न हि ज्ञानविलोपोऽस्ति सर्वज्ञस्य परेशितुः ।
ब्रह्माणि जीवाः सर्वेऽपि परब्रह्माणि मुक्तिगाः

प्रकृतिः परमं ब्रह्म परमं महदच्युतः
नैव मुक्ता न प्रकृतिः क्वापि हि ब्रह्मवैभवम्[१] ।
प्राप्नुवन्त्यपि तज्ज्ञानान्निजं ब्रह्मत्वमाप्यते ।
यद्यस्य परमेशि(श)त्वं तदा स्याद्दुःखिता कुतः ।
दुःखी चेत्कुत ईशत्वमनीशो ह्येव दुःखभाक् ।
कुतः सर्वविदोऽज्ञत्वं क्व भ्रमोऽप्यज्ञतां विना ।
तस्मान्नैवेश्वरो जीवस्तत्प्रसादात्तु मुच्यते ।
अहेयत्वादहंनामा भगवान्हरिरव्ययः ।
ब्रह्मासौ गुणपूर्णत्वादस्म्यसावसनान्मितेः ।
असनादसिनामाऽसौ तेजस्त्वात्त्वमितीरितः ।
सर्वैः क्रियापदैश्चैव सर्वैर्द्रव्यपदैरपि ।
सर्वैर्गुणपदैश्चैव वाच्य एको हरिः स्वयम् ।
युष्मत्पदैः प्रातियोग्यात्तद्युतैश्च क्रियापदैः ।
अस्मत्पदैरान्तरत्वात्क्रियार्थैश्च तदन्वयैः ।
परोक्षत्वात्तत्पदैश्च मुख्यवाच्यः स एव तु ।
सर्वान्वेदानधीत्यैव प्रज्ञाधिक्येन हेतुना
श्वेतकेतुरहङ्कारात्प्रायशो नास्मि मानुषः ।
देवो वा केशवांशो वा नैषा प्रज्ञाऽन्यथा भवेत् ।
एवं महत्त्वबुद्ध्यैव दर्पपूर्णोऽभ्यगात्पितुः ।
सकाशमकृताचारं तं दृष्ट्वा स्तब्धमज्ञवत् ।
पितोवाच कुतः पुत्र स्तब्धता त्वामुपागता ।
प्रायो नारायणं देवं नैव त्वं पृष्टवानसि ।
यस्मिन् ज्ञाते त्वविज्ञातज्ञानादीनां फलं भवेत् ।
प्राधान्यात्सदृशत्वाच्च तदधीनमिति स्फुटम् ।
तत्सृष्टं चेति विज्ञातं फलवद्धि भवेज्जगत् ।
स्वातन्त्र्येणास्य विज्ञानं मिथ्याज्ञानमनर्थकृत् ।

---

१. तद्विष्णुवैभवम् ।

यथाचैवैकमृत्पिण्डज्ञानादेः सदृशत्वतः ।
मृण्मयं तदकार्यं च ज्ञातं मृदिति वै भवेत् ।
यथैव मृत्तिकेत्यादिनित्यनामप्रवेदनात् ।
वाचाऽरब्धमनित्यं तु ज्ञातं तन्मूलमित्यपि ।
एवं कारणभूतोऽसौ भगवान्पुरुषोत्तमः ।
प्रधानश्च स्वतन्त्रश्च तन्मूलमखिलं जगत् ।
तदाधारं विमुक्तौ च तदधीनं सदा स्थितम् ।
स सूक्ष्मो व्यापकः पूर्णस्तदीयमखिलं जगत् ।
तस्मात्तदीयस्त्वमसि नैव सोऽसि कथञ्चन ।
यथा पक्षी च सूत्रं च नानावृक्षरसा अपि ।
यथा नद्यः समुद्रश्च यथा वृक्षपरावपि ।
यथा धानाः परश्चैव यथैव लवणोदके ।
यथा पुरुषदेशौ च यथाऽज्ञज्ञानदावपि ।
यथा स्तेनापहार्यौ च तथा त्वं च परस्तथा ।
भिन्नौ स्वभावतो नित्यं नानयोरेकता क्वचित् ।
एवं भेदोऽखिलस्यापि स्वतन्त्रात्परमेश्वरात् ।
परतन्त्रं स्वतन्त्रेण कथमैक्यमवाप्नुयात् ।
स जीवनामा भगवान्प्राणधारणहेतुतः ।
उपचारेण जीवाख्या संसारिणि निगद्यते ।
तदधीनमिदं सर्वं नान्याधीनः स ईश्वरः ।
जीवेश्वरभिदा चैव जडेश्वरभिदा तथा ।
जीवभेदो मिथश्चैव जडजीवभिदा तथा ।
जडभेदो मिथश्चेति प्रपञ्चो भेदपञ्चकः ।
विष्णोः प्रज्ञामितं यस्माद्वैतं न भ्रान्तिकल्पितम् ।
अद्वैतः परमार्थोऽसौ भगवान्विष्णुरव्ययः ।
परमत्वं स्वतन्त्रत्वं सर्वशक्तित्वमेव च ।
सर्वज्ञत्वं परानन्दः सर्वस्य तदधीनता ।
इत्यादयो गुणा विष्णोर्नैवान्यस्य कथञ्चन ।

अभावः परमद्वैते सन्त्येव ह्यपराणि तु ।
विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ।
अद्वैतं ज्ञानिनां पक्षे न तस्माद्विद्यते क्वचिद्' ।

इत्यादिश्रुतिभ्योऽर्थान्तरस्यैवावगतत्वात् । एकपिण्डनामधेयेतिशब्दानां वैयर्थ्यं चान्यथा । न चैकविज्ञानेन सर्वविज्ञानं तत्पक्षे । न हि शुक्तिज्ञो रजतज्ञ इति व्यवहारः । नवकृत्वोऽपि भेद एव दृष्टान्तोक्तेश्च । तस्मादतत्त्वमसीत्येवोच्यते । ऐतदात्म्यमित्येतदात्मसम्बन्धि । तत्स्वामिकम् । त्वमपि तदैतदात्म्यमित्येतदात्मसम्बन्धि । तत्स्वामिकम् । त्वमपि तदैतदात्म्यमेवासि न सोऽसीति वा । तदिति लिङ्गसाम्यं चात्र । अविद्यमानमेवेश्वरं सृष्ट्यादिकं चाप्राप्तमेवात्मनो भिन्नत्वेन प्रापयित्वा तन्निषेधे कथं श्रुतेरुन्मत्तवाक्यत्वं न स्यात् ? अनुवादोऽपि 'यदिदं वदन्ति तन्न युज्यते' इत्यादिवाक्यं परिहारे विशेषयुक्तिं च विना न दृष्टः । अतिप्रसङ्गश्चान्यथा । अभेदानुवादेन भेदोपदेशः किमिति न स्यात् ? सर्वशाखान्ते भेदोक्तेश्चैतदेव युक्तम् ।

'नासंवत्सरवासिने प्रब्रूयात् नाप्रवंक्त्र इत्याचार्या आचार्याः' ।
'अहं विश्वं भुवनमभ्यभवाम्' ।
'अनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति प्रतितिष्ठति इति ब्रह्मविदो विदुः' ।
'नमो विष्णवे महते करोमि' । 'पश्यन्त्यात्मन्यवस्थितम्' ।

इत्यादि । न चेश्वरस्तद्भेदो वा प्रत्यक्षादिसिद्धः । तत्पक्षे त्वैक्यादेरपि मिथ्यात्वात्स्वरूपस्य च सिद्धत्वाद्व्यर्थैव श्रुतिः । लक्षितस्वरूपस्यापि न स्वरूपाद्विशेषः । निर्विशेषत्वोक्तेः । मिथ्याविशेषोक्तौ चाप्रामाण्यं श्रुतेः । मिथ्यात्वं च मिथ्यैव तेषाम् । अतः सत्यत्वं सत्यं स्यात् । उपाधिकृतभेदेऽप्युपाधेर्मिथ्यात्वे त्वप्राप्तमेवोपाधिभेदं प्रापयित्वा

पुनर्निषिद्ध्यत इति स एव दोषः । सत्योपाधिपक्षेऽपि हस्त-पादाद्युपाधिभेदेऽपि भोक्तुरेकत्वदृष्टेरेकेनैवेश्वरेण सर्वोपाधिगतं सुखं दुःखं भुज्यतेत्येवमादयो दोषाः समा एव । अचेतनानामनुभवाभावान्न तत्साम्यम् । अतो जीवेश्वरयोर्भेद एवेति सिद्धम् ।। १८ ।।

**य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।**
**उभौ तौ न विजानीतो नायं हन्ति न हन्यते।। १९ ।।**

### भाष्यम्

व्यवहारस्तु भ्रान्त इत्याह – **य एनमिति** । कुतः ? उक्तहेतुभ्यो नायं हन्ति न हन्यते । नहि प्रतिबिम्बस्य क्रिया । स हि बिम्बक्रिययैव क्रियावान् । 'ध्यायतीव' इति श्रुतेश्च ।। १९ ।।

### तात्पर्यम्

य एनं जीवं वेत्ति हन्तारं स्वातन्त्र्येण । अन्यथा 'मया हतांस्त्वं जहि' इत्यादिविरोधः । चेतनं प्रति य एनमिति परमात्मनोऽपि समम् ।। १९ ।।

**न जायते म्रियते वा कदाचि-**
**न्ना(ऽ)यं भूत्वा भविता वा न भूयः ।**
**अजो नित्यः शाश्वतोऽयं पुराणो**
**न हन्यते हन्यमाने शरीरे ।। २० ।।**

### भाष्यम्

अत्र मन्त्रवर्णोऽप्यस्तीत्याह – **न जायत इति** । न चेश्वरज्ञानवद् भूत्वा भविता । तद्धि -

'तदैक्षत' 'देशतः कालतो योऽसाववस्थातः स्वतोऽन्यतः ।
अविलुप्तावबोधात्मा' ।

इत्यादिश्रुतिस्मृतिसिद्धम् । कुतः ? अजादिलक्षणेश्वरसरूपत्वात् । शाश्वतः सदैकरूपः । पुरं देहमणतीति पुराणः । तथाऽपि न हन्यते हन्यमानेऽपि देहे ।। २० ।।

## तात्पर्यम्

जीवेश्वरयोर्नित्यत्वे मन्त्रवर्णोऽप्यस्तीत्याह । **न जायते म्रियत इति** । अयं ना परमपुरुषो भूत्वा विद्यमान एव देहसम्बन्धरूपेणापि भविता न । मरणं तु देहवियोग इति प्रसिद्धमेव । न हि घटादीनां मरणव्यवहारः । स्वरूपानाशः कैमुत्येनैव सिद्धः । अयं जीवोऽप्यजो नित्यश्च । अन्यथा पुनरुक्तेः । शाश्वतश्च । न कदाचिदस्वातन्त्र्यादिकं जीवस्वरूपं जहाति ।

'अल्पशक्तिरसार्वज्ञं पारतन्त्र्यमपूर्णता ।
उपजीवकत्वं जीवत्वमीशत्वं तद्विपर्ययः ।
स्वाभाविकं तयोरेतन्नान्यथा स्यात्कथञ्चन ।
वदन्ति शाश्वतावेतावत एव महाजनाः' ।। इति महाविष्णुपुराणे ।

पुराण्यणति गच्छतीति पुराणः ।। २० ।।

वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ कं घातयति हन्ति कम्।। २१ ।।

## भाष्यम्

अतो य एवं वेद स कथं कं घातयति हन्ति वा ? अविनाशिनं नैमित्तिकनाशरहितम् । नित्यं स्वाभाविकनाशरहितम् । अथवा,

अविनाशिनं दोषयोगरहितं, नित्यं सदा भाविनमिति सर्वत्र विवेकः । दोषयुक्तपुरुषादिषु नष्टशब्दप्रयोगात् ।। २१ ।।

### तात्पर्यम्

अविनाशिनं शरीरापायादिवर्जितम् । नित्यं स्वरूपतः । एनं परमेश्वरम् ।

'कर्तृत्वं तु स्वतन्त्रत्वं तदेकस्य हरेर्भवेत् ।
तच्चाव्ययं तस्य जानन् कथं कर्ता स्वयं भवेत्' ।। इति परमश्रुतिः ।

अन्यथाऽविनाशिनं नित्यमिति पुनरुक्तिः ।। २१ ।।

**वासांसि जीर्णानि यथा विहाय**
**नवानि गृह्णाति नरोऽपराणि**
**तथा शरीराणि विहाय जीर्णा-**
**न्यन्यानि संयाति नवानि देही ।। २२ ।।**

### भाष्यम्

देहात्मविवेकानुभवार्थं दृष्टान्तमाह– **वासांसीति** ।। २२ ।।

### तात्पर्यम्

जीवस्यापि शरीरसंयोगवियोगावेव जनिमृती यतस्ततो न दुःखकारणमित्याह । **वासांसीति** ।। २२ ।।

**'नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।**
**नचैनं क्लेदयन्त्यापो न शोषयति मारुतः' ।। २३ ।।**

### भाष्यम्

स्वतः प्रायो निमित्तैश्चाविनाशिनोऽपि केनचिन्निमित्तविशेषेण स्यात्, ककच्छेदवत्, इत्यतो विशेषनिमित्तानि निषेधति - **नैनमिति** ।। २३ ।।

## तात्पर्यम्

कारणतोऽपि नेश्वरस्यान्यथात्वमित्याह - **नैनं छिन्दन्तीति** ।।२३।।

**अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।**
**नित्यः सर्वगतस्थाणुरचलोऽयं सनातनः ।। २४ ।।**

## भाष्यम्

वर्तमाननिषेधात् स्यादुत्तरत्रेत्यत आह– **अच्छेद्य** इति । वर्तमानादर्शनाद् युक्तमयोग्यत्वमिति सूचयति वर्तमानापदेशेन । कुतोऽयोग्यता ? नित्यसर्वगतादिविशेषणेश्वरसरूपत्वात् । शाश्वत इत्येकरूपत्व-मात्रमुक्तम् । स्थाणुशब्देन नैमित्तिकमन्यथात्वं निवारयति । नित्यत्वं सर्वगतत्वविशेषणम् । अन्यथा पुनरुक्तेः । ऐक्योक्तावप्यनुक्त-विशेषणोपादानान्नेश्वरैक्ये पुनरुक्तिः । युक्ताश्च बिम्बधर्माः प्रति-बिम्बेऽविरोधे । तत्ता च–

**'रूपं रूपं प्रतिरूपो बभूव' 'आभास एव च'** इत्यादिश्रुति-स्मृतिसिद्धा ।

नचांशत्वविरोधः । तस्यैवांशत्वात् । नचैकरूपैवांशता । प्रमाणं चोभयविधवचनमेव नचांशस्य प्रतिबिम्बत्वं कल्प्यम् । गाध्यादिष्वप्यंशबाहुल्यदृष्टेरितरत्रादृष्टेः । स्थाणुत्वेऽपि 'ऐक्षत' इत्याद्यविरुद्धमीश्वरस्य । उभयविधवाक्यात् । अचिन्त्यशक्तेश्च । न च माययैकम्-

**'त्वयीश्वरे ब्रह्मणि नो विरुद्ध्यते'**
**'न योगित्वादीश्वरत्वात्'**
**'चित्रं न चैतत् त्वयि कार्यकारणे'**

इत्याद्यैश्वर्येणैव विरुद्धधर्माविरोधोक्तेः । महातात्पर्याच्च । मोक्षो हि महापुरुषार्थः–

'तत्रापि मोक्ष एवार्थः'

अन्तेषु रेमिरे धीरा न ते मध्येषु रेमिरे ।
अन्तप्राप्तिं सुखं प्राहुर्दुःखमन्तरमन्तयोः ।।

'पुण्यचितो लोकः क्षीयते' इत्यादिश्रुतिस्मृतिभ्यः ।

स च विष्णुप्रसादादेव सिद्ध्यति-

'वासुदेवमनाराध्य को मोक्षं समवाप्नुयात्'

'तुष्टे तु तत्र किमलभ्यमनन्त ईशे'

'तत्प्रसादादवाप्नोषि परां सिद्धिं न संशयः'

'येषां स एव भगवान् दययेदनन्तः
सर्वात्मना श्रितपदो यदि निर्व्यलीकम् ।
ते वै विदन्त्यतितरन्ति च देवमायां
नैषां ममाहमिति धीः श्वसृगालभक्ष्ये' ।। भागवतम् २-७-४२

'तस्मिन् प्रसन्ने किमिहास्त्यलभ्यं'

'धर्मार्थकामैरलमल्पकास्ते'

'ऋते यदस्मिन् भव ईश जीवास्तापत्रयेणोपहता न शर्म ।
आत्मन् लभन्ते भगवंस्तवांघ्रिच्छायांशविद्यामत आश्रयेम' ।। भागवतम् ३-६-१८

ऋते भवत्प्रसादाद्धि कस्य मोक्षो भवेदिह' । 'तमेवं विद्वान्'

इत्यादिश्रुतिस्मृतिभ्यः । स चोत्कर्षज्ञानादेव भवति । लोकप्रसिद्धेः । लोक(प्र)सिद्धमविरुद्धमत्राप्यङ्गीकार्यम् । अहल्याजारत्वाद्यपि दोष-कृतोऽपि ते न बहुतरो लेप आसीदित्युत्कर्षमेव वक्ति । बहुनरकफलो ह्यसौ ।

'तस्य लोम च न क्षी(मी)यते' इति श्रुत्यन्तराच्च ।
'यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्' ।। इति तदुक्तेश्च ।
'सत्यं सत्यं पुनः सत्यं शपथैश्चाऽपि कोटिभिः ।
विष्णुमाहात्म्यलेशस्य विभक्तस्य च कोटिधा ।
पुनश्चानन्तधा तस्य पुनश्चापि ह्यनन्तधा ।
नैकांशसममाहात्म्याः श्रीशेषब्रह्मशङ्कराः' ।। इति नारदीये ।

अन्योत्कर्ष ऐक्यं च–
'तथैव सर्वशास्त्रेषु महाभारतमुत्तमम्'
'को ह्यन्यः पुण्डरीकाक्षात् महाभारतकृद्भवेत्' ।

इत्यादिग्रन्थान्तरसिद्धोत्कर्षमहाभारतविरुद्धम् । तत्र हि–

'नास्ति नारायणसमं न भूतं न भविष्यति ।
एतेन सत्यवाक्येन सर्वार्थान् साधयाम्यहम्' ।।

'यस्य प्रसादजो ब्रह्मा रुद्रश्च क्रोधसम्भवः ।'

'न त्वत्समोऽस्ति' इत्यादिषु साधारणप्रश्नावसर एव महान्तमुत्कर्षं विष्णोर्वक्ति । अन्यत्र यत्किञ्चिदुक्तावप्यसाधारण एवावसरे । तद्धचग्न्यादेरपि वेदादावस्ति ।

'त्वमग्न इन्द्रो वृषभः' 'सतामसि त्वं विष्णुरुरुगायो नमस्यः',
'विश्वस्मादिन्द्र उत्तरः' इत्यादिषु ।

तद्ग्रन्थविरोधाच्च । तथाहि स्कान्दे शैवे–

'यदन्तरं व्याघ्रहरीन्द्रयोर्वने यदन्तरं मेरुगिरीन्द्रविन्ध्ययोः ।
यदन्तरं सूर्यसुरेड्यबिम्बयोस्तदन्तरं रुद्रमहेन्द्रयोरपि ।।
यदन्तरं सिंहगजेन्द्रयोर्वने यदन्तरं सूर्यशशाङ्कयोर्दिवि ।
यदन्तरं जाह्नविसूर्यकन्ययोस्तदन्तरं ब्रह्मगिरीशयोरपि ।।

**यदन्तरं प्रलयजवारिविप्रुषोर्यदन्तरं स्तम्वहिरण्यगर्भयोः ।**
**स्फुलिङ्गसंवर्तकयोर्यदन्तरं तदन्तरं विष्णुहिरण्यगर्भयोः' ।।**

**'अनन्तत्वान्महाविष्णोस्तदन्तरमनन्तकम् ।**
**माहात्म्यसूचनार्थाय ह्युदाहरणमीरितम्' ।**
**'तत्समोऽह्यधिको वाऽपि नास्ति कश्चित् कदाचन ।**
**एतेन सत्यवाक्येन तमेव प्रविशाम्यहम्' ।।** इत्याद्याह ।

तत्रैव शिवं प्रति मार्कण्डेयवचनम्-
**'संसारार्णवनिर्मग्न इदानीं मुक्तिमेष्यसि'** इत्यादि ।

पाद्मे शैवे मार्कण्डेयकथाप्रबन्धे शिवान्निषिध्य विष्णोरेव मुक्तिमाह–
**''अहं भोगप्रदो वत्स मोक्षदस्तु जनार्दनः''** इत्यादि ।

समन्नाह्यविरोधाच्च । वेदश्चेतिहासाद्यविरोधेन योज्यः ।

'यदि विद्यात्' इत्यादिवचनात् । अनिर्णयाच्चेन्द्रादिशङ्कयाऽन्यथा । तत्रापीष्टसिद्धिः । नामवैशेष्यात् । अतो भगवदुत्कर्ष एव सर्वागम-महातात्पर्यम् । तथाऽपि स्वतःप्रामाण्यात् सन्नेवोच्यते । अविरोधात् । न च प्रमाणसिद्धस्यान्यत्रादृष्ट्याऽपह्नवो युक्तः । धर्मवैचित्र्यादर्थानाम् । स्वतःप्रामाण्यानङ्गीकारे मानोक्तावप्यदोषत्वं च साधयेदित्यतिप्रसङ्गः । अनन्यापेक्षया च तत्परत्वं सिद्धमागमानाम्-

**'नारायणपरा वेदाः' 'सर्वे वेदा यत्पदमामनन्ति'**
**'वासुदेवपरा वेदाः'** इति ।

न चैतद् विरुद्धम् । ईश्वरनियमात् । अनादौ च तत् सिद्धम्- 'द्रव्यं कर्म च' इत्यादौ प्रयोजकत्वं तु पूर्वोक्तन्यायेन । अतः सिद्धमेतत् ।

तच्चानन्यापेक्षाचिन्त्यशक्तित्व एव युक्तम् । अतो न मायामयमेकम् । अचलत्वं तु-

**'अप्रहर्षमनानन्दम्' 'अदुःखमसुखम्' 'न प्रज्ञम्' 'असद्वै' इत्यादिवत् ।**
**क्रियादृष्टेः-**

**'तपो मे हृदयं साक्षात् तनुर्विद्या क्रियाऽऽकृतिः' इत्याद्युक्तेः ।**

अतश्च न मायामयं सर्वम् । ऐश्वर्यादिवाचिभगशब्देनैव सम्बोधनाच्च 'तं त्वा भग' इत्यादौ स्वरूपत्वान्न मायामयत्वं युक्तम् ।

**'विज्ञानशक्तिरहमासमनन्तशक्तेः' ।**
**'मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे' ।**
**'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इत्यादि-वचनात् ।। २४ ।।**

## तात्पर्यम्

अच्छेद्यत्वादिकं जीवस्यापि तत्सममित्याह- **अच्छेद्योऽयमिति** । नित्यं सर्वगते स्थितः अणुश्चायमिति सर्वगतस्थाणुः । सर्वगतो विष्णु-स्तदधीनत्वादिकं तत्स्थत्वम् । हेतुतोऽपि तत्स्थत्वान्न चलतीत्य-चलः । नादेन शब्देन सह वर्तत इति सनादन एव सनातनः ।

**'नित्यं सर्वगते विष्णावणुर्जीवो व्यवस्थितः ।**
**न चास्य तदधीनत्वं हेतुतोऽपि विचाल्यते ।**
**निषेधविधिपात्रत्वात्सनातन इति स्मृतः' ।। इति महाविष्णुपुराणे ।**

अच्छेद्योऽयमित्यादिपुनरुक्तिश्चान्यथा । यस्मिन्नयं स्थितः सोऽव्यक्ता-चिन्त्यादिरूपः । एवं ज्ञातः परमेश्वरः सर्वदुःखनाशं करोतीति नानुशोचितुमर्हसि । 'तेषामहं समुद्धर्ता' इत्यादेः ।

'न त्वेवाहं जातु नासं न त्वम्' इत्युभयोरपि प्रस्तुतत्वात् । देहिनः शरीरिणः देहीति विशेषितत्वाच्च जीवस्य तत्र तत्र ।

'अविनाशि तु ।' 'येन सर्वमिदं ततम् ।'
'अनाशिनोऽप्रमेयस्य ।' 'न म्रियते ।'
'भूत्वा भविता न ।' 'अविनाशिनम् ।'

'अव्ययम् ।' 'अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयम्' । इत्यादि परमात्मनश्च । न हि जीवेन ततं सर्वम् । न च मुख्यतोऽप्रमेयोऽसौ । न च न म्रियते । न चाविनाशिनं नित्यमिति नित्यत्वातिरिक्तमविनाशित्वं तस्य । न चाव्यक्तत्वमविकार्यत्वं च मुख्यम् । न च भूत्वा भविता वा नेति देहस्याप्यनुत्पत्तिः । परमात्मनस्तु देहवियोगादिकमपि नास्तीत्यविनाशि त्वित्यादिविशेषणम् । यस्मादेवं भूतस्तस्मात्स एव स्वतन्त्रः । तदधीनमन्यत्सर्वम् । अतः स एव सर्वपुरुषार्थदः । अतस्तत्पूजा सत्कर्मैव । अतस्तदर्थं युध्यस्व । अन्येषां त्वन्तवन्त एव देहाः । प्राकृतदेहिनश्च । अतोऽस्वतन्त्रत्वान्न हन्तुं तेषां सामर्थ्यम् । नित्यत्वान्न हन्यते च । तस्माद्धन्ता हत इति मन्यमानौ न विजानीतः । यस्मादयमेव परमेश्वरः शरीरवियोगरूपेणापि न म्रियते तत्संयोगरूपेणापि न जायते जीववत्कदापि । अतः स एव स्वतन्त्रत्वात्सर्वस्य हन्ता । जीवस्तु तेन शरीरे हन्यमाने स्वयं न हन्यत इत्येतावत् । अत एवमविनाशित्वादेः स्वातन्त्र्यात् सर्वकर्तारं परमात्मानं यो वेद स कथं घातयति हन्ति वा ? वाससो जरावत्स्वशरीरजरादावस्वातन्त्र्यदर्शनात्सर्वत्रास्वातन्त्र्यं ज्ञातव्यं जीवस्य । ईश्वरस्य तु देहस्यापि च्छेदादेरभावात्स्वातन्त्र्यम् । नैनं छिन्दन्तीति च्छेदनाद्यभावः साक्षादेव दर्शयितुं शक्यते स्वदेहस्येति वर्तमानापदेशः । छेदनादिकं त्वीश्वरो मोहाय मृषैव दर्शयति ।। २४ ।।

**अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।**
**तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ।। २५ ।।**

### भाष्यम्

अत एवाव्यक्तादिरूपः ।। २५ ।।

### तात्पर्यम्

सर्वगतश्चेत्परमात्मा किमिति तथा न दृश्यत इत्यतो वक्ति - **अव्यक्तोऽयमिति** । कथमेतद्युज्यते ? अचिन्त्यशक्तित्वात् । न च सा शक्तिः कदाचिदन्यथा भवति । अविकार्यत्वात् । यानि यान्यस्य रूपाणि तानि सर्वाण्यप्येवं भूतानीति दर्शयितुमेनमयमित्यादिपृथग्वचनम् । जीवे तु सर्वजीवेष्वनुगमार्थम् । सर्वं चैतत् श्रुतिसिद्धम् ।

'सदेहः सुखगन्धश्च ज्ञानभाः सत्पराक्रमः ।
ज्ञानज्ञानः सुखसुखः स विष्णुः परमोऽक्षरः' । इति पैङ्गिश्रुतिः ।

'अदेहो देहवांश्चैकः प्रोच्यते परमेश्वरः ।
अप्राकृतशरीरत्वाददेह इति कथ्यते ।
शिरश्चरणवाह्वादिविग्रहोऽयं स्वयं हरिः ।
स्वस्मान्नान्यो विग्रहोऽस्य ततश्चादेह उच्यते ।
स्वयं स्वरूपवान्यस्माद्देहवांश्चोच्यते ततः ।
शिरश्चरणवाह्वादिः सुखज्ञानादिरूपकः ।
स च विष्णोर्न चान्योऽस्ति यस्मात्सोऽचिन्त्यशक्तिमान् ।
देहयोगवियोगादिस्ततो नास्य कथञ्चन ।
गुणरूपोऽपि भगवान् गुणभुक्च सदा श्रुतः ।
अहमित्यात्मभोगो यत्सर्वेषामनुभूयते ।
अभिन्नेऽपि विशेषोऽयं सदाऽनुभवगोचरः ।
विशेषोऽपि हि नान्योऽतः स च स्वस्यापि युज्यते ।
नानवस्था ततः क्वापि परमैश्वर्यतो हरेः ।
युक्तायुक्तत्वमपि हि यदधीनं सदेष्यते ।
प्रमाणावगते तत्र कुत एव ह्ययुक्तता' ।। इत्यादिपरमश्रुतिः ।

'गुणाः श्रुताः सुविरुद्धाश्च देवे सन्त्यश्रुता अपि नैवात्र शङ्का ।
चिन्त्या अचिन्त्याश्च तथैव दोषाः श्रुताश्च नाङ्गैर्हि तथा प्रतीताः' ॥

इत्यादि च ऋग्वेदे सौपर्णशाखायाम् ।

'एकमेवाद्वितीयं' 'नेह नानास्ति किञ्चिन' ।

'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' ।

'यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।
एवं धर्मान् पृथक्पश्यंस्तानेवानुविधावति' ।

'मत्स्यकूर्मादिरूपाणां गुणानां कर्मणामपि ।
तथैवावयवानां च भेदं पश्यति यः क्वचित् ।
भेदाभेदौ च यः पश्येत्स याति तम एव तु ।
पश्येदभेदमेवैषां बुभूषुः पुरुषस्ततः ।
अभेदेऽपि विशेषोऽस्ति व्यवहारस्ततो भवेत् ।
विशेषिणां विशेषस्य तथा भेदविशेषयोः ।
विशेषस्तु स एवायं नानवस्था ततः क्वचित् ।
प्रादुर्भावादिरूपेषु मूलरूपेषु सर्वशः ।
न विशेषोऽस्ति सामर्थ्ये गुणेष्वपि कदाचन ।
मत्स्यकूर्मवराहाश्च नृसिंहवटुभार्गवाः ।
राघवः कृष्णवुद्धौ च कल्किव्यासैतरेयकाः ।
दत्तो धन्वन्तरिर्यज्ञः कपिलो हंसतापसौ ।
शिंशुमारो हयास्यश्च हरिः कृष्णश्च धर्मजः ।
नारायणस्तथेत्याद्याः साक्षान्नारायणः स्वयम् ।
ब्रह्मरुद्रौ शेषविपौ शक्राद्या नारदस्तथा ।
सनत्कुमारः कामभवोऽप्यनिरुद्धो विनायकः ।
सुदर्शनाद्यायुधानि पृथ्वाद्याश्चक्रवर्तिनः ।
इत्याद्या विष्णुनाऽविष्टा भिन्नाः संसारिणो हरेः ।
तेष्वेव लक्ष्मणाद्येषु त्रिष्वेवं च वलादिषु ।

नरार्जुनादिषु तथा पुनरावेश उच्यते ।
स्वल्पस्तु पुनरावेशो धर्मपुत्रादिषु प्रभोः ।
एतज्जानाति यस्तस्मिन्प्रीतिरभ्यधिका हरेः ।
सङ्करज्ञानिनस्तत्र पातस्तमसि च ध्रुवम्' ॥ इत्यादि महावराहे ॥ २५ ॥

अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महाबाहो नैनं शोचितुमर्हसि ॥ २६ ॥

### भाष्यम्

अस्त्वेवमात्मनो नित्यत्वम्; तथाऽपि देहसंयोगवियोगात्मकजनिमृती स्त एवेत्यत आह– अथेति ॥ २६ ॥

### तात्पर्यम्

तिष्ठतु तावदयं विस्तारः । यावन्मोक्षं जीवस्य जन्ममरणे स्वयमेव मन्यसे न तु नियमेन । तथापि तावन्मात्रेणापि ज्ञानेन शोचितुं नार्हसि ।

'नित्यं सनातनं प्रोक्तं नित्यं नियतमेव च' । इति शब्दनिर्णये ।
अत्र तु नियतम् । 'जातस्य हि ध्रुवः' इति प्रकाशनात् ॥ २६ ॥

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७ ॥

### भाष्यम्

कुतोऽशोकः ? नियतत्वादित्याह – जातस्येति ॥ २७ ॥

### तात्पर्यम्

तस्मान्नात्राश्चर्यबुद्धिः कर्तव्या ॥ २७-२८ ॥

**अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।**
**अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २८ ॥**

### भाष्यम्

तदेव स्पष्टयति – **अव्यक्तादीनीति** ॥ २८ ॥

**आश्चर्यवत् पश्यति कश्चिदेन-**
**माश्चर्यवद् वदति तथैव चान्यः ।**
**आश्चर्यवच्चैनमन्यः शृणोति**
**श्रुत्वाऽप्येनं वेद नचैव कश्चित् ॥ २९ ॥**

### भाष्यम्

देहयोगवियोगस्य नियतत्वादात्मनश्चेश्वरसरूपत्वात् सर्वथाऽनाशान्न शोकः कार्य इत्युपसंहर्तुमैश्वरं सामर्थ्यं पुनर्दर्शयति – **आश्चर्यवदिति** । दुर्लभत्वेनेत्यर्थः । तद्ध्याश्चर्यं लोके । दुर्लभोऽपीश्वरसरूपत्वात् सूक्ष्मत्वाच्चाऽत्मनस्तद्द्रष्टा ॥ २९-३८ ॥

### तात्पर्यम्

किं तर्ह्याश्चर्यो भगवानेवेत्याह । **आश्चर्यवदिति** । आश्चर्यमेव सन्तमेनमाश्चर्यवत्पश्यति न पुनरनाश्चर्यम् ।

**'गगनं गगनाकारं सागरः सागरोपमः'** । **इत्यादिवत्** ।
**'आश्चर्यो भगवान्विष्णुर्यस्मान्नैतादृशः क्वचित् ।**
**तस्मात्तद्गोचरं ज्ञानं तद्गोचरवदेव तु' ॥ इति ब्रह्मतर्के ।**
**अनाश्चर्यवदप्यसुरादयः पश्यन्तीति कश्चिदिति विशेषणम् ॥२९॥**

देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।
तस्मात् सर्वाणि भूतानि न त्वं शोचितुमर्हसि।। ३० ।।

## तात्पर्यम्

देही कुतोऽवध्य: ? यस्मादयमीश्वर: सर्वस्य जीवस्य सूक्ष्मे स्थूले च देहे रक्षकत्वेनावस्थित: अत एवावध्य: । न स्वसामर्थ्यं कस्यापि ।

'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।
यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया' ।। इति हि भागवते ।

'तत्र तत्र स्थितो विष्णुर्नित्यं रक्षति नित्यदा ।
अनित्यदैवानित्यं च नित्यानित्ये ततस्ततः ।
भावाभावनियन्ता हि तदेकः पुरुषोत्तमः' ।। इति पाद्मे ।। ३० ।।

स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते।। ३१ ।।

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ।। ३२ ।।

अथ चेत् त्वमिमं धर्म्यं सङ्ग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि।। ३३ ।।

अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते ।। ३४ ।।

भयाद् रणादुपरतं मंस्यन्ते त्वां महारथाः ।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम्।। ३५ ।।

अवाच्यवादांश्च वहून् वदिष्यन्ति तवाहिताः ।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम्।। ३६ ।।

हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ।। ३७ ।।

## तात्पर्यम्

जित्वा स्वर्गं महीं च ।

'ये युद्ध्यन्ते प्रधनेषु शूरासो ये तनुत्यजः' इति श्रुतेः ।।३७-३८।।

सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ।। ३८ ।।

एषा तेऽभिहिता साङ्ख्ये वुद्धिर्योगे त्विमां शृणु ।
वुद्ध्या युक्तो यया पार्थ कर्मवन्धं प्रहास्यसि ।। ३९ ।।

## भाष्यम्

साङ्ख्यं ज्ञानम् ।

'शुद्धात्मतत्त्वविज्ञानं साङ्ख्यमित्यभिधीयते' इति भगवद्वचनाद् व्यासस्मृतौ ।

योग उपायः ।

'दृष्टा योगाः प्रयुक्ताश्च पुंसां श्रेयःप्रसिद्धये' । इति प्रयोगाद् भागवते ।

नेतरौ साङ्ख्ययोगावुपादेयत्वेन विवक्षितौ कुत्रचित् सामस्त्येन । कर्मयोग इत्यादिप्रयोगाच्च । निन्दितत्वाच्चेतरयोः मोक्षधर्मेषु भिन्नमतत्वमुक्त्वा

पञ्चरात्रस्तुत्या । वेदानां त्वेकार्थत्वान्न विरोधः । पार्थक्यं तु साङ्ख्याद्यपेक्षया युक्तम् । तत्रैव चित्रशिखण्डिशास्त्रे पञ्चरात्रमूले वेदैक्योक्तेश्च । एवमेव सर्वत्र साङ्ख्ययोगशब्दार्थ उपादेयो वर्णनीयः । युक्तेश्च । ज्ञानं हि जैवमुक्तम् । उपायश्च वक्ष्यते । बुद्ध्यतेऽनयेति बुद्धिः । साङ्ख्यविषयो यया वाचा बुद्ध्यते सा वागभिहितेत्यर्थः ॥ ३९-४० ॥

## तात्पर्यम्

सम्यक् ख्यातिर्ज्ञानं साङ्ख्यम् । युज्यतेऽनेनेति योगस्तदुपायः ।

'सम्यक्तत्वदृशिः साङ्ख्यं योगस्तत्साधनं स्मृतम्' । इति शब्दनिर्णये ।

**'ब्रह्मतर्कस्तर्कशास्त्रं विष्णुना यत्समीरितम् ।**
**अक्षपादकणादौ च साङ्ख्ययोगौ च हैतुकाः ।**
**बौद्धपाशुपताद्यास्तु पाषण्डा इति कीर्तिताः ।**
**मीमांसा त्रिविधा प्रोक्ता ब्राह्मी दैवी च कार्मिकी ।**
**ब्रह्मतर्कं च मीमांसां सेवेत ज्ञानसिद्धये ।**
**वैदिकज्ञानवैरूप्यान्नान्यत्सेवेत पण्डितः' ॥**

इत्यन्यसाङ्ख्ययोगयोर्निषिद्धत्वान्नारदीये । साङ्ख्यस्य निरीश्वरत्वादुक्तत्वाच्चेश्वरस्य साङ्ख्यैर्योगैश्च विहितहिंसाया अप्यनर्थहेतुत्वाङ्गीकारात् । अत्र तु युद्धविधानाच्च । मोक्षार्थत्वेनैव कर्मबन्धं प्रहास्यसीति । परमसाङ्ख्ययोगयोश्चोक्तार्थत्वेनैव न विरोधः ॥ ३९ ॥

**नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।**
**स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४० ॥**

## तात्पर्यम्

'प्रारम्भमात्रमिच्छा वा विष्णुधर्मे न निष्फला ।
न चान्यधर्माकरणाद्दोषवान्विष्णुधर्मकृत्' ।। इत्याग्नेये ।

'स्वोचितेनैव धर्मेण विष्णुपूजामृते क्वचित् ।
नाप्रवृत्तिः प्रवृत्तिर्वा यत्र धर्मः स वैष्णवः ।
एनं धर्मं च देवाद्या वर्तन्ते सात्त्विका जनाः ।
एष कार्तयुगो धर्मः पाञ्चरात्रश्च वैदिकः ।
तत्प्रीत्यर्थं विनाऽन्यस्मै नोदविन्दुं न तण्डुलम् ।
दयान्निराशीश्च सदा भवेद्भक्तश्च केशवे ।
नैतत्समेऽधिके वाऽपि कुर्याच्छङ्कामपि क्वचित् ।
जानीयात्तदधीनं च सर्वं तत्तत्त्ववित्सदा ।
यथाक्रमं तु देवानां तारतम्यविदेव च ।
एष भागवतो मुख्यस्त्रेतादिषु विशेषतः ।
एष धर्मोऽतिफलदो विशेषेण पुनः कलौ ।
एवं भागवतो यस्तु स एव हि विमुच्यते ।
त्रैविद्यस्त्वपरो धर्मो नानादैवतपूजनम् ।
तत्रापि विष्णुर्ज्ञातव्यः सर्वेभ्योऽभ्यधिको गुणैः ।
समर्पयति यज्ञाद्यमन्ततस्त्वेव विष्णवे ।
त्रैविद्यधर्मा पुरुषः स्वर्गं भुक्त्वा निवर्तते ।
पुनः कुर्यात्पुनः स्वर्गं याति यावद्धरेर्वशे ।
सर्वान्देवान्प्रविज्ञाय तत्कर्मैव सदा भवेत् ।
सम्यक्तत्वापरिज्ञानादन्यकर्मकृतेरपि ।
स्वर्गादिप्रार्थनाच्चैव रागादेश्चापरिक्षयात् ।
सदा विष्णोरस्मरणात् त्रैविद्यो नाप्नुयात्परम् ।
क्रमेण मुच्यते विष्णौ कर्माण्यन्ते समर्पयन् ।
यदि सर्वाणि नियमाज्जन्मभिर्बहुभिः शुभैः ।

परं विष्णुं न यो वेत्ति कुर्वाणोऽपि त्रयीक्रियाः ।
नासौ त्रैविद्य इत्युक्तो वेदवादी स उच्यते ।
वादो विवादः सम्प्रोक्तो वादो वचनमेव च ।
वेदोक्ते विष्णुमाहात्म्ये विवादात्पठनादपि ।
अथवा निरर्थकात्पाठाद्वेदवादी स उच्यते ।
वेदवादरतो न स्यान्न पाषण्डी न हैतुकी ।
तेभ्यो याति तमो घोरमन्धं यस्मान्न चोत्थितिः ।
अनारम्भमनन्तश्च नित्यदुःखं सुखोज्झितम् ।
वव्रं यद्वेदगदितं तत्र यान्त्यसुरादयः' ।। ४० ।।

व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ।। ४१ ।।

### भाष्यम्

योग इमां बुद्धिं शृण्वित्युक्तम्; बह्व्यो हि बुद्धयो मतभेदात्; तत् कथमेकत्र निष्ठां करोमीत्यत आह– व्यवसायात्मिकेति । सम्यग् युक्तिनिर्णीतानां मतानामैक्यमेवेत्यर्थः ।। ४१ ।।

### तात्पर्यम्

'बुद्धिर्निर्णीततत्त्वानामेका विष्णुपरायणा ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम्' ।। इति ब्रह्मवैवर्ते ।।४१।।

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः ।। ४२ ।।

कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ।। ४३ ।।

भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ।। ४४ ।।

## भाष्यम्

स्युरवैदिकानि मतान्यव्यवसायात्मकानि; न तु वैदिकानि । तेऽपि हि केचित् कर्माणि स्वर्गादिफलान्येवाऽहुरित्यत आह– **यामिमामिति** । यामाहुस्तयेत्यन्वयः । मोक्षफलमपेक्ष्य स्वर्गादिपुष्पयुक्तां वाचं प्रवदन्ति । वेदवादरताः कर्मादिवाचकवेदवादरताः; वेदैर्यन्मुखत उच्यते तत्रैव रताः । नान्यदस्तीति वादिनः ।

**'परोक्षविषया वेदाः', 'परोक्षप्रिया इव हि देवाः', 'मां विधत्तेऽभिधत्ते'**

इत्यादिभिः पारोक्ष्येण हि प्रायो भगवन्तं वदन्ति । **भोगैश्वर्यगतिं प्रति** तत्प्राप्तिं प्रति । तत्प्राप्तिफला एव वेदा इति वदन्तीत्यर्थः । तेषां सम्यग् युक्तिनिर्णयात्मिका बुद्धिः समाधौ समाध्यर्थे न विधीयते । सम्यङ्निर्णीतार्थानां हीश्वरे मनः समाधानं सम्यग् भवति । तद्धि मोक्षसाधनम् । उक्तं चैतदन्यत्र–

**'न तस्य तत्त्वग्रहणाय साक्षाद् वरीयसीरपि वाचः समासन् ।**
**स्वन्पे निरुक्त्या गृहमेधिसौख्यं न यस्य हेयानुमितं स्वयं स्यात्' ।।**
**इति ।। ४२-४४ ।।**

## तात्पर्यम्

अव्यवसायबुद्धिः केषाम् ? यां वाचमविपश्चितः प्रवदन्ति । तयाऽपहृतचेतसाम् । बुद्धिर्व्यवसायात्मकत्वेन समाधानेन वर्तते ।

**'यथावस्तु यथा ज्ञानं तत्साम्यात्सममीरितम् ।**
**विषमं त्वन्यथाज्ञानं समाधानं समस्थितिः ।**

न तद्भवत्यसद्वाक्यैर्विषमीकृतचेतसाम् ।
स्वर्गादिपुष्पवाचेव वचनं यदचेतसाम् ।
न मन्यन्ते फलं मोक्षं विष्णुसामीप्यरूपकम् ।
फलदं च न मन्यन्ते तं विष्णुं जगतः पतिम् ।
भोगैश्वर्यानुगत्यर्थं क्रियावाहुल्यसन्तताम् ।
वहुसंसारफलदामन्ते तमसि पातिनीम् ।
यां वदन्ति दुरात्मानो वेदवाक्यविवादिनः ।
तया सम्मोहितधियां कथं तत्त्वज्ञता भवेत्' ।। इति च ।

'इष्टापूर्तं मन्यमाना वरिष्ठं
नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ।
नाकस्य पृष्ठे सुकृते तेऽनुभूत्वा
इमं लोकं हीनतरं वा विशन्ति' ।। इति च आथर्वणश्रुतिः ।

'वेदवादरतो न स्यान्न पाषण्डी न हैतुकी' ।। इति हि भागवते ।

'ये न जानन्ति तं विष्णुं याथातथ्येन संशयात् ।
जिज्ञासवश्च नितरां श्रद्धावन्तः सुसाधवः ।
निर्णेतॄणामभावेन केवलं ज्ञानवर्जिताः ।
ते याज्ञिकाः स्वर्गभोगक्षये यान्ति मनुष्यताम् ।
यैर्निश्चितं परत्वं तु विष्णोः प्रायो न यातनाम् ।
व्रह्महत्यादिभिरपि यान्त्याधिक्ये चिरं न तु ।
विशेष एव तेषां तु तदन्येषां विपर्ययः ।
ये तु भागवताचार्यैः सम्यग्यज्ञादि कुर्वते ।
वहिर्मुखा भगवतो निवृत्ताश्च विकर्मणः ।
दक्षिणातर्पितानां तु ह्याचार्याणां तु तेजसा ।
यान्ति स्वर्गं ततः क्षिप्रं तमोऽन्धं प्राप्नुवन्ति च ।
तदन्ये नैव च स्वर्गं यान्ति विष्णुवहिर्मुखाः' ।। इति नारदीये ।

।। ४२-४४ ।।

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ।। ४५ ।।

### भाष्यम्

तां योगबुद्धिमाह- **त्रैगुण्यविषया** इत्यादिनेतरदपोद्य । वेदानां परोक्षार्थत्वात् त्रिगुणसम्बन्धि स्वर्गादि प्रतीतितोऽर्थ इव भवति(भाति) ।

'परोक्षवादी वेदोऽयम्' इति ह्युक्तम् ।

अतः प्रातीतिकेऽर्थे भ्रान्तिं मा कुर्वित्यर्थः ।

'वादो विषय(कत्वं)कृत्त्वं च मुखतो वचनं स्मृतम्' । इत्यभिधानम् । न तु वेदपक्षो निषिध्यते ।

'वेदे रामायणे चैव पुराणे भारते तथा ।
आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते' ।

'सर्वे वेदाः यत्पदमामनन्ति'

'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ।'

'वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः ।' इति वेदानां सर्वात्मना विष्णुपरत्वोक्तेः । तद्विहितस्य तद्विरुद्धस्य च धर्माधर्मत्वोक्तेः
।। ४५ ।।

### तात्पर्यम्

त्रैगुण्याख्यं विषं यापयन्ति अपगमयन्तीति त्रैगुण्यविषयाः ।

'आश्रित्य वेदांस्तु पुमांस्त्रैगुण्यविषहारिणः ।
निस्त्रैगुण्यो भवेन्नित्यं वासुदेवैकसंश्रयः' ।। इति च ।

'सत्त्वं साधुगुणाद्विष्णुरात्मा सन्ततिहेतुतः' ।। इति च ।

सन्ततविष्णुस्मरणं नित्यसत्त्वस्थत्वम् । परमात्मा मम स्वामीति ज्ञानमात्मवत्त्वम् । तेनैक्यज्ञानं निवारयति । विरुद्धयोगक्षेमेच्छावर्जितः । अन्यथोत्थानादेरप्ययोगात् ।। ४५ ।।

**यावानर्थ उदपाने सर्वतः सम्प्लुतोदके ।**
**तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ।। ४६ ।।**

### भाष्यम्

तथाऽपि काम्यकर्मणां फलं ज्ञानिनां न भवतीति साम्यमेवेत्यत आह– **यावानर्थ** इति । यथा यावानर्थः प्रयोजनमुदपाने कूपे भवति तावान् सर्वतः सम्प्लुतोदकेऽन्तर्भवत्येव, एवं सर्वेषु वेदेषु यत् फलं तद् विजानतोऽपि ज्ञानिनो ब्राह्मणस्य फलेऽन्तर्भवति । ब्रह्म अणतीति ब्राह्मणः अपरोक्षज्ञानी । स हि ब्रह्म गच्छति । विजानत इति ज्ञानफलत्वं तस्य दर्शयति ।। ४६ ।।

### तात्पर्यम्

'उद्रेकात्पातृराहित्यादनन्त्वाचाखिलस्य च ।
प्रलयेऽप्युदपानोऽसौ भगवान् हरिरीश्वरः ।
प्रकृतिर्ह्युदरूपेण सर्वमावृत्य तिष्ठति ।
प्रलयेऽतो लयं प्राहुः सर्वतः संप्लुतोदकम्' ।। इति च ।

'यावत्प्रयोजनं विष्णोः सकाशात्साधकस्य च ।
धर्ममोक्षादिकं तावत्सर्ववेदविदो भवेत् ।
वेदार्थनिर्णयो यस्माद्विष्णोर्ज्ञानं प्रकीर्तितम् ।
ज्ञानात्प्रसन्नश्च हरिर्यतोऽखिलफलप्रदः' ।। इति च ।

सर्वतः संप्लुतोदकेऽप्युद्रिक्तः पालकवर्जितः । कालाद्यनश्च यो विष्णुस्तस्माद्यावत्फलं तावत्सर्ववेदेषु विशेषज्ञस्यैव भवतीत्यर्थः । सर्वे हि विष्णोरन्ये प्रलयकाले नोद्रिक्ताः । ये चोद्रिक्ता मुक्ता रमा च तेऽपि न पालकवर्जिताः, विष्णुपाल्यत्वात् । न च मुक्ताः कालादि-चेष्टकाः । नचोद्रिक्तत्वं तेषां तद्वत् । अत उदपानो विष्णुरेव । प्रलये विशेषतोऽपि ।

'आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनाऽस ।
तम आसीत्तमसा गूळ्हमग्रे अप्रकेतं सलिलं सर्वमा इदम्' ।

'आपो वा इदमग्रे सलिलम् आसीत् सलिल एको द्रष्टाऽद्वैतो भवति' ।। इत्यादि श्रुतिभ्यः ।। ४६ ।।

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।**
**मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ।। ४७ ।।**

### भाष्यम्

कामात्मनां निन्दा कृता कथमेषाम् ? 'स्वर्गकामो यजेत' । इत्यादौ कामस्यापि विहितत्वादित्यत आह- **कर्मण्येवेति** । त इत्युप-लक्षणार्थम् । तव ज्ञानिनोऽपि न फलकामकर्तव्यता । किम्वन्येषाम् । न त्वस्ति केषाञ्चिन्न तेऽस्तीति । स हि ज्ञानी नरांश इन्द्रश्च । मोहादिस्त्वभिभवादेः । यदि तेषां शुद्धसत्त्वानां न स्याज्ज्ञानम्, क्वान्येषाम् ? उपदेशादेश्च सिद्धं ज्ञानं तेषाम् ।

'पार्थार्ष्टिषेण-' इत्यादिज्ञानिगणनाच्च । कामनिषेध एवात्र । फलानि ह्यस्वातन्त्र्येण भवन्ति । न हि कर्मफलानि कर्माभावे यत्नतोऽपि भवन्ति । भवन्ति च काम्यकर्मिणो विपर्ययप्रयत्नेऽपि अविरोधे अतः कर्माकरणे एव प्रत्यवायः । न तु ज्ञानादिनाऽकामनया वा फलाप्राप्तौ । अतः कर्मण्येवाधिकारः । अतस्तदेव कार्यम् । न तु कामेन ज्ञानादिनिषेधेन वा फलप्राप्तिः । कामवचनानां तु तात्पर्यं भगवतैवोक्तम्-

**'रोचनार्थं फलश्रुतिः' 'यथा भैषज्यरोचनम्' इत्यादौ भागवते ।**

अत एव कामी यजेतेत्यर्थः । न तु कामी भूत्वेत्यर्थः । 'निष्कामं ज्ञानपूर्वं च' इति वचनात् । वक्ष्यमाणेभ्यश्च । 'वसन्ते वसन्ते ज्योतिषा यजेत' इत्यादिभ्यश्च । अतो मा कर्मफलहेतुर्भूः । कर्मफलं तत्कृतौ हेतुर्यस्य स कर्मफलहेतुः । स मा भूः । तर्हि न करोमीत्यत आह– **मा त इति** । कर्माकरणे च स्नेहो माऽस्त्वित्यर्थः । अन्यफलाभावेऽपि मत्प्रसादाख्यफलभावात् । इच्छा च तस्य युक्ता 'वृणीमहे ते परितोषणाय' इत्यादिमहदाचारात् । अनिन्दनात्, विशेषत इतरनिन्दनाच्च । सामान्यं विशेषो बाधत इति च प्रसिद्धम्– 'सर्वानानय नैकं मैत्रम्' इत्यादौ । अतः - 'नैकात्मतां मे स्पृहयन्ति केचित्', 'भक्तिमन्विच्छन्तः', 'ब्रह्मजिज्ञासा', 'विज्ञाय प्रज्ञां कुर्वीत' 'द्रष्टव्यः' इत्यादिवचनेभ्यः, स्वार्थसेवकं प्रति न तथा स्नेहः किं ददामीत्युक्ते सेवादियाचकं प्रति बहुतरः स्नेह इति लौकिकन्यायाच्च भक्तिज्ञानादिप्रार्थना कार्येति सिद्धम् ।। ४७ ।।

## तात्पर्यम्

कर्माधिकारिण एव त्वदादयो जीवाः । फलं तु मदायत्तमिति भावः । मा कर्मफलहेतुर्भूः नेश्वरोऽहमिति भावं कुरु ।

'एष उ एव शुभाशुभैः कर्मफलैरेनं संयोजयति न स्वयं संयुक्तो भवति यदेनं कर्मफलैः संयोजयति न स्वयं संयुक्तो भवति तस्मादन्य एवासौ भगवान्वेदितव्य' इति पैङ्गिश्रुतिः ।। ४७ ।।

**योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय ।**
**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ।।४८।।**

### भाष्यम्

पूर्वश्लोकोक्तं स्पष्टयति – **योगस्थ इति** । योगस्थः उपायस्थः । सङ्गं फलस्नेहं त्यक्त्वा । तत एव सिद्ध्यसिद्ध्योः समो भूत्वा । स एव च मयोक्तो योगः ।। ४८ ।।

### तात्पर्यम्

सङ्गं फलस्नेहम् ।। ४८ ।।

**दूरेण ह्यवरं कर्म बुद्धियोगाद् धनञ्जय ।**
**बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ।। ४९ ।।**

### भाष्यम्

इतश्च योगाय युज्यस्वेत्याह– **दूरेणेति** । बुद्धियोगात् ज्ञानलक्षणादुपायात् दूरेण अतीव । अतो बुद्धौ शरणं ज्ञाने स्थितिम् । फलं कर्मकृतौ हेतुर्येषां ते फलहेतवः ।। ४९ ।।

### तात्पर्यम्

बुद्धौ जातायामपि विष्णुमेव शरणमन्विच्छ ।

'अज्ञानां ज्ञानिनां चैव मुक्तानां शरणं हरिः ।
तं ये स्वैक्येन मन्यन्ते सर्वभिन्नं गुणोच्छ्रयात् ।
कृपणास्ते तमस्यन्धे निपतन्ति न संशयः ।
न तेषामुत्थितिः क्वापि नित्यातिशयदुःखिनाम् ।
गुणभेदविदां विष्णोर्भेदाभेदविदामपि ।
देहकर्मादिषु तथा प्रादुर्भावादिकेऽपि वा ।
स्वोद्रिक्तानां तदीयानां निन्दां कुर्वन्ति येऽपि च ।
सर्वेषामपि चैतेषां गतिरेषा न संशयः' ।। इति नारदीये ।। ४९ ।।

बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ।। ५० ।।

### भाष्यम्

ज्ञानफलमाह – **बुद्धियुक्त इति** । सुकृतमप्यप्रियं मानुष्यादिफलं जहाति, न बृहत्फलमप्युपासनादिनिमित्तम्-

'न हास्य कर्म क्षीयते',
'अविदित्वाऽस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद् भवति' इत्यादिश्रुतिस्मृतिभ्यः ।

अतः कर्मक्षयश्रुतिरज्ञानिविषया सर्वत्र । उभयक्षयश्रुतिरप्यनिष्टविषया । नहीष्टपुण्यक्षये किञ्चित् प्रयोजनम् । न चेष्टनाशो ज्ञानिनो युक्तः । इष्टाश्च केचिद्विषयाः -

'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति',
'प्रजापतेः सभां वेश्म प्रपद्ये । यशोऽहं भवामि ब्राह्मणानाम्',
'स्त्रीभिर्वा यानैर्वा', 'अस्माद्ध्येवाऽत्मनो यद्यत् कामयते तत्तत् सृजते',

**'कामान्नी कामरूप्यनुसञ्चरन्', 'स एकधा भवति'** इत्यादि- श्रुतिभ्यः ।

बहुत्वेऽप्यात्मसुखस्य पुनरिष्टत्वात् कर्मसुखे न विरोधः ।

अनुभवशक्तिश्चेश्वरप्रसादात् । श्रुतेश्च । न च शरीरपातात् पूर्वमेतत्-

**'स तत्र पर्येति', 'एतमानन्दमयमात्मानमुपसङ्क्रम्य' इत्याद्युत्तरत्र श्रवणात् ।**

न चैकीभूत एव ब्रह्मणा सः-

**'मग्नस्य हि परेऽज्ञाने किं न दुःखतरं भवेत्' इत्यादिनिन्दनान्मोक्षधर्मे ।**

परिहारे पृथग् भोगाभिधानाच्च । शुकादीनां पृथग्दृष्टेश्च । 'जगद्व्यापार-वर्जम्' इत्यैश्वर्यमर्यादोक्तेश्च ।

**'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' इति च ।**

उपाधिनाशे नाशाच्च प्रतिबिम्बस्य । नचैकीभूतस्य पृथग्ज्ञाने मानं पश्यामः । 'आसं दुःखी, नाऽसम्' इति ज्ञानविरोधाच्चेश्वरस्य । अनेन रूपेणेति च । भेदाभावात् । न च प्रतिबिम्बस्य बिम्बैक्यं लोके पश्यामः । उपाधिनाशे मानं वा । 'मग्नस्य हि परेऽज्ञाने' इति दुःखात्मकत्वोक्तेश्च । 'यावदात्मभावित्वात्' इत्युपाधिनित्यताभिधानाच्च । अतोऽन्यवचनं प्रतीयमानमप्यौपचारिकम् । दृष्टाश्च ते भगवतो भिन्ना नारदेन । प्रतिशाखं च 'स एकधा' इत्यादिषु भेदेन प्रतीयन्ते । विरोधे तु युक्तिमतामेव बलवत्त्वम् । युक्तयश्चात्रोक्ताः– 'मग्नस्य हि' इत्यादयः । अतो जले जलैकीभाववदेकीभावः । उक्तं च– 'यथोदकं शुद्धे शुद्धम्', 'यथा नद्यः' इत्यादौ । तत्राप्यन्योन्यात्मकत्वे वृद्ध्यसम्भवः । अस्ति चेषत् समुद्रेऽपि द्वारि । महत्त्वादन्यत्रादृष्टिः ।

'ता एवापो ददौ तस्य स ऋषिः शंशितव्रतः'
इति महाकौर्मे समर्थानां भेदज्ञानाच्च ।

'नैव तत् प्राप्नुवन्त्येते ब्रह्मेशानादयः सुराः ।
यत् ते पदं हि कैवल्यम्' इति निषेधाच्च नारदीये ।

सविचारश्च निर्णयः कृतो मोक्षधर्मेषु । बलवांश्च सविचारो निर्णयो वाक्यमात्रात् । अतो– 'यत्र नान्यत् पश्यति' इत्याद्यपि तदधीन-सत्तादिवाचि । अन्यथा कथमैश्वर्यादि स्यात्? न च तन्मायामय-मित्युक्तम् । अन्यथा कथं तत्रैव – 'स एकधा' इत्यादि ब्रूयात्? न च –'न ह वै सशरीरस्य' इत्यादिविरोधः । वैलक्षण्यात् तच्छरीराणाम् । अभौतिकानि हि तानि नित्योपाधिविनिर्मितानीश्वरशक्त्या । तथाचोक्तम्–

'शरीरं जायते तेषां षोडश्या कलयैव तु' । इत्यादि नारायणाष्टाक्षरकल्पे ।

वदन्ति च लौकिकवैलक्षण्येऽभावशब्दम्- 'अप्रहर्षमनानन्दम्', 'सुखदुःखबाह्यः' इत्यादिषु । निरुक्त्यभावाच्च न तानि शरीराणि । तथाहि श्रुतिः - 'अशरीरी.. तच्छरीरमभवत्' इति । न हि तानि शीर्णानि भवन्ति । 'सर्गेऽपि नोपजायन्ते' इत्यादिवचनात् । साम्यात् प्रयोगः । प्रयोगाच्च-

'अनिन्द्रिया अनाहारा अनिष्पन्दाः सुगन्धिनः'
'देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनाम्' इत्यादि दृष्टदेहेष्वेव ।
नचैषान्या गौणी मुक्तिः ।

'बहुनाऽत्र किमुक्तेन यावच्छ्वेतं न गच्छति ।
योगी तावन्न मुक्तः स्यादेष शास्त्रस्य निर्णयः' ।।

इत्यादित्यपुराणे तदन्यमुक्तिनिषेधात् ।

ये त्वत्रैव भगवन्तं प्रविशन्ति तेऽपि पश्चात् तत्रैव यान्ति । योग्यत्वं चात्र विवक्षितम् । युधिष्ठिरप्रश्न इतरनिन्दनाच्च । सायुज्यं च ग्रहवत् । तदुक्तेश्च–

**'भुञ्जते पुरुषं प्राप्य यथा देवग्रहादयः ।**
**तथा मुक्तावुत्तमायां वाह्यान् भोगांस्तु भुञ्जते'** ।। इति नारायणाष्टाक्षरकल्पे ।

अतोऽनिष्टस्यैव मोक्षः । सोऽस्त्येव सर्वात्मना– 'अदुःखम्', 'सर्वदुःखविवर्जिताः', 'अशोकमहिमम्', 'यत्र गत्वा न शोचति' इत्यादिभ्यः । विशेषवचनाभावाच्च । येषां त्वीषद् दृश्यते ते न सायुज्यं प्राप्ता । सामीप्याद्येव तेषाम् । अतः प्रारब्धकर्मशेषभावात् तद्भुक्त्वा सायुज्यं गच्छन्ति ।

**तच्चोक्तम्-**
**'सङ्कर्षणादयः सर्वे स्वाधिकारादनन्तरम् ।**
**प्रविशन्ति परं देवं विष्णुं नास्त्यत्र संशयः'** ।। इति व्यासयोगे ।

**अतोऽनिष्टस्य सर्वात्मना वियोगः ।**

**'परब्रह्मत्वमिच्छामि परमात्मन् जनार्दन'** । इत्यादिना ब्रह्मादिभिरपि प्रार्थितत्वात् ।

**'न मोक्षसदृशं किञ्चिदधिकं वा सुखं क्वचित् ।**
**ऋते वैष्णवमानन्दं वाङ्मनोऽगोचरं महत्'** ।।

इत्यादेश्च ब्रह्मादिपदादप्यधिकतमं सुखं च मोक्ष इति सिद्धम् । अतो योगाय युज्यस्व । ज्ञानोपायाय । तद्धि कर्मकौशलम् ।। ५० ।।

### तात्पर्यम्

यथावद्विष्णुं ज्ञात्वा तदर्थत्वेन कर्मकरणमित्येतत्कर्मकौशलमेव योगः । भगवज्ज्ञानमेव बुद्धिः ।। ५०, ५१ ।।

**कर्मजं वुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।**
**जन्मवन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ।। ५१ ।।**

### भाष्यम्

तदुपायमाह - **कर्मजमिति** । कर्मजं फलं त्यक्त्वा, अकामनयेश्वराय समर्प्य । बुद्धियुक्ताः सम्यग्ज्ञानिनो भूत्वा पदं गच्छन्ति । सयोगकर्म ज्ञानसाधनम्; तन्मोक्षसाधनमिति भावः ।। ५१ ।।

**यदा ते मोहकलिलं वुद्धिर्व्यतितरिष्यति ।**
**तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ।। ५२ ।।**

### भाष्यम्

कियत्पर्यन्तमवश्यं कर्तव्यानि मुमुक्षुणैवं कर्माणीति ? आह- **यदेति** । निर्वेदं नितरां लाभम् । प्रयोगात्-

'तस्माद् व्राह्मणः पाण्डित्यं निर्विद्य' ।। इत्यादि ।

न हि तत्र वैराग्यमुपपद्यते । तथासति पाण्डित्यादिति स्यात् । न च ज्ञानिनां भगवन्महिमादिश्रवणे विरक्तिर्भवति ।

'आत्मारामा हि मुनयो निर्ग्राह्या अप्युरुक्रमे ।
कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः' ।। इति वचनात् ।

अनुष्ठानाच्च शुकादीनाम् । न च तेषां फलं नास्ति। तस्यैव महत्सुखत्वात् तेषाम्-

'या निर्वृतिस्तनुभृतां तव पादपद्मध्यानाद्
भवज्जनकथाश्रवणेन वा स्यात् ।
सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्
किम्वन्तकासिलुलितात् पततां विमानात्' ।। इत्यादिवचनात् ।

तेषामप्युपासनादिफलस्य साधितत्वात् । तारतम्याधिगतेश्च । तथाहि- यदि तारतम्यं न स्यात्,

'नाऽत्यन्तिकं विगणयन्त्यपि ते प्रसादम्',
'नैकात्मतां मे स्पृहयन्ति केचित्'
'एकत्वमप्युत दीयमानं न गृह्णन्ति'

इति मुक्तिमप्यनिच्छतामपि मोक्ष एव फलं तमिच्छतामपि स एव भवति सुप्रतीकादीनामिति कथमनिच्छतां स्तुतिरुपपन्ना स्यात् ? वचनाच्च–

'यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे ।
तथा मुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदने ।
योगिनां भिन्नलिङ्गानामाविर्भूतस्वरूपिणाम् ।
प्राप्तानां परमानन्दं तारतम्यं सदैव हि' ।। इति ।

'न त्वामतिशयिष्यन्ति मुक्तावपि कथञ्चन ।
मद्भक्तियोगाज्ज्ञानाच्च सर्वानतिशयिष्यसि' ।। इति च ।

साम्यवचनं तु प्राचुर्यविषयं दुःखाभावविषयं च । तच्चोक्तम्-

### तात्पर्यम्

यथावद्विष्णुं ज्ञात्वा तदर्थत्वेन कर्मकरणमित्येतत्कर्मकौशलमेव योगः । भगवज्ज्ञानमेव बुद्धिः ॥ ५०, ५१ ॥

**कर्मजं वुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।**
**जन्मवन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ ५१ ॥**

### भाष्यम्

तदुपायमाह - **कर्मजमिति** । कर्मजं फलं त्यक्त्वा, अकामनयेश्वराय समर्प्य । बुद्धियुक्ताः सम्यग्ज्ञानिनो भूत्वा पदं गच्छन्ति । सयोगकर्म ज्ञानसाधनम्; तन्मोक्षसाधनमिति भावः ॥ ५१ ॥

**यदा ते मोहकलिलं वुद्धिर्व्यतितरिष्यति ।**
**तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५२ ॥**

### भाष्यम्

कियत्पर्यन्तमवश्यं कर्तव्यानि मुमुक्षुणैवं कर्माणीति ? आह- **यदेति** । निर्वेदं नितरां लाभम् । प्रयोगात्-

'तस्माद् व्राह्मणः पाण्डित्यं निर्विद्य' ॥ इत्यादि ।

न हि तत्र वैराग्यमुपपद्यते । तथासति पाण्डित्यादिति स्यात् । न च ज्ञानिनां भगवन्महिमादिश्रवणे विरक्तिर्भवति ।

'आत्मारामा हि मुनयो निर्ग्राह्या अप्युरुक्रमे ।
कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः' ॥ इति वचनात् ।

अनुष्ठानाच्च शुकादीनाम् । न च तेषां फलं नास्ति। तस्यैव महत्सुखत्वात् तेषाम्-

'या निर्वृतिस्तनुभृतां तव पादपद्मध्यानाद्
भवज्जनकथाश्रवणेन वा स्यात् ।
सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्
किम्वन्तकासिलुलितात् पततां विमानात्' ।। इत्यादिवचनात् ।

तेषामप्युपासनादिफलस्य साधितत्वात् । तारतम्याधिगतेश्च । तथाहि- यदि तारतम्यं न स्यात्,

'नाऽत्यन्तिकं विगणयन्त्यपि ते प्रसादम्',
'नैकात्मतां मे स्पृहयन्ति केचित्'
'एकत्वमप्युत दीयमानं न गृह्णन्ति'

इति मुक्तिमप्यनिच्छतामपि मोक्ष एव फलं तमिच्छतामपि स एव भवति सुप्रतीकादीनामिति कथमनिच्छतां स्तुतिरुपपन्ना स्यात् ? वचनाच्च–

'यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे ।
तथा मुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदने ।
योगिनां भिन्नलिङ्गानामाविर्भूतस्वरूपिणाम् ।
प्राप्तानां परमानन्दं तारतम्यं सदैव हि' ।। इति ।

'न त्वामतिशयिष्यन्ति मुक्तावपि कथञ्चन ।
मद्भक्तियोगाज्ज्ञानाच्च सर्वानतिशयिष्यसि' ।। इति च ।

साम्यवचनं तु प्राचुर्यविषयं दुःखाभावविषयं च । तच्चोक्तम्-

'दुःखाभावः परानन्दो लिङ्गभेदः समा मताः ।
तथाऽपि परमानन्दो ज्ञानभेदात्तु भिद्यते' ।। इति नारायणाष्टाक्षरकल्पे ।

अतो न वैराग्यं श्रुतादावत्र विवक्षितम् । न च सङ्कोचे मानं किञ्चिद् विद्यमान इतरत्र प्रयोगे । महद्भिः श्रवणीयस्य श्रुतस्य च वेदादेः फलं प्राप्स्यसीत्यर्थः ।। ५२ ।।

**श्रुतिविप्रतिपन्ना ते यथा स्थास्यति निश्चला ।।**
**समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ।। ५३ ।।**

### भाष्यम्

तदेव स्पष्टयति - **श्रुतिविप्रतिपन्नेति** । पूर्वं श्रुतिभिर्वेदैर्विप्रतिपन्ना विरुद्धा सती यदा वेदार्थानुकूलेन तत्त्वनिश्चयेन विपरीतवाग्भिरपि निश्चला भवति; ततश्च समाधावचला, ब्रह्मप्रत्यक्षदर्शनेन भेरीताडनादावपि परमानन्दमग्नत्वात्; तदा योगमवाप्स्यसि उपायसिद्धो भवसीत्यर्थः ।। ५३ ।।

### तात्पर्यम्

निर्वेदं नितरां लाभम् ।

'बुद्धिमोहो यदा न स्यादन्यथाज्ञानलक्षणः ।
श्रोतव्यश्रुतसाफल्यं तदा प्राप्नोति मानवः ।।
श्रुतिमार्गं प्रपन्ना तु तदर्थज्ञाननिश्चला ।
समाधानेन तु पुनरापरोक्ष्याच्च निश्चला ।।
विष्णौ प्राप्स्यति तद्योगं मुक्तो भूत्वा तदश्नुते' ।।

इति च पैङ्गिश्रुतौ विशेषेण प्रतिपन्ना ।। ५२, ५३ ।।

अर्जुन उवाच

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम्।। ५४ ।।

भाष्यम्

स्थिता प्रज्ञा ज्ञानं यस्य स स्थितप्रज्ञः । भाष्यतेऽनयेति भाषा । लक्षणमित्यर्थः । उक्तं लक्षणमनुवदति लक्षणान्तरं पृच्छामीति ज्ञापयितुम् - **समाधिस्थस्येति** । कं ब्रह्माणमीशं रुद्रं च वर्तयतीति केशवः । तथाहि निरुक्तिः कृता हरिवंशेषु रुद्रेण कैलासयात्रायाम् ।

'हिरण्यगर्भः कः प्रोक्त ईशः शङ्कर एव च ।
सृष्ट्यादिना वर्तयति तौ यतः केशवो भवान्' ।। इति वचनान्तराच्च ।

किमासीत ? किं प्रत्यासीत ? न चार्जुनो न जानाति तल्लक्षणादिकम् -

'जानन्ति पूर्वराजानो देवर्षयस्तथैव हि ।
तथाऽपि धर्मान् पृच्छन्ति वार्तायै गुह्यवित्तये ।
न ते गुह्याः प्रतीयन्ते पुराणेष्वल्पबुद्धिनाम्' ।। इति वचनात् ।।५४।।

तात्पर्यम्

का भाषा ? कथं भाष्यते ? कैर्गुणैः ? समाधिस्थस्य विषमबुद्धि-वर्जितस्य ।। ५४ ।।

श्रीभगवानुवाच

प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान् ।
आत्मन्येवाऽत्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ।। ५५ ।।

**भाष्यम्**

गमनादिप्रवृत्तिर्नात्यभिसन्धिपूर्विका मत्तादिप्रवृत्तिवदिति **'या निशा'** इत्यादिना दर्शयिष्यन् तल्लक्षणं प्रथमत आह - **प्रजहातीति** । एवं परमानन्दतृप्तः किमर्थं प्रवृत्तिं करोतीति प्रश्नाभिप्रायः । प्रारब्ध-कर्मणेषत्तिरोहितब्रह्मणो वासनया प्रायोऽल्पाभिसन्धिप्रवृत्तयः सम्भवन्तीत्याशयवान् परिहरति । प्रायः सर्वान् प्रजहाति । शुकादीनामपीषद्दर्शनात् ।

**'त्वत्पादभक्तिमिच्छन्ति ज्ञानिनस्तत्त्वदर्शिनः'**

इत्युक्तेस्तामिच्छन्ति । यदा त्विन्द्रादीनामाग्रहो दृश्यते तदाऽभिभूतं तेषां ज्ञानम् । तच्चोक्तम्-

**'आधिकारिकपुंसां तु वृहत्कर्मत्वकारणात् ।**
**उद्भवाभिभवौ ज्ञाने ततोऽन्येभ्ये विलक्षणाः' ।। इति ।**

अत एव वैलक्षण्यादनधिकारिणामाग्रहादि चेदस्ति न ते ज्ञानिन इत्यव-गन्तव्यम् । न चात्र समाधिं कुर्वतो लक्षणमुच्यते । 'यः सर्वत्रा-नभिस्नेहः' इति स्नेहनिषेधात् । नहि समाधिं कुर्वतस्तस्य शुभाशुभ-प्राप्तिरस्ति । असम्प्रज्ञातसमाधेः । सम्प्रज्ञाते त्वविरोधः । तथाऽपि न तत्रैवेति नियमः ।

**'कामादयो न जायन्ते ह्यपि विक्षिप्तचेतसाम् ।**
**ज्ञानिनां ज्ञाननिर्धूतमलानां देवसंश्रयात्' ।। इति स्मृतेः ।**

मनोगता हि कामाः । अतस्तत्रैव तद्विरुद्धज्ञानोत्पत्तौ युक्तं हानं तेषामिति दर्शयति - **मनोगतानिति** । विरोधश्चोच्यते - **'रसोऽप्यस्य**

परं दृष्ट्वा निवर्तते' (गी) इति । न चैतददृष्ट्याऽपलपनीयम् । पुरुषवैशेष्यात् । आत्मना परमात्मना । परमात्मन्येव स्थितः सन् । आत्माख्ये तस्मिन् स्थितस्य तत्प्रसादादेव तुष्टिर्भवति ।

**'विषयांस्तु परित्यज्य रामे स्थितिमतस्ततः ।**
**देवाद् भवति वै तुष्टिर्नान्यथा तु कदाचन' ।।**

**इत्युक्तं हि नारायणाष्टाक्षरकल्पे ।**

**अतो नाऽत्मा जीवः ।। ५५ ।।**

## तात्पर्यम्

'सर्वकामनिवृत्तिस्तु जानतो न कथञ्चन ।

**अनिषिद्धकामितैवातो ह्यकामित्वमितीर्यते ।**
**अपरोक्षदृशोऽपि स्याद्यदा नास्त्यपरोक्षदृक् ।**
**क्वचिद्विरुद्धकामोऽपि यथाऽयुद्ध्यद्धरो हरिम् ।**
**अतोऽनभिभवो यावद्दृशस्तावन्निगद्यते ।**
**स्थितप्रज्ञस्तथाप्यस्य कादाचित्क्यपि या दृशिः ।**
**नियमेनैव मोक्षाय भवेद्योग्या भवेद्यदि ।**
**अयोग्या भक्तिजाता चेत्क्रमान्मुक्त्यै भवेत्तथा' ।। इति च ।**

आत्मनि विष्णौ, आत्मना विष्णुना । तत्प्रसादादेव तुष्टः ।। ५५ ।।

**दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।**
**वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ।। ५६ ।।**

## भाष्यम्

तदेव स्पष्टयत्युत्तरैस्त्रिभिः श्लोकैः । एतान्येव ज्ञानोपायानि च । तच्चोक्तम् -

'तद्वै जिज्ञासुभिः साध्यं ज्ञानिनां यत्तु लक्षणम्' ।। इति ।

शोभनाध्यासो रागः ।

'रसो रागस्तथा रक्तिः शोभनाध्यास उच्यते' । इत्यभिधाने ।। ५६ ।।

**यः सर्वत्रानभिस्नेहस्तत्तत् प्राप्य शुभाशुभम् ।**
**नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ।। ५७ ।।**

**यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ।। ५८ ।।**

## भाष्यम्

सर्वत्रानभिस्नेहत्वाच्छुभाशुभं प्राप्य नाभिनन्दति न द्वेष्टि ।।५७, ५८।।

**विषया विनिवर्तन्ते निराहारस्य देहिनः ।**
**रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ।। ५९ ।।**

## भाष्यम्

न चैतल्लक्षणं ज्ञानमयत्नतोऽपि भवतीत्याहोत्तरश्लोकैः । निराहारत्वेन विषयभोगसामर्थ्याभाव एव भवति । इतरविषयाकाङ्क्षाभावो वा । रसाकाङ्क्षादिर्न निवर्तते । स त्वपरोक्षज्ञानादेव निवर्तत इत्याह - **विषया** इति ।

'इन्द्रियाणि जयन्त्याशु निराहारा मनीषिणः ।
वर्जयित्वा तु रसनामसौ रस्ये च वर्धते' ।। इति वचनाद् भागवते ।

रसशब्दस्य रागवाचकत्वाच्च ।। ५९ ।।

### तात्पर्यम्

रसो रागः ।। ५९ ।।

**यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।**
**इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ।। ६० ।।**

### भाष्यम्

अपरोक्षज्ञानरहितज्ञानिनोऽपि साधारणयत्नवतोऽपि मनो हरन्तीन्द्रियाणि । पुरुषस्य शरीराभिमानिनः । को दोषस्ततः ? प्रमाथीनि प्रमथनशीलानि पुरुषस्य ।। ६० ।।

**तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।**
**वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ।। ६१ ।।**

### भाष्यम्

तर्ह्यशक्यान्येवेत्यत आह- **तानीति** । बहुयत्नवतः शक्यानि । अतो यत्नं कुर्यादित्याशयः । युक्तो मयि मनोयुक्तः । अहमेव परः सर्वस्मादुत्कृष्टो यस्य स मत्परः । फलमाह - **वशे हीति** ।।६१।।

**ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते ।**
**सङ्गात् सञ्जायते कामः कामात् क्रोधोऽभिजायते ।।६२।।**

**क्रोधाद् भवति सम्मोहः सम्मोहात् स्मृतिविभ्रमः ।**
**स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशाद् प्र(वि)नश्यति ।।६३।।**

### भाष्यम्

रागादिदोषकारणमाह परिहाराय श्लोकद्वयेन । सम्मोहः अकार्येच्छा । तथाहि मोहशब्दार्थ उक्त उपगीतासु - **'मोहसञ्ज्ञितम् । अधर्मलक्षणं चैव नियतं पापकर्मसु'** इति । तथा चान्यत्र - **'सम्मोहोऽधर्मकामिता'** इति । स्मृतिविभ्रमः प्रतिषेधादिस्मृतिनाशः । बुद्धिनाशः सर्वात्मना दोषबुद्धिनाशः । विनश्यति नरकाद्यनर्थं प्राप्नोति । तथाह्युक्तम्–

'अधर्मकामिनः शास्त्रे विस्मृतिर्जायते यदा ।
दोषादृष्टेस्तत्कृतेश्च नरकं प्रतिपद्यते' ।। इति ।। ६२, ६३ ।।

### तात्पर्यम्

संमोहान्मिथ्याज्ञानात् । ज्ञातमप्यन्यथा स्मर्यते । वाक्यार्थानामन्यथा स्मरणान्निर्णीतं ज्ञानमपि नश्यति ।। ६२,६३ ।।

**रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।**
**आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ।। ६४ ।।**

### भाष्यम्

इन्द्रियजयफलमाहोत्तराभ्यां श्लोकाभ्याम् । विषयाननुभवन्नपि विधेय आत्मा मनो यस्य सः । जितात्मेत्यर्थः । प्रसादं मनःप्रसादम् ।। ६४ ।।

### तात्पर्यम्

शान्तिर्भगवन्निष्ठा । 'शमो मन्निष्ठता' इति हि भागवते ।।६४-६६।।

**प्रसादे सर्वदुःखानां हानिरस्योपजायते ।**
**प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठति ।। ६५ ।।**

### भाष्यम्

कथं प्रसादमात्रेण सर्वदुःखहानिः ? प्रसन्नचेतसो हि बुद्धिः पर्यवतिष्ठति । ब्रह्मापरोक्ष्येण सम्यक् स्थितिं करोति । प्रसादो नाम स्वतोऽपि प्रायो विषयागतिः ।। ६५ ।।

**नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।**
**न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ।। ६६ ।।**

### भाष्यम्

प्रसादाभावे दोषमाहोत्तरश्लोकाभ्याम् । न हि प्रसादाभावे युक्तिश्चित्त-निरोधः । अयुक्तस्य च बुद्धिः सम्यग्ज्ञानं नास्ति । तदेवोपपादयति न **चायुक्तस्येति** । शान्तिर्मुक्तिः । 'शान्तिर्मोक्षोऽथ निर्वाणम्' इत्यभिधानात् ।। ६६ ।।

**इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।**
**तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ।। ६७ ।।**

### भाष्यम्

कथमयुक्तस्य भावना न भवति ? आह - **इन्द्रियाणामिति** । अनु विधीयते क्रियते । नन्वीश्वरेणेन्द्रियाणामनु 'बुद्धिर्ज्ञानम्' इत्यादि वक्ष्य-माणत्वात् । प्रज्ञां प्रज्ञानम् । उत्पत्स्यदपि निवारयतीत्यर्थः । उत्पन्न-स्याप्यभिभवो भवति ।। ६७ ।।

तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८ ॥

### भाष्यम्

तस्मात् सर्वात्मना निगृहीतेन्द्रिय एव ज्ञानीति निगमयति **तस्मादिति** ॥ ६८ ॥

या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः॥ ६९ ॥

### भाष्यम्

उक्तलक्षणं पिण्डीकृत्याऽह - **या निशेति** । या सर्वभूतानां निशा परमेश्वरस्वरूपलक्षणा, यस्यां सुप्तानीव न किञ्चिज्जानन्ति, तस्यामिन्द्रियसंयमयुक्तो ज्ञानी जागर्ति । सम्यगापरोक्ष्येण पश्यति परमात्मानमित्यर्थः । यस्यां विषयलक्षणायां भूतानि जाग्रति तस्यां निशायामिव सुप्तः प्रायो न जानाति । मत्तादिवद् गमनादिप्रवृत्तिः । तदुक्तम्– 'देहं तु तं न चरमम्' 'देहोऽपि दैववशगः' इति श्लोकाभ्याम् । मननयुक्तो मुनिः । पश्यत इत्यस्य साधनमाह ॥ ३९ ॥

### तात्पर्यम्

'देवेभ्योऽन्ये यदा ब्रह्म पश्यन्त्यन्यत्र दृश्यते ।
निशायामिव सुव्यक्तं यथान्यैर्ब्रह्म नेयते ।
आश्चर्यवस्तुदृग्यद्वद्व्यक्तमन्यत्र पश्यति ।
ऐकाग्र्याद्वा सुखोद्रेकाद्देवाः सूर्यवदेव च ।
प्रायशः सर्ववेत्तारस्तत्रापि ह्युत्तरोत्तरम्' ॥ इति ब्रह्मतर्के ॥ ६९ ॥

**आपूर्यमाणमचलप्रतिष्ठं**
**समुद्रमापः प्रविशन्ति यद्वत् ।**
**तद्वत् कामा यं प्रविशन्ति सर्वे**
**स शान्तिमाप्नोति न कामकामी ।। ७० ।।**

### भाष्यम्

तेन विषयानुभवप्रकारमाह - **आपूर्यमाणमिति** । यो विषयैरापूर्यमाणोऽप्यचलप्रतिष्ठो भवति । नोत्सेकं प्राप्नोति । न च प्रयत्नं करोति । न चाभावे शुष्यति । न हि समुद्रः सरित्प्रवेशाप्रवेशनिमित्तवृद्धिशोषौ बहुतरौ प्राप्नोति । प्रयत्नं वा करोति । स मुक्तिमाप्नोतीत्यर्थः ।। ७० ।।

### तात्पर्यम्

'भुञ्जानोऽपि हि यः कामान् मर्यादां न तरेत्कचित् ।
समुद्रवद्धर्ममयीं नासौ कामी स उच्यते ।
केति कुत्सितवाची स्यात्कुत्सितं मानमेव तु ।
कामो मोक्षविरोधी स्यान्न सर्वेच्छाविरोधिनी' ।। इति च ।

न च सर्वेच्छाभावे जीवनं भवति । 'शान्तिर्मोक्षो यतो ह्यत्र विष्णुनिष्ठा भवेद्ध्रुवा' इति च ।। ७० ।।

**विहाय कामान् यः सर्वान् पुमांश्चरति निःस्पृहः ।**
**निर्ममो निरहङ्कारः स शान्तिमधिगच्छति ।। ७१ ।।**

### भाष्यम्

एतदेव प्रपञ्चयति - **विहायेति** । कामान् विषयान् निःस्पृहतया विहाय यश्चरति भक्षयति । भक्षयामीत्याद्यहङ्कारममकारवर्जितश्च । स हि पुमान् । स एव च मुक्तिमधिगच्छतीत्यर्थः ।। ७१ ।।

### तात्पर्यम्

निषिद्धस्पृहाभावमात्रेण सर्वविषयान् विहाय ।

'अस्वरूपे स्वरूपत्वमतिरेव ह्यहङ्कृतिः ।
त्याज्या सर्वत्र ममता ज्ञात्वा सर्वं हरेर्वशे' ।। इति च ।। ७१ ।।

**एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।
स्थित्वाऽस्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति ।। ७२ ।।**

।। ओं तत्सदिति श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे साङ्ख्ययोगो नाम द्वितीयोऽध्यायः ।।

### भाष्यम्

उपसंहरति - **एषेति** । ब्राह्मी स्थितिः ब्रह्मविषया स्थितिर्लक्षणम् । अन्तकालेऽप्यस्यां स्थित्वैव ब्रह्म गच्छति । अन्यथा जन्मान्तरं प्राप्नोति । 'यं यं वाऽपि' इति वक्ष्यमाणत्वात् । ज्ञानिनामपि सति प्रारब्धकर्मणि शरीरान्तरं युक्तम् । 'भोगेन त्वितरे' इति ह्युक्तम् । सन्ति हि बहुशरीरफलानि कर्माणि कानिचित् । 'सप्तजन्मनि विप्रः स्यात्' इत्यादेः । दृष्टेश्च ज्ञानिनामपि बहुशरीरप्राप्तेः ।

तथा ह्युक्तम् -

'स्थितप्रज्ञोऽपि यस्तूर्ध्वः प्राप्य रुद्रपदं ततः ।
साङ्कर्षणं ततो मुक्तिमगाद् विष्णुप्रसादतः' ।। इति गारुडे ।

'महादेव परे जन्मंस्तव मुक्तिर्निरूप्यते' । इति नारदीये ।

निश्चितफलं च ज्ञानम् - 'तस्य तावदेव चिरम्', 'यदु च नार्चिषमेवाभिसम्भवति' इत्यादिश्रुतिभ्यः । न च कायव्यूहापेक्षा ।

'तद्यथैषीकातूलम्', 'तद्यथा पुष्करपलाशे', 'ज्ञानाग्निः सर्वकर्माणि' इत्यादिवचनेभ्यः । प्रारब्धे त्वविरोधः । प्रमाणाभावाच्च । न च तच्छास्त्रं प्रमाणम्-

'अक्षपादकणादानां साङ्ख्ययोगजटाभृताम् ।
मतमालम्ब्य ये वेदं दूषयन्त्यल्पचेतसः' ।।

इति निन्दनात् । यत्र तु स्तुतिस्तत्र शिवभक्तानां स्तुतिपरत्वमेव न सत्यत्वम् । न हि तेषामपीतरग्रन्थविरुद्धार्थे प्रामाण्यम् । तथाह्युक्तम्-

'एष मोहं सृजाम्याशु यो जनान् मोहयिष्यति ।
त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ।
अतथ्यानि वितथ्यानि दर्शयस्व महाभुज
प्रकाशं कुरु चात्मानमप्रकाशं च मां कुरु' ।। इति वाराहे ।

'कुत्सितानि च मिश्राणि रुद्रो विष्णुप्रचोदितः ।
चकार शास्त्राणि विभुर्ऋषयस्तत्प्रचोदिताः ।
दधीच्याद्याः पुराणानि तच्छास्त्रसमयेन तु ।
चक्रुर्वेदैस्तु ब्राह्माणि वैष्णवान् विष्णुवेदतः ।
पञ्चरात्रं भारतं च मूलरामायणं तथा ।
तथा पुराणं भागवतं विष्णुवेद इतीरितः ।
अतः शैवपुराणानि योग्यान्यन्याविरोधतः' ।। इति च नारदीये ।

अतो ज्ञानिनां भवत्येव मुक्तिः । भीष्मादीनां तु तस्मिन् क्षणे मुक्त्यभावः । 'स्मरंस्त्यजति' इति वर्तमानापदेशो हि कृतः ।

तच्चोक्तम्-

'ज्ञानिनां कर्मयुक्तानां कायत्यागक्षणो यदा ।
विष्णुमाया तदा तेषां मनो बाह्यं करोति हि' ।। इति गारुडे ।

नचान्येषां तदा स्मृतिर्भवति -

**'बहुजन्मविपाकेन भक्तिज्ञानेन ये हरिम् ।**
**भजन्ति तत्स्मृतिं त्वन्ते देवो याति नचान्यथा' ।। इत्युक्तेर्ब्रह्मवैवर्ते ।**

निर्बाणमशरीरम् । 'कायो बाणं शरीरं च' इत्यभिधानात् । 'एतद्-बाणमवष्टभ्य' इति प्रयोगाच्च । निर्बाणशब्दप्रतिपादनम्- 'अनिन्द्रियाः' इत्यादिवत् । कथमन्यथा सर्वपुराणादिप्रसिद्धाऽऽकृतिर्भगवत उपपद्येत ? न चान्यद्भगवत उत्तमं ब्रह्म– 'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' इति भागवते । 'भगवन्तं परं ब्रह्म' 'परं ब्रह्म जनार्दनः', 'परमं यो महद् ब्रह्म', 'यस्मात् क्षरमतीतोऽहम्', 'योऽसावतीन्द्रियग्राह्यः', 'नास्ति नारायणसमं न भूतं न भविष्यति', 'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः' इत्यादिभ्यः । न च तद्ब्रह्मणोऽ- शरीरत्वादेतत् कल्प्यम् । तस्यापि शरीरश्रवणात्– 'आनन्दरूपममृतम्', 'सुवर्णज्योतीः', 'दहरोऽस्मिन्नन्तर आकाशः' इत्यादिषु । यदि रूपं न स्यात्, आनन्द-मित्येव स्यात्, नत्वानन्दरूपमिति । कथं च सुवर्णरूपत्वं स्याद-रूपस्य ? कथं च दहरत्वम्? दहरस्थश्च– 'केचित् स्वदेहे' इत्यादौ रूपवानुच्यते । 'सहस्रशीर्षा पुरुषः', 'रुग्मवर्णं कर्तारम्', 'आदित्यवर्णं तमसः' 'सर्वतः पाणिपादं तत्', 'विश्वतश्चक्षुरुत' इत्यादिवचनात्, विश्वरूपाध्यायादेश्च रूपवानवसीयते । अतिपरिपूर्णतमज्ञानैश्वर्य-वीर्यानन्दश्रीशक्त्यादिमांश्च भगवान् । 'पराऽस्य शक्तिः', 'यः सर्वज्ञः', 'आनन्दं ब्रह्मणः', 'एतस्यैवाऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति', 'अनादिमध्यान्तमनन्तवीर्यम्', 'सहस्रलक्षामितकान्तिकान्तम्', 'मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे', 'विज्ञानशक्तिरहमासमनन्त-शक्तेः', 'तुर्यं तत् सर्वदृक् सदा', 'आत्मानमन्यं च स वेद विद्वान्',

'अन्यतमो मुकुन्दात् को नाम लोके भगवत्पदार्थः', 'ऐश्वर्यस्य समग्रस्य' ।

'अतीव परिपूर्णं ते सुखं ज्ञानं च सौभगम् ।
यच्चात्ययुक्तं स्मर्तुं वा शक्तः कर्तुमतः परः' ।। इत्यादिभ्यः ।

तानि च सर्वाण्यन्योन्यस्वरूपाणि - 'विज्ञानमानन्दं ब्रह्म', 'आनन्दो ब्रह्मेति व्यजानात्', 'सत्यं ज्ञानमनन्तं ब्रह्म', 'यस्य ज्ञानमयं तपः', 'स मा भग' ।

'न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसम्भवा ।
न योगित्वादीश्वरत्वात् सत्यरूपाच्युतो विभुः' ।।

'सदेहः सुखगन्धश्च ज्ञानभाः सत्पराक्रमः ।
ज्ञानज्ञानः सुखसुखः स विष्णुः परमोऽक्षरः' ।। इति पैङ्गिखिलेषु ।

'देहोऽयं मे सदानन्दो नायं प्रकृतिनिर्मितः ।
परिपूर्णश्च सर्वत्र तेन नारायणोऽस्म्यहम्' ।। इत्यादि ब्रह्मवैवर्ते ।

तदेव लीलया चासौ परिच्छिन्नादिरूपेण दर्शयति मायया-

'न च गर्भेऽवसद्देव्या न चापि वसुदेवतः ।
न चापि राघवाज्जातो न चापि जमदग्नितः ।
नित्यानन्दोऽद्वयोऽप्येवं क्रीडते मोघदर्शनः' ।। इति पाद्मे ।

'न वै स आत्माऽऽत्मवतामधीश्वरो
भुङ्क्ते हि दुःखं भगवान् वासुदेवः' ।

'सर्गादिरीशिताऽजः परमसुखनिधिर्बोधरूपोऽप्यबोधं
लोकानां दर्शयन् यो मुनिसुतहृतात्मप्रियार्थे जगाम' ।

'स ब्रह्मवन्द्यचरणो नरवत् प्रलापी
स्त्रीसङ्गिनामिति रतिं प्रथयंश्चचार' ।

'पूर्तेरचिन्त्यवीर्यो यो यश्च दाशरथिः स्वयम् ।
रुद्रवाक्यमृतं कर्तुमजितो जितवत् स्थितः ।
योऽजितो विजितो भक्त्या गाङ्गेयं न जघान ह ।
न चाम्वा ग्राहयामास करुणः कोऽपरस्ततः' ।। इत्यादिभ्यश्च स्कान्दे ।

न तत्र संसारसमानधर्मा निरूप्याः ।

यत्र च परावरभेदोऽवगम्यते तत्राज्ञबुद्धिमपेक्ष्यावरत्वम् । विश्वरूपम-पेक्ष्यान्यत्र ।

तच्चोक्तम्-

'परिपूर्णानि रूपाणि समान्यखिलरूपतः ।
तथाऽप्यपेक्ष्य मन्दानां दृष्टिं त्वामृषयोऽपि हि ।
परावरं वदन्त्येव ह्यभक्तानां विमोहने' ।। इति गारुडे ।

न चात्र किञ्चिदुपचरितादि वाच्यम् । अचिन्त्यशक्तेः पदार्थ-वैचित्र्याच्चेत्युक्तम् ।

'कृष्णरामादिरूपाणि परिपूर्णानि सर्वदा ।
नचाणुमात्रं भिन्नानि तथाऽप्यस्मान् विमोहसि' ।। इत्यादेश्च नारदीये ।

तस्मात् सर्वदा सर्वरूपेष्वपरिगणितानन्तगुणगणं नित्यनिरस्ताशेषदोषं च नारायणाख्यं परं ब्रह्मापरोक्षज्ञानी ऋच्छतीति सिद्धम् ।। ७२ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीभगवद्गीताभाष्ये द्वितीयोऽध्यायः ।।

## तात्पर्यम्

ब्राह्मी ब्रह्मविषया । ज्ञानिनामप्यन्तकालेऽन्यमनसां प्रारब्धकर्म-भावाज्जन्मान्तरम् । प्रारब्धकर्मनाशकाले नियमेन भगवत्स्मृतिर्भवति । ततो मोक्षश्च । 'यं यं वाऽपि स्मरन् भावम्' इति हि वक्ष्यति । बाणं शरीरम् ।

**'अभावाज्जडदेहस्य विष्णुर्निर्बाण उच्यते ।**
**भिन्नदेहाभावतो वा स सहस्रशिरा अपि' ।। इति च ।। ७२ ।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभगवद्गीतातात्पर्यनिर्णये द्वितीयोऽध्यायः ।।

*****

# तृतीयोऽध्यायः

आत्मस्वरूपं ज्ञानसाधनं चोक्तं पूर्वत्र । ज्ञानसाधनत्वेनाकर्म विनिन्द्य कर्म विधीयत उत्तराध्याये-

### अर्जुन उवाच

**ज्यायसी चेत् कर्मणस्ते मता बुद्धिर्जनार्दन ।**
**तत् किं कर्मणि घोरे मां नियोजयसि केशव ।। १ ।।**

**व्यामिश्रेणैव वाक्येन बुद्धिं मोहयसीव मे ।**
**तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ।। २ ।।**

### भाष्यम्

कर्मणो ज्ञानमत्युत्तममित्यभिहितं भगवता **''दूरेण ह्यवरम्''** इत्यादौ । एवं चेत् किमिति कर्मणि घोरे युद्धाख्ये नियोजयसि निवृत्तिधर्मान् विनेत्याह– ज्यायसीति । कर्मणः सकाशात् बुद्धिर्ज्यायसी चेत् ते तव मता तत् तर्हि ।। १, २ ।।

### तात्पर्यम्

ज्ञानं योगश्चोक्तौ । तत्र कर्मयोगं विशेषतः प्रपञ्चयत्यनेनाध्यायेन । **'दूरेण ह्यवरं कर्म'** इति प्रश्नबीजम् ।। १,२ ।।

### श्रीभगवानुवाच

**लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ ।**
**ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम् ।। ३ ।।**

### भाष्यम्

ज्यायस्त्वेऽपि बुद्धेराधिकारिकत्वात् त्वं कर्मण्यप्यधिकृत. इति तत्र नियोक्ष्यामीत्याशयवान् भगवानाह– **लोक इति** । द्विविधा अपि जनाः सन्ति । गृहस्थादिकर्मत्यागेन ज्ञाननिष्ठाः सनकादिवत् । तत्स्था एव ज्ञाननिष्ठाश्च जनकादिवत् । मद्धर्मस्था एवेत्यर्थः । साङ्ख्यानां ज्ञानिनां सनकादीनाम् । योगिनामुपायिनां जनकादीनाम् । ज्ञाननिष्ठा अप्याधिकारिकत्वादीश्वरेच्छया लोकसङ्ग्रहार्थत्वाच्च ये कर्मयोग्या भवन्ति तेऽपि योगिनः । निष्ठा स्थितिः । त्वं तु जनकादिवत् सकर्मैव ज्ञानयोग्यः । न तु सनकादिवत् तत्त्यागेनेत्यर्थः । सन्ति हीश्वरेच्छयैव कर्मकृतः प्रियव्रतादयोऽपि ज्ञानिन एव । तथाह्युक्तम् - 'ईश्वरेच्छया विनिवेशितकर्माधिकारः' इति ।। ३ ।।

### तात्पर्यम्

ज्ञानप्रचुरो योगो ज्ञानयोगः । कर्मप्रचुरोऽन्यः ।

**'साङ्ख्या ज्ञानप्रधानत्वाद् देवाश्च यतयस्तथा ।**
**मुख्यसाङ्ख्यास्तत्र देवा ज्ञानमेषां महद् यतः ।**
**वहुकर्मकृतोऽप्येते ततोऽपि वहुवेदनात् ।**
**मुख्यसाङ्ख्या इति ज्ञेयास्तदन्ये कर्मयोगिनः ।**
**ज्ञानिनोऽप्यतिवाहुल्यात् कर्मणः कर्मयोगिनः ।**
**नोभयं तद् विना कश्चित् पुमान् हि पुरुषार्थभाक् ।**
**न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ।**
**न च ज्ञानं विना कर्म पुरुषार्थकरं भवेत्' ।। इति ब्रह्मवैवर्ते ।**

**निष्ठा पर्यवसितिर्मुक्तिः ।**

**'ज्ञानिनो मोक्षनियमस्तथाऽपि शुभकर्मणा ।**
**आनन्दवृद्धिरन्येन ह्रासो ज्ञानं तु कर्मणा' ।। इति परमश्रुतेः ।**

'न कर्मणा न प्रजया धनेन' इत्यादिविरोधो न । अन्यथा - **'न कर्मणामनारम्भात्'** इत्याद्युभयसमवाक्यशेषविरोधश्च । समत्वं च - 'न हि कश्चित्' इत्यादेः । 'नान्यः पन्थाः' इत्यपि ज्ञानमृते न मोक्ष इत्येवाऽह ।। ३,४ ।।

**न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।**
**न च संन्यसनादेव सिद्धिं समधिगच्छति ।। ४ ।।**

**भाष्यम्**

इतश्च नियोक्ष्यामीत्याह - **न कर्मणामिति** । न कर्मणां युद्धादीनामनारम्भेण नैष्कर्म्यं निष्कर्मतां काम्यकर्मपरित्यागेन प्राप्यत इति मोक्षं नाश्नुते । ज्ञानमेव तत्साधनं, न तु कर्माकरणमित्यर्थः । कुतः ? पुरुषत्वात् । सर्वदा स्थूलेन सूक्ष्मेण वा पुरेण युक्तो ननु जीवः । यदि कर्माकरणेन मुक्तिः स्यात् स्थावराणां च । न चाकरणे कर्माभावान्मुक्तिर्भवति । प्रतिजन्मकृतानामनन्तकर्मणां भावात् । न च सर्वाणि भुक्तानि । एकस्मिन् शरीरे बहूनि हि कर्माणि करोति । तानि चैकैकानि बहुजन्मफलानि कानिचित् । तत्र चैकैकानि कर्माणि भुञ्जन् प्राप्नोत्येव शेषेण मानुष्यम् । ततश्च बहुशरीरफलानि कर्माणीत्यसमाप्तिः । तच्चोक्तम्-

**'जीवंश्चतुर्दशादूर्ध्वं पुरुषो नियमेन तु ।**
**स्त्री वाऽप्यनूनदशकं देहं मानुषमार्जते ।**
**चतुर्दशोर्ध्वजीवीनि संसारश्चादिवर्जितः ।**
**अतोऽवित्त्वा परं देवं मोक्षाशा का महामुने' ।। इति ब्राह्मे ।**

यदि च सादिः स्यात् संसारः पूर्वकर्माभावादतत्प्राप्तिः । अबन्धकत्वं त्वकामेनैव भवति । तच्च वक्ष्यते - 'अनिष्टमिष्टम्' इति । ननु निष्कामकर्मणः फलाभावान्मोक्षः स्मृतः–

'निष्कामं ज्ञानपूर्वं तु निवृत्तमिति चोच्यते ।
निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम्' ।। इति मानवे ।

अतस्तत्साम्यादकरणेऽपि भवतीत्यत आह - **न चेति** । संन्यासः काम्यकर्मपरित्यागः । 'काम्यानां कर्मणां न्यासम्' इति वक्ष्यमाणत्वात् । अकामकर्मणामन्तःकरणशुद्ध्या ज्ञानान्मोक्षो भवति । तच्चोक्तम् - 'कर्मभिः शुद्धसत्त्वस्य वैराग्यं जायते हृदि' इति भागवते । विरक्तानामेव च ज्ञानमुक्तम् -

'न तस्य तत्त्वग्रहणाय साक्षाद् वरीयसीरपि वाचः समासन् ।
स्वप्ने निरुक्त्या गृहमेधिसौख्यं न यस्य हेयानुमितं स्वयं स्यात्' ।। इति ।

न तु फलाभावात् । कर्माभावात् । अतो न कर्मत्याग एव मोक्षसाधनम् । यत्याश्रमस्तु प्रायत्यार्थो भगवत्तोषार्थश्च । अप्रयतत्वमेव हि प्रायो गृहस्थादीनाम् । इतरकर्मोद्योगात् । अप्रयतानां च न ज्ञानम् । तथाहि श्रुतिः – 'नाशान्तो नासमाहितः' इति । महांश्च यत्याश्रमे तोषो भगवतः । तथाह्याह– 'यत्याश्रमं तुरीयं तु दीक्षां मम सुतोषणीम्' इति नारायणाष्टाक्षरकल्पे । आधिकारिकास्तु तत्स्था एव प्रायत्ये समर्थाः । स एव च महान् भगवत्तोषः । तच्चोक्तम्-

'देवादीनामादिराज्ञां महोद्योगेऽपि नो मनः ।
विष्णोश्चलति तद्योगोऽप्यतीव हरितोष(णम्)णः' ।। इति पाद्मे ।। ४ ।।

**न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ।**
**कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ।। ५ ।।**

### भाष्यम्

न तु कर्माणि सर्वात्मना त्यक्तुं शक्यानीत्याह - **नहीति** ।। ५ ।।

### तात्पर्यम्

'कर्तृत्वं द्विविधं प्रोक्तं विकारश्च स्वतन्त्रता ।
विकारः प्रकृतेरेव विष्णोरेव स्वतन्त्रता' ।। इति पैङ्गिश्रुतेः ।

'कार्यते ह्यवश' इत्यत्रावशो विष्णुवशः । 'अः इति ब्रह्म' इत्यादिश्रुतेः ।। ५ ।।

**कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।**
**इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ।। ६ ।।**

**यस्त्विन्द्रियाणि मनसा नियम्याऽरभतेऽर्जुन ।**
**कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ।। ७ ।।**

### भाष्यम्

तथाऽपि शक्तितस्त्यागः कार्य इत्यत आह - **कर्मेन्द्रियाणीति** । मन एव प्रयोजकमिति दर्शयितुमन्वयव्यतिरेकावाह- मनसा स्मरन् मनसा नियम्येति । कर्मयोगं स्ववर्णाश्रमोचितम् । न तु गृहस्थकर्मैवेति नियमः । संन्यासादिविधानात् । सामान्यवचनाच्च ।। ६, ७ ।।

**नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।**
**शरीरयात्राऽपि च ते न प्रसिद्ध्येदकर्मणः ।। ८ ।।**

### भाष्यम्

अतो नियतं वर्णाश्रमोचितं कर्म कुरु ।। ८ ।।

यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मवन्धनः ।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ।। ९ ।।

## भाष्यम्

'कर्मणा बध्यते जन्तुः' इति कर्म बन्धकं स्मृतमित्यत आह - **यज्ञार्थादिति** । कर्म बन्धनं यस्य लोकस्य स कर्मबन्धनः । यज्ञो विष्णुः । यज्ञार्थं सङ्गरहितं कर्म न बन्धकमित्यर्थः । मुक्तसङ्ग इति विशेषणात् । 'कामान् यः कामयते' इति श्रुतेश्च । 'अनिष्टमिष्टम्' इति वक्ष्यमाणत्वाच्च । 'एतान्यपि तु' इति च । 'तस्मान्नेष्टियाजुकः स्यात्' इति च । विशेषवचनत्वे समेऽपि विशेषणं परिशिष्यते ।।९।।

## तात्पर्यम्

कर्मणा बध्यते जन्तुरित्यादिकमप्यवैष्णवकर्मविषयमित्याह - **यज्ञार्थादिति** ।

'ज्ञो नाम भगवान्विष्णुस्तं यात्युद्देश एष यः ।
स यज्ञ इति सम्प्रोक्तो विहिते कर्मणि स्थितः' ।। इति वर्कश्रुतिः ।।९।।

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ।। १० ।।

देवान् भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमावाप्स्यथ ।। ११ ।।

इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः ।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ।। १२ ।।

**यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।**
**भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ।। १३ ।।**

### भाष्यम्

तत्रार्थवादमाह– **सहयज्ञा** इति ।। १०-१३ ।।

**अन्नाद् भवन्ति भूतानि पर्जन्यादन्नसम्भवः ।**
**यज्ञाद् भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ।। १४ ।।**

### भाष्यम्

हेत्वन्तरमाह– **अन्नादिति** । यज्ञः पर्जन्यान्नत्वात् तत्कारणमुच्यते । पूर्वयज्ञविवक्षायां चक्रप्रवेशो न भवति । तद्व्यापाद्यं कर्मविधये । न तु सामान्य(साम्य)मात्रेणेदानीं कार्यम् । मेघचक्राभिमानी च पर्जन्यः तच्च यज्ञाद् भवति ।

'अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठति ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' ।। इति स्मृतेश्च ।

उभयवचनादादित्यात् समुद्राच्चाविरोधः । अतश्च यज्ञात् पर्जन्योद्भवः सम्भवति । यज्ञो देवतामुद्दिश्य द्रव्यपरित्यागः । कर्म इतरक्रिया ।
।। १४ ।।

**कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।**
**तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ।। १५ ।।**

### भाष्यम्

कर्म ब्रह्मणो जायते । 'एष ह्येव साधु कर्म कारयति', 'बुद्धिर्ज्ञानम्'

इत्यादिभ्यः । न च मुख्ये सम्भाव्यमाने पारम्पर्येण औपचारिकं कल्प्यम् । न च जडानां स्वतः प्रवृत्तिः सम्भवति । 'एतस्य वा अक्षरस्य' इत्यादिसर्वनियमनश्रुतेश्च । 'द्रव्यं कर्म च' इत्यादेश्च अचिन्त्यशक्तिश्चोक्ता । जीवस्य च प्रतिबिम्बस्य बिम्बपूर्वैव चेष्टा । 'न कर्तृत्वम्' इत्यादिनिषेधाच्च । अक्षराणि प्रसिद्धानि । तेभ्यो ह्यभिव्यज्यते परं ब्रह्म । अन्यथाऽनादिनिधनमचिन्त्यं परिपूर्णमपि ब्रह्म को जानाति? न च रूढिं विना योगाङ्गीकारो युक्तः । परामर्शाच्च- 'तस्मात् सर्वगतं ब्रह्म' इति । नह्येकशब्देन द्विरुक्तेन भेदश्रुतिं विना वस्तुद्वयं कुत्रचिदुच्यते । तानि चाक्षराणि नित्यानि- 'वाचा विरूप नित्यया', 'अनादिनिधना नित्या वागुत्सृष्टा', 'अत एव च नित्यत्वम्' इत्यादिश्रुतिस्मृतिभगवद्वचनेभ्यः ।

दोषश्चोक्तः सकर्तृकत्वे । नचाबुद्धिपूर्वमुत्पन्नानि । तत्प्रमाणाभावात् । निःश्वसितशब्दस्त्वक्लेशाभिप्रायः । नाबुद्धिपूर्वाभिप्रायः । 'सोऽकामयत' इत्यादेश्च । 'इष्टं हुतम्' इत्यादिरूपप्रपञ्चसहाभिधानाच्च । महातात्पर्यविरोधाच्च । तच्चोक्तं पुरस्तात् । नह्यस्वातन्त्र्येण कर्तुः प्राधान्यम् । अस्वातन्त्र्यं च तदमतिपूर्वकत्वेन भवति । यथा रोगादीनां पुरुषस्य तज्जत्वेऽपि उत्पत्तिवचनानि अभिव्यक्त्यर्थानि अभिमानिदेवता-विषयाणि च । 'नित्या' इत्युक्त्वा 'उत्सृष्टा' इति वचनात् । अभिव्यञ्जके कर्तृवचनं चास्ति । 'कृत्स्नं शतपथं चक्रे' इति कथमादित्यस्था वेदास्तेनैव क्रियन्ते । वचनमात्राच्च निर्णयात्मक-शारीरकोक्तं बलवत् । शास्त्रं योनिः प्रमाणं अस्येति तु शास्त्रयोनित्वम् । 'जन्माद्यस्य यतः' इत्युक्ते प्रमाणं हि तत्रापेक्षितम् । न तु तस्य जातत्वं वेदकारणत्वं वा । नहि वेदकारणत्वं जगत्कारणत्वे हेतुः ।

नहि विचित्रजगत्सृष्टेर्वेदसृष्टिरशक्या सृज्यत्वे । न च सर्वज्ञत्वे । यदि वेदस्रष्टा सर्वज्ञः किमिति न जगत्स्रष्टा? तस्माद् वेदप्रमाणकत्वमेवात्र विवक्षितम् । अतो नित्यान्यक्षराणि । यत एवं परम्परया यज्ञाभिव्यङ्ग्यं ब्रह्म तस्मात् तन्नित्यं यज्ञे प्रतिष्ठितम् । तानि चाक्षराणि भूताभिव्यङ्ग्यानीति चक्रम् ।। १५ ।।

**एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।**
**अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ।। १६ ।।**

### भाष्यम्

तदेतत् जगच्चक्रं यो नानुवर्तयति स तद्विनाशकत्वादघायुः । पापनिमित्तमेव यस्याऽयुः सोऽघायुः ।। १६ ।।

### तात्पर्यम्

जननात् परसस्यादेः पर्जन्यो मेघसन्ततिः ।
स यज्ञात् कर्मणः सोऽपि समस्तं कर्म केशवात् ।।
स नित्योऽप्यक्षरततिरूपाद्वाक्याद्धि गम्यते ।
वाक्यमुच्चार्यते भूतैस्तान्यन्नात्तच्च मेघतः ।।
तस्मात्सर्वगतो विष्णुर्नित्यं यज्ञे प्रतिष्ठितः ।
एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
स पापो विश्वहन्तृत्वान्नरके मज्जति ध्रुवम् ।।
वाचिको मानसो यज्ञो न्यासिनां तु विशेषतः ।
वनस्थस्याक्रतुर्यज्ञः क्रत्वादिर्ग्रहिणोऽखिलः ।।
शुश्रूषाद्यात्मको यज्ञो विहितो ब्रह्मचारिणः ।
विद्याभयादिदानं च सर्वेषामपि सम्मतम् ।।
गृहिणो वित्तदानं तु वनस्थस्यान्नपूर्वकम् ।
सर्वैः कार्यं तपो घोरमिति सर्वे त्रिकर्मिणः ।। इति नारदीये ।

ब्रह्माक्षरशब्दार्थयोर्व्यत्यासे तस्मात्सर्वगतं ब्रह्म इति प्रत्यभिज्ञा-विरोधश्चक्राप्रवेशश्च ।। १४-१६ ।।

**यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।**
**आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ।। १७ ।।**

### भाष्यम्

तर्ह्यतीव मनःसमाधानमपि न कार्यमित्यत आह - **यस्त्विति** । रमणं परदर्शनादिनिमित्तं सुखम् । तृप्तिरन्यत्रालम्बुद्धिः । सन्तोषस्तज्जनकं सुखम् । 'सन्तोषस्तृप्तिकारणम्' इत्यभिधानात् । परमात्मदर्शनादिनिमित्तं सुखं प्राप्तः । अन्यत्र सर्वात्मनाऽलम्बुद्धिं च । महच्च तत् सुखम् । तेनैवान्यत्रालम्बुद्धिरिति दर्शयति - **आत्मन्येव च सन्तुष्ट इति** । तत्स्थ एव सन् सन्तुष्ट इत्यर्थः । नान्यत् किमपि सन्तोषकारणमित्यवधारणम् । आत्मना तृप्तः । नह्यात्मन्यलम्बुद्धिर्युक्ता । तद्वाचित्वं च 'वयं तु न वितृप्याम उत्तम-श्लोकविक्रमैः' इति प्रयोगसिद्धम् । अध्याहारस्त्वगतिकागतिः । आत्मरतिरेवेत्यवधारणादसम्प्रज्ञातसमाधिस्थस्यैव कार्यं न विद्यते ।

**'स्थितप्रज्ञस्यापि कार्यो देहादिर्दृश्यते यदा ।**
**स्वधर्मो मम तुष्ट्यर्थः सा हि सर्वैरपेक्षिता'** इति वचनाच्च पञ्चरात्रे ।

अन्यदाऽन्यरतिरपीषत् सर्वस्य भवति । नच तत्रालम्बुद्धिमात्रमुक्तम् । आत्मतृप्त इति पृथगभिधानात् । कर्तृशब्दश्च कालावच्छेदेऽपि चायं प्रसिद्धः- 'यो भुङ्क्ते स तु न ब्रूयात्' इत्यादौ । अतोऽसम्प्रज्ञात-समाधावेवैतत् । मानव इति ज्ञानिन एवासम्प्रज्ञातसमाधिर्भवतीति

दर्शयति । 'मनु अवबोधने' इति धातोः । परमात्मरतिश्चात्र विवक्षिता ।
'विष्णावेव रतिर्यस्य क्रिया तस्यैव नास्ति हि' इति वचनात् ।। १७ ।।

## तात्पर्यम्

तृप्तिसन्तोषशब्दयोः पर्यायत्वेऽपि परमात्मना तृप्तः परमात्मनि तृप्त इति विशेषः ।

'विष्णुप्रसादाद्रतिमांस्तृप्तो विष्णुप्रसादतः ।
विष्णावेवातितृप्तश्च मुक्तोऽसौ विध्यगोचरः' ।। इत्याग्नेये ।

'रतिरानन्द उद्दिष्टस्तृप्तिस्तु कृतकृत्यता ।
प्रीतिस्तु द्विविधः स्नेहः कर्मजो निज एव च' ।। इति शब्दनिर्णये ।

'सन्तोषस्तृप्तिरापूर्तिः प्रीतिः पर्यायवाचकाः' । इत्यभिधानम् ।। १७ ।।

**नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।**
**न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ।। १८ ।।**

तस्य 'कर्मकाले वक्तव्योऽहम्' इति कश्चित् प्रत्युक्त्वा तत्कृतावात्मरत्यधिकः समो वाऽर्थो नास्ति । न च सन्ध्याद्यकृतौ कश्चिद् दोषः अस्ति । नचैतदपहाय सर्वभूतेषु कश्चित् प्रयोजनाश्रयः । अर्थो येन दर्शनादिना भवति सोऽर्थव्यपाश्रयः । ज्ञानमात्रेण प्रत्यवायो यद्यपि न भवति । तदर्जुनस्यापि सममिति न तस्य कर्मोपदेशोपयोग्येतद् भवति । ईषत् प्रारब्धानर्थसूचकं च तद्भवति । महच्चेद् वृत्रहत्यादिवत् ।। १८ ।।

**तस्मादसक्तः सततं कार्यं कर्म समाचर ।**
**असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ।। १९ ।।**

### भाष्यम्

यतोऽसम्प्रज्ञातसमाधेरेव कार्याभावस्तस्मात् कर्म समाचर ।। १९ ।।

### तात्पर्यम्

यस्मादमुक्तस्य कार्यमस्त्येव तस्मादसक्तः । असक्त आचरन्नेव यस्मात्परमाप्नोति । मुक्तस्यैव कार्यं नास्तीत्येवकारार्थोऽपि यस्त्विति तुशब्देनावगतः । 'तस्मात् कर्म समाचर' इत्युपसंहारविरोधश्चान्यथा ।

**'ब्रह्मनिष्ठा ब्रह्मरता ब्रह्मज्ञानसुतर्पिताः ।**
**पाण्डवानां च मुक्तानामन्तरं किञ्चिदेव हि' ।।**

इति भविष्यत्पर्ववचनाच्च नार्जुनस्यामुख्याधिकारिता । आत्मरतिरेव स्यात् इत्येवशब्देन मुक्तानामेभ्यो विशेषो दर्शितः । एषां कदाचिद् दुःखाभासस्यापि भावात् ।। १९ ।।

**कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।**
**लोकसङ्ग्रहमेवापि संपश्यन् कर्तुमर्हसि ।। २० ।।**

### भाष्यम्

आचारोऽप्यस्तीत्याह - **कर्मणैवेति** । कर्मणा सह, कर्म कुर्वन्त एवेत्यर्थः । कर्म कृत्वैव ततो ज्ञानं प्राप्य वा । न तु ज्ञानं विना । प्रसिद्धं हि तेषां ज्ञानित्वं भारतादिषु । 'तमेवं विद्वान्' इत्यादिश्रुतिभ्यश्च । अत्रापि कर्मणां ज्ञानसाधनत्वोक्तेश्च 'बुद्धियुक्तः' इति । गत्यन्तरं च 'नान्यः पन्थाः' इत्यस्य नास्ति । इतरेषां ज्ञानद्वाराऽप्यविरोधः । यत्र च तीर्थाद्येव मुक्तिसाधनमुच्यते-

'ब्रह्मज्ञानेन वा मुक्तिः प्रयागमरणेन वा ।
अथवा स्नानमात्रेण गोमत्यां कृष्णसन्निधौ ।।'

इत्यादौ तत्र पापादिमुक्तिः । स्तुतिपरता च । तत्रापि हि कुत्रचिद् ब्रह्मज्ञानसाधनत्वमेवोच्यतेऽन्यथा मुक्तिं निषिद्ध्य–

'ब्रह्मज्ञानं विना मुक्तिर्न कथञ्चिदपीष्यते ।
प्रयागादेस्तु या मुक्तिर्ज्ञानोपायत्वमेव हि ।।' इत्यादौ ।

न च तीर्थस्तुतिवाक्यानि तत्प्रस्तावेऽप्युक्तज्ञाननियमं घ्नन्ति । यथा कश्चिद् दक्षं भृत्यं प्रत्युक्तानि 'अयमेव हि राजा किं राज्ञा' इत्यादीनि । यथाऽऽह भगवान्-

'यानि तीर्थादिवाक्यानि कर्मादिविषयाणि च ।
स्तावकान्येव तानि स्युरज्ञानां मोहकानि वा ।
भवेन्मोक्षस्तु मद्दृष्टेर्नान्यतस्तु कथञ्चन' ।। इति नारदीये ।

अतोऽपरोक्षज्ञानादेव मोक्षः । कर्म तु तत्साधनमेव ।। २० ।।

## तात्पर्यम्

'सहैव कर्मणा सिद्धिमास्थिता जनकादयः ।
ज्ञाननिष्ठा अपि ततः कार्यं वर्णाश्रमोचितम्' ।। इति च ।
अज्ञानां ज्ञानदं कर्म ज्ञानिनां लोकसङ्ग्रहात् ।
अद्धैव तुष्टिदं मह्यं सा मुक्तानन्दपूर्तिदा ।। २० ।।

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ।। २१ ।।

### भाष्यम्

स यत् वाक्यादिकं प्रमाणीकुरुते, यदुक्तप्रकारेण तिष्ठतीत्यर्थः ॥ २१ ॥

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ २२ ॥

### तात्पर्यम्

'ममैव केवलं नास्ति केनाप्यर्थस्तथाप्यहम् ।
कर्मकृल्लोकरक्षायै तस्मात् कुर्वीत मत्परः' ॥ इति कृष्णसंहितायाम् ।

'रक्षया वाऽथ सृष्ट्या वा संहृत्यादेर्न तु क्वचित् ।
अर्थो विष्णोस्तथाऽप्येष स्वभावात्सर्वकर्मकृत् ।
मत्तो नृत्तादिकं यद्वत्कुर्यात्सुखविशेषतः ।
परमानन्दरूपत्वात् कुर्याद्विष्णुस्तथैव तु' ॥ इति वर्कश्रुतिः ॥ २२ ॥

यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ २३ ॥

उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥ २४ ॥

सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसङ्ग्रहम् ॥ २५ ॥

न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।
जोषयेत्सर्वकर्माणि विद्वान् युक्तः समाचरन् ॥ २६ ॥

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते ॥ २७ ॥

भाष्यम्

विद्वदविदुषोः कर्मभेदमाह - **प्रकृतेरिति** । प्रकृतेर्गुणैः इन्द्रियादिभिः । प्रकृतिमपेक्ष्य गुणभूतानि हि तानि । तत्सम्बन्धीनि च । नहि प्रतिबिम्बस्य क्रिया ।। २७ ।।

**तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।**
**गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ।। २८ ।।**

भाष्यम्

कर्मभेदस्य गुणभेदस्य च तत्त्ववित् । गुणाः इन्द्रियादीनि । गुणेषु विषयेषु ।। २८ ।।

**प्रकृतेर्गुणसम्मूढाः सज्जन्ते गुणकर्मसु ।**
**तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत् ।। २९ ।।**

भाष्यम्

प्रकृतेर्गुणेषु इन्द्रियादिषु सम्मूढाः । इन्द्रियाद्यभिमानाद्धि विषयादिसङ्गः । गुणकर्मसु विषयेषु कर्मसु च–

'शब्दाद्या इन्द्रियाद्याश्च सत्त्वाद्याश्च शुभानि च ।
अप्रधानानि च गुणा निगद्यन्ते निरुक्तिगैः ।।' इत्यभिधानात् ।

सत्त्वाद्यङ्गीकारे- ''गुणा गुणेषु'' इत्ययुक्तं स्यात् ।। २९ ।।

**मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।**
**निराशीर्निर्ममो भूत्वा युद्ध्यस्व विगतज्वरः ।। ३० ।।**

**भाष्यम्**

अतः सर्वाणि कर्माणि मय्येव संन्यस्य, भ्रान्तितो जीवेऽध्यारोपितानि मय्येव विसृत्य भगवानेव सर्वाणि कर्माणि करोतीति, मत्पूजेति च । आत्मानं मामधिकृत्य यच्चेतस्तदध्यात्मचेतः । संन्यासस्तु भगवान् करोतीति । निर्ममत्वं नाहं करोमीति ।। ३० ।।

**ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।**
**श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ।। ३१ ।।**

**ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।**
**सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ।। ३२ ।।**

**भाष्यम्**

फलमाह - **ये म इति** । ये त्वेवं निवृत्तकर्मिणस्तेऽपि मुच्यन्ते ज्ञानद्वारा । किमु अपरोक्षज्ञानिनः ? न तु साधनान्तरमुच्यते-

'निवृत्तादीनि कर्माणि ह्यपरोक्षेशदृष्टये ।
अपरोक्षेशदृष्टिस्तु मुक्तौ किञ्चिन्न मार्गते ।
सर्वं तदन्तराधाय मुक्तये साधनं भवेत् ।
न किञ्चिदन्तराधाय निर्वाणायापरोक्षदृक्' ।।

इति ह्युक्तं नारायणाष्टाक्षरकल्पे ।

अत एव समुच्चयनियमोऽपि निराकृतः ।। ३१, ३२ ।।

**सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।**
**प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ।। ३३ ।।**

### भाष्यम्

एवं चेत् किमिति ते मतं नानुतिष्ठन्ति लोकाः इत्यत आह - **सदृशमिति** । प्रकृतिः पूर्वसंस्कारः ।। ३३ ।।

**इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।।**
**तयोर्न वशमागच्छेत् तौ ह्यस्य परिपन्थिनौ ।। ३४ ।।**

### भाष्यम्

तथाऽपि शक्तितो निग्रहः कार्यः । निग्रहात् सद्यः प्रयोजनाभावेऽपि भवत्येवातिप्रयत्नत इत्याशयवानाह– **इन्द्रियस्येति** । तथाह्युक्तम् -

'संस्कारो बलवानेव ब्रह्माद्या अपि तद्वशाः ।
तथाऽपि सोऽन्यथाकर्तुं शक्यतेऽतिप्रयत्नतः' ।। इति ।। ३४ ।।

**श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।**
**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ।। ३५ ।।**

### भाष्यम्

तथाऽप्युग्रं युद्धकर्मेत्यत आह- **श्रेयानिति** ।। ३५ ।।

### तात्पर्यम्

'नाहं कर्ता हरिः कर्ता तत्पूजा कर्म चाखिलम् ।
तथाऽपि मत्कृता पूजा तत्प्रसादेन नान्यथा ।
तद्भक्तिस्तत्फलं मह्यं तत्प्रसादः पुनः पुनः ।
कर्मन्यासो हरावेवं विष्णोस्तृप्तिकरः सदा ।
यस्मात्स्वतन्त्रकर्तृत्वं विष्णोरेव न चान्यगम् ।
तदधीनं स्वतन्त्रत्वं स्वावरापेक्षयैव तु ।

जीवस्य विकृतिर्नाम कर्तृत्वं जडसंश्रयम् ।
पुमान्दोग्धा च गौर्दोग्ध्री स्तनो दोग्धेतिवत्क्रमात्' ।।

इति ब्रह्मतर्कवचनादीश्वरजीवप्रकृत्यादीनां कर्तृत्वमकर्तृत्वं च विभागेन ज्ञातव्यं सर्वत्र ।

'क्वचित् स्वभावः प्रकृतिः क्वचिच्च त्रिगुणात्मिका ।
क्वचित् प्रकृष्टकर्तृत्वाद् भगवान्प्रकृतिर्हरिः' ।। इति शब्दनिर्णये ।

'स्वभावतस्त्रिधा जीवा उत्तमाधममध्यमाः ।
उत्तमास्तत्र देवाद्या मर्त्यमध्यास्तु मध्यमाः ।
अधमा असुराद्याश्च नैषामस्त्यन्यथाभवः ।
शरीरमात्रान्यथात्वे स्वजातिं पुनरेष्यति ।
उत्तमा मुक्तियोग्यास्तु सृतियोग्यास्तु मध्यमाः ।
अपरेऽन्धतमोयोग्याः प्राप्तिः साधनपूर्तितः ।
पूर्त्यभावेन सर्वेषामनादिः संसृतिः स्मृता ।
नैव पूर्तिश्च सर्वेषां नित्यकालहरीच्छया ।
अतोऽनुवर्तते नित्यं संसारोऽयमनादिमान् ।
अतोऽधमानां जीवानां मिथ्याज्ञानादयोऽखिलाः ।
स्वाभाविका गुणा ज्ञेया मध्यमर्त्येषु मिश्रिताः ।
तत्वज्ञानं विष्णुभक्तिरित्याद्या देवतादिषु ।
कार्यते ह्यवशः कर्म सर्वैस्तैः प्राकृतैर्गुणैः ।
स्वाभाविकगुणानेतान् हेतुं कृत्वैव विष्णुना ।
कर्मसु क्रियमाणेषु कर्ताऽहमिति मूढधीः ।
मन्यते तत्वविद्विष्णोर्गुणा इच्छादयस्तु ये ।
स्वाभाविकेषु जीवस्य कामाद्येषु सदैव तु ।
प्रेरकत्वेन वर्तन्ते स्वातन्त्र्यं मम न क्वचित् ।
इति मत्वा न सक्तः स्यात्प्रीतोऽस्य भवति प्रभुः ।

स्वभावगुणसम्मूढा ज्ञानादिगुणवत्तरम् ।
स्वातन्त्र्येणैव कर्तारं चात्मानं प्रतिजानते ।
तान्गुणान् कर्म तच्चैव विष्ण्वधीनं न ते विदुः ।
तेष्वयोग्येषु तत्वज्ञस्तत्त्वं नातिप्रकाशयेत् ।
वदेद्विवादरूपेण नोपदेशात्मना क्वचित् ।
सभ्यरूपेण वा ब्रूयात्पृष्टेऽव्यक्तिकृदेव वा ।
बुद्ध्वाप्यसौ यतो नित्यं स्वभावानुगचेष्टितः ।
स्वभावं यान्ति भूतानि निग्रहः किं करिष्यति' ॥

इत्यादि प्रकाशसंहितायाम् ॥ २७-३५ ॥

### अर्जुन उवाच

अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।
अनिच्छन्नपि वार्ष्णेय वलादिव नियोजितः ॥ ३६ ॥

### भाष्यम्

बहवः कर्मकारणाः सन्ति क्रोधादयः कामश्च । तत्र को बलवानिति पृच्छति– **अथेति** । अथेत्यर्थान्तरम् । 'तयोर्न वशमागच्छेत्' इति प्रश्नप्रापकम् ॥ ३६ ॥

### तात्पर्यम्

परमेश्वरादेवेभ्यश्चार्वाक्तनप्रेरकं पृच्छति । **अथ केनेति** ॥ ३६ ॥

### श्रीभगवानुवाच

काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३७ ॥

### भाष्यम्

यस्तु बलवान् प्रवर्तकः स एष कामः । क्रोधोऽप्येष एव । तज्जन्यत्वात् । 'कामात् क्रोधोऽभिजायते' इति ह्युक्तम् । यत्रापि गुरुनिन्दादिनिमित्तः क्रोधस्तत्रापि भक्तिनिमित्तानिन्दाकामनिमित्त एव । ये त्वन्यथा वदन्ति ते सङ्करान्न सूक्ष्मं जानन्ति । उक्तं च-

'ऋते कामं न कोपाद्या जायन्ते हि कथञ्चन' इति ।

महाशनः । महद्धि कामभोग्यम् । महाब्रह्महत्यादिकारणत्वान्महापाप्मा । सर्वपुरुषार्थविरोधित्वाद् वैरी ॥ ३७ ॥

**धूमेनाव्रियते वह्निर्यथादर्शो मलेन च ।**
**यथोल्वेनावृतो गर्भस्तथा तेनेदमावृतम् ॥ ३८ ॥**

### भाष्यम्

कथं विरोधी सः? इदमनेनाऽवृतम् । यथा धूमेनाग्निरावृतः प्रकाशरूपोऽप्यन्येषां सम्यगदर्शनाय तथा परमात्मा । यथाऽऽदर्शो मलेनाऽवृतोऽन्याभिव्यक्तिहेतुर्न भवति तथाऽन्तःकरणं परमात्मादेर्व्यक्ति-हेतुर्न भवति कामेनाऽवृतम् । यथोल्बेनाऽवृत्य बद्धो भवति गर्भस्तथा कामेन जीवः ॥ ३८ ॥

**आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।**
**कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ३९ ॥**

### भाष्यम्

शास्त्रतो जातमपि ज्ञानं परमात्माऽपरोक्ष्याय न प्रकाशते कामेनाऽवृतं

ज्ञानिनोऽपि । किमु अल्पज्ञानिनः ? कामरूपेण कामाख्येन नित्यवैरिणा । दुष्पूरेण । दुःखेन हि कामः पूर्यते । नहीन्द्रादिपदं सुखेन लभ्यते । यद्यपीन्द्रादिपदं प्राप्तं पुनर्ब्रह्मादिपदमिच्छतीत्यलम्बुद्धिर्नास्तीत्यनलः । उक्तं च–

**'ज्ञानस्य ब्रह्मणश्चाग्नेर्धूमो बुद्धेर्मलं तथा ।**
**आदर्शस्याथ जीवस्य गर्भोल्वोऽपि हि कामकः' ।। इति ।। ३९ ।।**

**इन्द्रियाणि मनोबुद्धिरस्याधिष्ठानमुच्यते ।**
**एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ।। ४० ।।**

### भाष्यम्

वधार्थं शत्रोरधिष्ठानमाह - **इन्द्रियाणीति** । एतैर्ज्ञानमावृत्य । बुद्ध्यादिभिर्हि विषयगैर्ज्ञानमावृतं भवति ।। ४० ।।

**तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।**
**पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ।। ४१ ।।**

### भाष्यम्

हताधिष्ठानो हि शत्रुर्नश्यति ।। ४१ ।।

### तात्पर्यम्

**'अखिलप्रेरको विष्णुर्ब्रह्माद्यास्तदवान्तराः ।**
**असुरा अशुभेष्वेव कामादेरभिमानिनः ।**
**तत्र कामः कालनेमिः सर्वं धूममलोल्ववत् ।**
**शुभमध्याधमजनं क्रमादावृत्य तिष्ठति ।**
**महाशनस्य तस्येदं नालं तेनानलोऽग्निवत् ।**
**भुञ्जान इन्द्रियाविष्टो ज्ञानास्त्रेणैव (दह्यते)हन्यते' ।। इति ब्रह्मतर्के ।**

ज्ञानावरणरूपेणेदमावृणोतीत्यावृतं ज्ञानमिति पुनराह । न केवलं दुष्पूरो नालमिति मन्यते चेत्यनलः । 'अग्नेरप्यनलः कामो यन्नालमिति मन्यत' इति च ।। ३७-४१ ।।

**इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।**
**मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ।। ४२ ।।**

**एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।**
**जहि शत्रुं महाबाहो कामरूपं दुरासदम् ।। ४३ ।।**

।। ओं तत्सदिति श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे कर्मयोगो नाम तृतीयोऽध्यायः ।।

### भाष्यम्

शत्रुहनन आयुधरूपं ज्ञानं वक्तुं ज्ञेयमाह - **इन्द्रियाणीति** । 'असङ्ग-ज्ञानासिमादाय तरातिपारम्' इति ह्युक्तम् । शरीरादिन्द्रियाणि पराणि उत्कृष्टानि । न केवलं बुद्धेः परः । श्रुत्युक्तप्रकारेणाव्यक्तादपि । 'अव्यक्तात् पुरुषः परः' इति हि श्रुतिः । न च तत्र तत्रोक्तैकदेश-ज्ञानमात्रेण भवति मुक्तिः । सार्वत्रिकगुणोपसंहारो हि भगवता गुणोपसंहारपादेऽभिहितः– 'आनन्दादयः प्रधानस्य' इत्यादिना । तथा चान्यत्र–

'अपौरुषेयवेदेषु विष्णुवेदेषु चैव हि ।
सर्वत्र ये गुणाः प्रोक्ताः सम्प्रदायागताश्च ये ।
सर्वैस्तैः सह विज्ञाय ये पश्यन्ति परं हरिम् ।
तेषामेव भवेन्मुक्तिर्नान्यथा तु कथञ्चन' ।। इति गारुडे ।

तस्मादव्यक्तादपि परत्वेन ज्ञेयः । न चात्र जीव उच्यते । 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इत्युक्तत्वात् । 'अविज्ञाय परं मत्तो जयः कामस्य वै कुतः' इति च । अतः परमात्मज्ञानमेवात्र विवक्षितम् । आत्मानं मनः । आत्मना बुद्ध्या ।। ४२, ४३ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये तृतीयोऽध्यायः ।।

## तात्पर्यम्

'सर्वेभ्यः प्रवरा देवा इन्द्राद्या इन्द्रियात्मकाः ।
तेभ्यो मनोभिमानी तु रुद्रस्तस्मात्सरस्वती ।
बुध्यात्मिका ततो ब्रह्मा महानात्मा परः स्मृतः ।
अव्यक्तरूपा लक्ष्मीश्च वराऽतोऽतो हरिः स्वयम् ।
न तत्समोऽधिको वेति ह्यानुपूर्वी प्रकीर्तिता ।
यथाक्रमप्रबोधेन नाश्याः कामादिशत्रवः ।
प्राप्यते च परं स्थानं विष्णोरतुलमञ्जसा' ।। इति च ।

'न चेन्द्रियेभ्यः परा ह्यर्था रुद्रोऽहंकृतिरूपकः' । इत्यादिविरोधः ।

'सर्वाभिमानिनो देवाः सर्वेऽपि ह्युत्तरोत्तरम् ।
आधिक्यं वक्तुमेवैषां पृथक्स्थानमुदीर्यते ।
आधिक्यक्रम एवात्र शास्त्रतात्पर्यमिष्यते ।
स्थानेषु त्ववरेषां च परे सन्ति न चेतरे ।
तथापि पितुरर्थो यः पुत्रस्याप्युपचर्यते ।
अव्यक्तादिपदार्थानां सर्वे तदभिमानिनः' ।। इति च ।

'यत्र ह क्व च पुत्रस्य तत्पितुर्यत्र वा पितुस्तद्वा पुत्रस्येत्येतदुक्तं भवति' । इत्यादिश्रुतेश्च ।

'वहुवाचिनां तुशव्दानां लिङ्गप्रकरणादिभिः ।
प्रवृत्तिहेतोश्चाधिक्यान्निर्णयोऽर्थेषु गम्यते' ।। इति शव्दनिर्णये ।

'लिङ्गादिसाम्यं यत्र स्यात्प्रयोगाधिक्यमेव तु ।
निर्णायकं भवेत्तत्र तेन स्यात्सुवहुश्रुतः' ।। इति व्रह्मतर्के ।। ४२ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्भगवद्गीतातात्पर्यनिर्णये तृतीयोऽध्यायः ।।

*****

# चतुर्थोऽध्यायः

### भाष्यम्

बुद्धेः परस्य माहात्म्यं कर्मभेदो ज्ञानमाहात्म्यं चोच्यतेऽस्मिन्नध्याये ।

### श्रीभगवानुवाच

इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥

एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।
स कालेनेह महता योगो नष्टः परंतप ॥ २ ॥

स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३ ॥

### भाष्यम्

पूर्वानुष्ठितश्चायं धर्म इत्याह - इममिति ॥ १-३ ॥

### तात्पर्यम्

उक्तयोर्ज्ञानकर्मणोरुभयोर्विशेषविस्तरात्मकोऽयमध्यायः ।

'ब्रह्मरुद्रेन्द्रसूर्याणां यद्दत्तं विष्णुना पुरा ।
पञ्चरात्रात्मकं ज्ञानं व्यासोऽदात्पाण्डवेषु तत् ।
तेषामेवावतारेषु सेनामध्येऽर्जुनाय च ।
प्रादाद्गीतेति निर्दिष्टं सङ्क्षेपेणायुयुत्सवे ।
यथा कुर्वन्ति कर्माणि यथा जानन्ति देवताः ।
सर्वे कार्तयुगाश्चैव नृपाश्च मनुपूर्वकाः ।

ज्ञातव्यं चैव कर्तव्यं यथा सर्वैर्मुमुक्षुभिः ।
त्रैतादित्रिषु जातैश्च गीतायां तदुदाहृतम् ।
पाण्डवाद्याः क्षेमकान्ताः करिष्यन्ति च जानते ।
तथैव तेन गीताया नास्ति शास्त्रं समं क्वचित् ।
वेदार्थपूर्वकं ज्ञेयं पञ्चरात्रं यतोऽखिलम् ।
तत्सङ्क्षेपश्च गीतेयं तस्मान्नास्याः समं क्वचित्' ।।

इति ब्रह्मवैवर्ते ।। १-३ ।।

## अर्जुन उवाच

**अपरं भवतो जन्म परं जन्म विवस्वतः ।
कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ।। ४ ।।**

## श्रीभगवानुवाच

**वहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ।। ५ ।।**

### भाष्यम्

'मयि सर्वाणि' इत्युक्तं तन्माहात्म्यमादितो ज्ञातुं पृच्छति– **अपरमिति** ।। ४-५ ।।

### तात्पर्यम्

'जानन्तोऽपि विशेषार्थज्ञानाय स्थापनाय वा ।
पृच्छन्ति साधवो यस्मात्तेन पृच्छसि पार्थिव ।।'

इत्याग्नेयवचनान्नार्जुनो भगवन्तं न जानाति ।। ४-५ ।।

**अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ।। ६ ।।**

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ ७ ॥

### भाष्यम्

न तर्ह्यनादिर्भवानित्यत आह– **अजोऽपीति** । अव्यय आत्मा देहोऽपीत्यव्ययात्मा । 'अनन्तं विश्वतोमुखम्' इति हि रूपविशेषण-मुत्तरत्र । 'एतन्नानावताराणां निधानं बीजमव्ययम्' इति च । 'जगृहे' इति तु व्यक्तिः । युक्तयस्तूक्ताः । आत्मानादित्वं तु सर्वसमम् । कथमनादिनित्यस्य जनिः? प्रकृतिं स्वामधिष्ठाय । प्रकृत्या जातेषु वसुदेवादिषु । तथैव (तयैव) तेषां जात इव प्रतीयत इत्यर्थः । न तु स्वतन्त्रामधिष्ठायेत्याह– **स्वामिति** । 'द्रव्यं कर्म च' इति ह्युक्तम् । सा हि तत्रोक्ता । ततः सर्वसृष्टेः । आत्ममायया आत्मज्ञानेन । प्रकृतेः पृथगभिधानात् । 'केतुः केतश्चितिश्चित्तं मतिः क्रतुर्मनीषा माया' इति ह्यभिधानम् । सृष्टिकारणया तेषां शरीरादि सृष्ट्वा विमोहिकयाऽजात एव जात इव प्रतीयते वा । उक्तं च–

'महदादेस्तु माता या श्रीर्भूमिरिति कल्पिता ।
विमोहिका च दुर्गाख्या ताभिर्विष्णुरजोऽपि हि ।
जातवत् प्रथते ह्यात्मचिद्बलान्मूढचेतसाम्' ॥ इति ।

ईश्वरः ईशेभ्योऽपि वरः । तच्चोक्तम्-

'ईशेभ्यो ब्रह्मरुद्रश्रीशेषादिभ्यो यतो भवान् ।
वरोऽत ईश्वराख्या ते मुख्या नान्यस्य कस्यचित्' ॥ इति ब्रह्मवैवर्ते ।

'समर्थ ईश इत्युक्तस्तद्वरत्वात्त्वमीश्वरः' इति च ॥ ६,७ ॥

## तात्पर्यम्

आत्ममायया आत्मेच्छया । प्रकृतिं स्वामधिष्ठाय स्वभावम् । 'देवस्यैष स्वभावोऽयम्' इत्यादिश्रुतेश्च । अत एव स्वशब्देन विशेषणं 'प्रकृतिं स्वामवष्टभ्य' इत्यादिषु । 'मयाऽध्यक्षेण प्रकृतिः' इत्यादिषु तु न स्वशब्दः । 'प्रकृतिं विद्धि मे पराम्' इत्यादिषु सम्बन्धित्वेन प्रतीतेरन्या । अत्र तु स्वशब्दः स्वरूपवाची । स्वभाव इत्यत्रापि स्वाख्यो भावः स्वभावः । भावशब्दस्तु सम्बन्ध्याशङ्कानिवृत्तये । स्वस्वभाव इति तु स्वस्वरूपमितिवदुपचारत्वाशङ्कां निवर्तयति ।

'स्रष्टृत्वादिस्वभावत्वात्स्वेच्छया विष्णुरव्ययः ।
सृष्ट्यादिकं करोत्यद्धा स्वयं च वहुधा भवेत्' ।। इति नारायणश्रुतिः
।। ६,७ ।।

**परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।**
**धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ।। ८ ।।**

## भाष्यम्

न जन्मनैव परित्राणादिकं कार्यमिति नियमः । तथाऽपि लीलया स्वभावेन च यथेष्टचारी । तथाह्युक्तम्–

'देवस्यैष स्वभावोऽयम्' ।

'लोकवत् तु लीलाकैवल्यम्' ।

'क्रीडतो वालकस्येव चेष्टां तस्य निशामय' ।

'अरिभयादिव स्वयं पुराद् व्यवात्सीद् यदनन्तवीर्यः' ।

'पूर्णोऽयमस्यात्र न किञ्चिदाप्यं तथाऽपि सर्वाः कुरुते प्रवृत्तीः ।
अतो विरुद्धेषुमिमं वदन्ति परावरज्ञा मुनयः प्रशान्ताः' ।।
इत्याद्यृग्वेदखिलेषु ।। ८ ।।

## जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
## त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ।। ९ ।।

### भाष्यम्

पृथङ् मुक्त्युक्तिः सर्वज्ञाननियमदर्शनार्थम् । न तु तावन्मात्रेण मुक्तिरित्युक्तम् ।

'वेदायुक्तं तु सर्वं यो ज्ञात्वोपास्ते सदा हि माम् ।
तस्यैव दर्शनपथं यामि नान्यस्य कस्यचित्' ।। इत्युक्तेश्च महाकौर्मे ।

अत्रोक्तस्यैतज्ज्ञात्वैव जन्म नैतीति गतिः । इतरवाक्यानां नान्या गतिः । 'नान्यस्य कस्यचित्' इति विशेषणात् । 'तत्त्वतः' इति विशेषणाच्च सर्वज्ञानमापतति । यत्रैवं भवति यत्र तत्त्वत इति विशेषणेन न विरोधः । उक्तं च–

'एकं च तत्त्वतो ज्ञातुं विना सर्वज्ञतां नरः ।
न समर्थो महेन्द्रोऽपि तस्मात् सर्वत्र जिज्ञसेत्' ।।
इति स्कान्दे ।। ९ ।।

### तात्पर्यम्

'येषां गुणानां ज्ञानेन मुक्तिरुक्ता पृथक्पृथक् ।
वेदेषु चेतिहासेषु सा तु तेषां समुच्चयात् ।
एवमेव शमादीनां नान्यथा तु कथञ्चन' ।।

इति ब्रह्मवैवर्तवचनाज्जन्म कर्म चेत्यादिषु न तावन्मात्रेण मोक्षः ।। ९ ।।

**वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।**
**बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ १० ॥**

## भाष्यम्

सन्ति च तथा मुक्ता इत्याह– **वीतरागेति** । मन्मयाः मत्प्रचुराः । सर्वत्र मां विना न किञ्चित् पश्यन्तीत्यर्थः ॥ १० ॥

## तात्पर्यम्

'मयं प्रधानमुद्दिष्टं प्राधान्यं यैर्हरेर्मतम् ।
भगवन्मयास्ते विज्ञेयास्ते मुच्यन्ते न चापरे' ॥ इति च ।

मयि भावो मद्भावः ॥ १० ॥

**ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ११ ॥**

## भाष्यम्

न च मद्भजनमात्रेण मुक्तिर्भवत्यन्यदेवतादिरूपेण । तथाऽपि सर्वेषामानुरूप्येण फलं ददामीत्याह - **ये यथेति** । भजामि सेवयामि फलदानेन । न तु गुणभावेन । कथमयं विशेष इत्यत आह– **मम वर्त्मेति** । अन्यदेवता यजन्तोऽपि मम वर्त्मैवानुवर्तन्ते । सर्वकर्मकर्तृत्वाद् भोक्तृत्वाच्च मम । 'योऽप्यन्यदेवताभक्ताः' इति हि वक्ष्यति । 'यो देवानां नामधा एक एव' इति हि श्रुतिः । स भगवानेव च तत्राभिधीयते । 'अजस्य नाभावध्येकमर्पितम्' इत्यादितल्लिङ्गात् ॥ ११ ॥

**काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।**
**क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ १२ ॥**

### भाष्यम्

कुतो मम वर्त्मानुवर्तन्ते ? **क्षिप्रं हि** । अत एव हि फलप्राप्तिः । 'तस्मात्ते धनसनयः' इति हि श्रुतिः ॥ १२ ॥

### तात्पर्यम्

तथैव भजामि । तदनुसारिफलदानरूपेण । अन्यदेवतायाजिनामपि मत्समर्पणेन वैष्णवमार्गानुवर्तनेनैव सम्यक् फलं भवति ॥

अन्यदैवतपूजापि यस्मिन्नन्ते समर्पिता स्वर्गादिफलहेतुः स्यात् नान्यथा तं भजेद्धरिम् ॥ इत्याग्नेये ॥ ११-१२ ॥

**चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।**
**तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ १३ ॥**

### भाष्यम्

अहमेव हि कर्तेत्याह - **चातुर्वर्ण्यमिति** । चतुर्वर्णसमुदायः । सात्त्विको हि ब्राह्मणः । सात्त्विकराजसः क्षत्रियः । राजसतामसो वैश्यः । तामसः शूद्रः इति गुणविभागः । कर्मविभागस्तु 'शमो दमः' इत्यादिना वक्ष्यते । क्रियाया वैलक्षण्यात् कर्ताऽप्यकर्ता । तथाहि श्रुतिः– 'विश्वकर्मा विमनाः' इत्यादि । 'तनुर्विद्या क्रियाऽऽकृतिः' इत्यादि च । साधितं चैतत् पुरस्तात् ॥ १३ ॥

## तात्पर्यम्

'सत्वसत्वाधिकरजोरजोभिस्तमसा तथा ।
वर्णा विभक्ताश्चत्वारः सात्विका एव वैष्णवा' इति च ।

कर्मविभागं शमो दम इत्यादिना वक्ष्यति ।

'वैष्णवाः सात्विका एव तामसा एव चापरे ।
दौर्लभ्यसुलभत्वेन तेषां वर्णादिभिन्नता' ।। इति च ।

'स्वाभाविको ब्राह्मणादिः शमाद्यैरेव भिद्यते ।
योनिभेदकृतो भेदो ज्ञेय औपाधिकस्त्वयम् ।
विष्णुभक्तिश्चानुगता सर्ववर्णेषु विश्पतिम् ।
आरभ्य हीयतेऽथापि भेदः स्वाभाविकस्ततः' ।। इति नारदीये ।

'कर्ताऽपि भगवान्विष्णुरकर्तेति च कथ्यते ।
तस्य कर्ता यतो नान्यः स्वतन्त्रत्वात्परात्मनः' ।। इति च ।

अपिशब्दो गुणसमुच्चयार्थः । कर्ता मे नास्तीत्यपि विद्धीति ।। १३ ।।

**न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।**
**इति मां योऽभिजानाति कर्मभिर्न स वद्ध्यते ।। १४ ।।**

## भाष्यम्

अत एव न मां कर्माणि लिम्पन्ति । इतश्च न लिम्पन्तीत्याह - **न मे कर्मफले स्पृहा** । इच्छामात्रं त्वस्ति । न तु तत्राभिनिवेशः । तच्चोक्तम्–

'आकाङ्क्षन्नपि देवोऽसौ नेच्छते लोकवत् परः ।
नह्याग्रहस्तस्य विष्णोर्ज्ञानं कामो हि तस्य तु' ।। इति ।

न च केचिन्मुक्ता भवन्तीति क्रमेण सर्वमुक्तिः । तथाहि श्रुतिः-

'ज्ञात्वा तमेवं मनसा हृदा च भूयो न मृत्युमुपयाति विद्वानिति कथं वा इत्यनन्ता इत्यनन्तवदिति होवाच' इति ।। १४ ।।

### तात्पर्यम्

जीवाभेदनिवृत्त्यर्थं मामिति विशेषणम् ।। १४ ।।

एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ।। १५ ।।

### भाष्यम्

एवं ज्ञात्वा कर्मकरण आचारोऽप्यस्तीत्याह– **एवमिति** । पूर्वतरं कर्म पूर्वभावीत्यर्थः ।। १५ ।।

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।
तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात्।। १६ ।।

### भाष्यम्

कर्म कुर्वित्युक्तम् । तस्य कर्मणो दुर्ज्ञेयत्वमाह सम्यग् वक्तुम् - **किं कर्मेति** ।। १६ ।।

कर्मणो ह्यपि वोद्धव्यं वोद्धव्यं च विकर्मणः ।
अकर्मणश्च वोद्धव्यं गहना कर्मणो गतिः ।। १७ ।।

### भाष्यम्

न केवलं तज्ज्ञात्वा मोक्ष्यसे, ज्ञात्वैवेत्याशयवानाह - **कर्मण इति** । तच्चोक्तम्–

'अज्ञात्वा भगवान् कस्य कर्माकर्मविकर्मकम् ।
दर्शनं याति हि मुने कुतो मुक्तिश्च तद् विना' ।। इति ।

अकर्म कर्माकरणम् । कर्माकर्मान्यद् विकर्म निषिद्धम् । बन्धकत्वात् । ततो विविच्य कर्मादि बोद्धव्यमित्यादि । न च शापादिना । कवयोऽप्यत्र मोहिताः । अशक्यं चैतज्ज्ञातुमित्याह– **गहनेति** ।। १७ ।।

## तात्पर्यम्

कर्मापि नो मत्त इति बोद्धव्यमित्यादि ।। १७ ।।

**कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।**
**स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ।। १८ ।।**

## भाष्यम्

कर्मादिस्वरूपमाह - **कर्मणीति** । कर्मणि क्रियमाणे सति अकर्म यः पश्येत् विष्णोरेव कर्म नाहं चित्प्रतिबिम्बः किञ्चित् करोमीति । अकर्मणि सुप्त्यादावकरणावस्थायां परमेश्वरस्य यः कर्म पश्यति अयमेव परमेश्वरः सर्वदा सर्वसृष्ट्यादि करोतीति । स बुद्धिमान् ज्ञानी । स एव च युक्तो योगयुक्तः । सर्वाकरणात् स एव च कृत्स्नकर्मकृत् कृत्स्नफलत्वात् ।। १८ ।।

## तात्पर्यम्

कर्मणि जीवे अस्वातन्त्र्यादकर्म कर्मविधिफलयोरभावात् । अकर्मणि विष्णौ । स्वातन्त्र्यात्सर्वकर्तृत्वम् ।

**करोऽस्मिन् मीयत इति कर्म जीव उदाहृतः ।**
**विधिशब्देनामितत्वात् अकर्म भगवान् हरिः ।। इति नारदीये ।**

कर इति सकारान्तः अदृष्टवाची । क्रियावाची वा । तदधीनत्वात् । प्रसिद्धश्च जीवे कर्मशब्दः पञ्चरात्रे । कृत्स्नफलवत्वात् कृत्स्नकर्मकृत् । ॥ १८ ॥

**यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः ।**
**ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥ १९ ॥**

### भाष्यम्

एतदेव प्रपञ्चयति - **यस्येत्यादिश्लोकपञ्चकेन** । उक्तप्रकारेण ज्ञानाग्निदग्धकर्माणम् ॥ १९ ॥

**त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तोऽनिराश्रयः ।**
**कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोति सः ॥ २० ॥**

### भाष्यम्

न च कामसङ्कल्पाभावेनालम् । आसङ्गं स्नेहं च त्यक्त्वा । ज्ञानस्वरूपमाह पुनः— **नित्यतृप्त** इति नित्यतृप्तनिराश्रयेश्वरसरूपोऽस्मीति तथाविधः ॥ २० ॥

### तात्पर्यम्

अनिराश्रयो भगवदाश्रयत्वात् । मुक्तस्य स्वातन्त्र्याभिमानात् ॥२०॥

**निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।**
**शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ २१ ॥**

### भाष्यम्

कामादित्यागोपायमाह - **निराशीरिति** । यतचित्तात्मा भूत्वा

निराशीरित्यर्थः । आत्मा मनः । परिग्रहत्यागोऽनभिमानम् । नैव किञ्चित् करोतीत्यस्याभिप्रायमाह - **नाऽप्नोति किल्विषमिति** ।।२१।।

**यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः ।**
**समः सिद्धावसिद्धौ च कृत्वापि न निवद्ध्यते।। २२ ।।**

### भाष्यम्

यतचित्तात्मनो लक्षणमाह - **यदृच्छालाभेति** । कथं द्वन्द्वातीतत्वमित्यत आह - **समः सिद्धाविति** ।। २२ ।।

**गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।**
**यज्ञायाचरतः कर्म समग्रं प्रविलीयते ।। २३ ।।**

### भाष्यम्

उपसंहरति– **गतसङ्गस्येति** । गतसङ्गस्य फलस्नेहरहितस्य । मुक्तस्य शरीराद्यनभिमानिनः । ज्ञानावस्थितचेतसः परमेश्वरज्ञानिनः ।। २३ ।।

**ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।**
**ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ।। २४ ।।**

### भाष्यम्

ज्ञानावस्थितचेतस्त्वं स्पष्टयति - **ब्रह्मार्पणमिति** । सर्वमेतद् ब्रह्मेत्युच्यते । तदधीनसत्ताप्रतीतित्वात् । न तु तत्स्वरूपत्वात् । उक्तं हि–

'त्वदधीनं यतः सर्वमतः सर्वो भवानिति ।
वदन्ति मुनयः सर्वे न तु सर्वस्वरूपतः' ।। इति पाद्मे ।

'सर्वं तत्प्रज्ञानेत्रम्' इति च । 'एतं ह्येव बह्वृचाः' इत्यादि च । **समाधिना सह ब्रह्मैव कर्म ।। २४ ।।**

## तात्पर्यम्

कथमभिमानत्यागः ? ब्रह्मार्पणमित्यादि । ब्रह्मण्यर्पणं ब्रह्मार्पणम् । ब्रह्मणो हविः । ब्रह्मणोऽग्नौ । ब्रह्मणः कर्मसमाधिना सह । समाधिरपि तदधीना इत्यर्थः ।

'एकः स्वतन्त्रो भगवान् तदीयं त्वन्यदुच्यते' । इति भारते ।। २४ ।।

**दैवमेवापरे यज्ञं योगिनः पर्युपासते ।**
**ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ।। २५ ।।**

**श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।**
**शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति ।। २६ ।।**

## भाष्यम्

यज्ञभेदानाह - **दैवमित्यादिना** । दैवं भगवन्तम् । स एव तेषां यज्ञः । भगवदुपासनम् । यज्ञमिति क्रियाविशेषणम् । नान्यत् तेषामस्ति यतीनां केषाञ्चित् । यज्ञं भगवन्तम् । 'यज्ञेन यज्ञम्', 'यज्ञो विष्णुर्देवता' इत्यादिश्रुतिभ्यः । यज्ञेन प्रसिद्धेनैव । यज्ञं प्रति यज्ञेन जुह्वतीति सर्वत्र समम्- 'तं यज्ञम्' इत्यादौ । उक्तं च-

'विष्णुं रुद्रेण पशुना ब्रह्मा ज्येष्ठेन सूनुना ।
अयजन्मानसे यज्ञे पितरं प्रपितामहः' ।। इति ।। २५,२६ ।।

### तात्पर्यम्

दैवं विष्णुमेव यज्ञ इत्युपासते । स्वभोग्यत्वात्स्वयमेव यज्ञः । ब्रह्माख्याग्नौ क्रियायज्ञं तेनैव यज्ञाख्येन विष्णुना समर्पयन्ति । तत्पूजात्वेन श्रोत्रादिसंयमं कुर्वन्ति । तत्पूजात्वेन विषयान् भुञ्जते ।। २५, २६ ।।

**सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।**
**आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ।। २७ ।।**

### भाष्यम्

आत्मसंयमाख्योपायाग्नौ ।। २७ ।।

### तात्पर्यम्

तत्पूजात्वेनेन्द्रियादिसंयमं कुर्वन्ति । यज्ञेनैवेति सर्वत्राप्यन्वीयते ।
'तेनैव तं पूजयेद्वा विहितैर्वाऽन्यसाधनैः ।
स एव विष्णोर्यज्ञः स्यान्मानसो वा स वाह्यकः' ।। इति ब्रह्मवैवर्ते ।। २७ ।।

**द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ।**
**स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ।। २८ ।।**

### भाष्यम्

द्रव्यं जुह्वतीति द्रव्ययज्ञाः । तपः परमेश्वरार्पणबुद्ध्या तत्र जुह्वतीति तपोयज्ञा इत्यादि । इदं तपो हविः । एतद् ब्रह्माग्नौ जुहोमि तत्पूजार्थमिति होमः । तदर्पण एव च होमबुद्धिः ।। २८ ।।

**अपाने जुह्वनि प्राणं प्राणेऽपानं तथापरे ।**
**प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ।। २९ ।।**

### भाष्यम्

अपरे प्राणायामपरायणाः प्राणमपाने जुह्वति, अपानं च प्राणे । कुम्भकस्था एव भवन्तीत्यर्थः ।। २९ ।।

**अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति ।**
**सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ।। ३० ।।**

**यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।**
**नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ।। ३१ ।।**

### भाष्यम्

नियताहारत्वेनैव प्राणशोषात् प्राणान् प्राणेषु जुह्वति । 'यच्छेद् वाङ्मनसी' इत्यादिश्रुत्युक्तप्रकारेण वा । अन्यदपि ग्रन्थान्तरे सिद्धम्-
'यदस्याल्पाशनं तेन प्राणाः प्राणेषु वै हुताः' इति ।। ३०, ३१ ।।

**एवं वहुविधा यज्ञा वितता ब्रह्मणो मुखे ।**
**कर्मजान्विद्धि तान् सर्वानेवं ज्ञात्वा विमोक्ष्यसे।। ३२ ।।**

### भाष्यम्

ब्रह्मणः परमात्मनो मुखे । 'अहं हि सर्वयज्ञानाम्' इति हि वक्ष्यति । मानसवाचिककायिककर्मजा एव हि ते सर्वे । एवं ज्ञात्वा, तानि कर्माणि कृत्वा, विमोक्ष्यसे । युद्धं परित्यज्य यन्मोक्षार्थं करिष्यसि तदपि कर्म । अतो विहितं न त्याज्यमिति भावः ।। ३२ ।।

### तात्पर्यम्

श्रोत्रादीनित्यादिष्विज्यानुक्तेरिज्योऽन्य इति शङ्कां निवारयति । वितता

ब्रह्मणो मुख इति । 'सर्वयज्ञैः परं ब्रह्म याज्यं विष्ण्वाख्यमव्ययम्' । इति च ।। ३२ ।।

**श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप ।**
**सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ।। ३३ ।।**

## भाष्यम्

अखिलमुपासनाद्यङ्गयुक्तम् । ज्ञानफलमेवेत्यर्थः ।। ३३ ।।

## तात्पर्यम्

सर्वं कर्माखिलम् आसमन्तादल्पं ज्ञाने परिसमाप्यते । ज्ञाने जाते पूर्यते ।

'समाप्तविद्यान् धनुषि श्रेष्ठान् यान् सप्त मन्यसे ।'

इतिवत्समाप्तिशब्दोऽत्र पूर्तिवाची । ज्ञानासिनाऽऽत्मनः ।

'छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ' इत्यादि पुनर्योगकथनात् ।।३३।।

**तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।**
**उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्वदर्शिनः ।। ३४ ।।**

**यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।**
**येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ।। ३५ ।।**

## भाष्यम्

इदानीमपि ज्ञान्येव । तथाऽप्यभिभवान्मोहः । मा तूक्ता । येन ज्ञानेन मय्यात्मभूते सर्वभूतानि अथो तस्मादेव मोहनाशात् पश्यसि ।। ३४, ३५ ।।

### तात्पर्यम्

'ज्ञानं तेऽहं सविज्ञानम्' इति वक्ष्यमाणत्वात्स्वयमेवोपदेक्ष्यति ।। ३४ ।।

आत्मनि व्याप्ते मयि । अथो तस्माद्व्याप्तत्वादेव ।। ३५ ।।

### भाष्यम्

करणभूतज्ञानं स्तौति पुनः श्लोकत्रयेण-

**अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।**
**सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ।। ३६ ।।**

**यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।**
**ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ।। ३७ ।।**

**न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।**
**तत्स्वयं योगसंसिद्धः कालेनाऽत्मनि विन्दति ।। ३८ ।।**

### भाष्यम्

तत्साधनं विरोधिफलं च तदुक्तैरुक्त्वोपसंहरति-

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीभगवद्गीताभाष्ये चतुर्थोऽध्यायः ।।

**श्रद्धावाँल्लभते ज्ञानं मत्परः संयतेन्द्रियः ।**
**ज्ञानं लव्ध्वा परां शान्तिमचिरेणाधिगच्छति ।। ३९ ।।**

**अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।**
**नायं लोकोऽस्ति न परो न सुखं संशयात्मनः।। ४० ।।**

योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।
आत्मवन्तं न कर्माणि निवध्नन्ति धनञ्जय ।। ४१ ।।

तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनाऽऽत्मनः ।
छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ।। ४२ ।।

।। ओं तत्सदिति श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे ज्ञानयोगो नाम चतुर्थोऽध्यायः ।।

## तात्पर्यम्

आत्मवन्तं परमात्मभक्तम् ।। ४१ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीभगवद्गीतातात्पर्यनिर्णये चतुर्थोऽध्यायः।।

*****

# पञ्चमोऽध्यायः

### भाष्यम्

तृतीयाध्यायोक्तमेव कर्मयोगं प्रपञ्चयत्यनेनाध्यायेन -'यदृच्छालाभसन्तुष्टः' इत्यादि सन्न्यासम् ; 'कुरु कर्म' इत्यादि कर्मयोगं च-

### अर्जुन उवाच

**संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।**
**यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ।। १ ।।**

### भाष्यम्

नियमनादिना सकललोककर्षणात् कृष्णः ।

'यतः कर्षसि देवेश नियम्य सकलं जगत् ।
अतो वदन्ति मुनयः कृष्णं त्वां ब्रह्मवादिनः' ।। इति महाकौर्मे ।

संन्यासशब्दार्थं भगवानेव वक्ष्यति । अयं प्रश्नाशयः - यदि संन्यासः श्रेयोऽधिकः स्यात् तर्हि संन्यास(स्येषद्)स्यैतद् विरोधि युद्धमिति ।।१।।

### तात्पर्यम्

योगसंन्यासयोर्लक्षणं स्पष्टयत्यनेनाध्यायेन । योगसंन्यस्तकर्माणमित्यादौ न्यासशब्दः सर्वकर्मत्यागविषयः इत्याशङ्क्य योगसंन्यासयोर्भिन्नपुन्निष्ठत्वाभिप्रायेण पृच्छति । संन्यासमिति ।। १ ।।

### श्री भगवानुवाच

**संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।**
**तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ।। २ ।।**

### भाष्यम्

नायं संन्यासो यत्याश्रमः–

'द्वन्द्वत्यागात् तु संन्यासात् मत्पूजैव गरीयसी' ।। इति वचनात् ।

'तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत्' । इति च ।

'संन्यासस्तु तुरीयो यो निष्क्रियाख्यः सधर्मकः ।
न तस्मादुत्तमो धर्मो लोके कश्चन विद्यते ।
तद्भक्तोऽपि हि यद् गच्छेत् तद्गृहस्थो न धार्मिकः ।
मद्भक्तिश्च विरक्तिस्तदधिकारो निगद्यते ।
यदाऽधिकारो भवति ब्रह्मचार्यपि प्रव्रजेत्' ।। इति नारदीये ।

''ब्रह्मचर्यादेव प्रव्रजेत् । यदहरेव विरजेत्'' इति च ।

'संन्यासे तु तुरीये वै प्रीतिर्मम गरीयसी (महीयसी) ।
येषामत्राधिकारो न तेषां कर्मेति निश्चयः' ।। इत्यादेश्च ब्राह्मे ।

अतो नात्राऽश्रमसंन्यास उक्तः ।। २ ।।

### तात्पर्यम्

एकपुंयोग्यावेतौ तयोर्मध्ये योग एव विशिष्ट इति परिहाराभिप्रायः । उभौ समुच्चितौ । 'संन्यासस्तु महाबाहो दुःखमाप्तुमयोगत' इति वक्ष्यमाणत्वात् ।। २ ।।

**ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति ।**
**निर्द्वन्द्वो हि महाबाहो सुखं बन्धात्प्रमुच्यते ।। ३ ।।**

### भाष्यम्

संन्यासशब्दार्थमाह - ज्ञेय इति । संन्यासस्य निःश्रेयसकरत्वं ज्ञापयितुं तच्छब्दार्थं स्मारयति - ज्ञेय इति ।। ३ ।।

### तात्पर्यम्

द्वेषादिवर्जनमेव संन्यासशब्दार्थो न यत्याश्रमोऽत्राभिप्रेत इत्याह **ज्ञेय इति** । न च 'काम्यानां कर्मणां न्यासम्' इत्यनेन विरोधः । तेनापि सहितस्य न्यासत्वात् । न च त्यागस्य पृथग्वचनाद्विरोधः । कुरु-पाण्डववत् न्यासावान्तरभेदत्वात्त्यागस्य ।। ३ ।।

**साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।**
**एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ।। ४ ।।**

### भाष्यम्

संन्यासो हि ज्ञानान्तरङ्गत्वेनोक्तः– 'न तस्य तत्त्वग्रहणाय' इत्यादौ । अतः कथं सोऽवम इत्यत आह– **साङ्ख्ययोगाविति** । उभयो-रप्यन्तरङ्गत्वेनाविरोधः ।

'अग्निमुग्धो हवै धूमतान्तः स्वं लोकं न प्रतिजानाति'

'मा वः पदव्यः पितरस्मदाश्रिता या यज्ञशालासनधूमवर्त्मनाम्'

इत्यादि तु काम्यकर्मविषयमिति भावः । ये त्वन्यथा वदन्ति ते बालाः ।। ४ ।।

### तात्पर्यम्

बालास्तु न्यासशब्देन यत्याश्रममेव स्वीकृत्य तत्स्थानामेव साङ्ख्य-शब्दोदितज्ञानाधिकारो गृहस्थानामेव योगशब्दोदितकर्माधिकार इति मन्यन्ते । तन्न पण्डिता मन्यन्ते । कुतः ? यस्माज्ज्ञानमार्गं कर्ममार्गं च सम्यगास्थितः उभयोरपि फलं प्राप्नोति ।। ४ ।।

यत्साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।
एकं साङ्ख्यं च योगं च यः पश्यति स पश्यति।। ५ ।।

### भाष्यम्

'एकमपि' इत्यस्याभिप्रायमाह - यत् साङ्ख्यैरिति । योगिभिरपि ज्ञानद्वारा ज्ञानफलं प्राप्यत इत्यर्थः ।। ५ ।।

### तात्पर्यम्

तस्माज्ज्ञानिनां कर्माप्यनुष्ठेयम् । कर्मिणामपि गृहस्थानां ज्ञातव्यो भगवान् । न हि ज्ञानं विना कर्मणः सम्यगनुष्ठानं भवति ।

'निष्कामं ज्ञानपूर्वं च निवृत्तमिह चोच्यते ।
निवृत्तं सेवामानस्तु ब्रह्माभ्येति सनातनम् ।
बुद्ध्याऽविहिंसन् पुष्पैर्वा प्रणवेन समर्चयेत् ।
वासुदेवात्मकं ब्रह्म मूलमन्त्रेण वा यतिः ।
मुक्तिरस्तीति नियमो ब्रह्मदृग्यस्य विद्यते ।
तस्याप्यानन्दवृद्धिः स्याद्वैष्णवं कर्म कुर्वतः ।
कर्म ब्रह्मदृशा हीनं न मुख्यमिति कीर्तितम् ।
तस्मात्कर्मेति तत्प्राहुर्यत्कृतं ब्रह्मदर्शिना ।
एतस्मान्न्यासिनां लोकं संयान्ति गृहिणोऽपि हि ।
ज्ञानमार्गः कर्ममार्ग इति भेदस्ततो न हि ।
तस्मादाश्रमभेदोऽयं कर्मसङ्कोचसम्भवः' ।। इति व्यासस्मृतेः ।। ५ ।।

संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।
योगयुक्तो मुनिर्ब्रह्म नचिरेणाधिगच्छति ।। ६ ।।

### भाष्यम्

इतश्च संन्यासाद् योगो वर इत्याह - संन्यासस्त्विति । योगाभावे मोक्षादिफलं न भवति । अतः कामजयादिदुःखमेव तस्य । मोक्षाद्येव हि फलम्; अन्यत् फलमल्पत्वादफलमेवेत्याशयः ।

**'विना मोक्षं फलं यत्तु न तत् फलमुदीर्यते'** । इति पाद्मे ।

यत्तु महत्फलयोग्यं तस्याल्पं फलमेव न भवति । यथा पद्मरागस्य तण्डुलमुष्टिः । महाफलश्च योगयुक्तश्चेत् संन्यास इत्याह - **योगयुक्त** इति । मुनिः संन्यासी । तथाचोक्तम्–

**'स हि लोके मुनिर्नाम यः कामक्रोधवर्जितः'** । इति ।। ६ ।।

### तात्पर्यम्

**'मोक्षोपायो योग इति तद्रूपो न्यास एव तु ।**
**विष्ण्वर्पिततया भद्रो नान्यो न्यासः कथञ्चन'** । इत्याग्नेये ।

विष्ण्वर्पितत्वादियोगरूपत्वं विना केवलकर्मत्यागो नरकफल एव । 'यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव' । इति वक्ष्यमाणत्वात् । योगविशेषत्वान्न्यासस्य पृथगुक्तिः ।। ६ ।।

**योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः**
**सर्वभूतात्मभूतात्माकुर्वन्नपि न लिप्यते ।। ७ ।।**

### भाष्यम्

एतदेव प्रपञ्चयति– **योगयुक्त** इति । सर्वभूतात्मभूतः परमेश्वरः । 'यच्चाऽप्नोति' इत्यादेः । स आत्मभूतः स्वसमीपं प्रत्यादानादिकर्ता यस्य सः सर्वभूतात्मभूतात्मा ।। ७ ।।

### तात्पर्यम्

सर्वभूतात्मभूतात्मेति मुख्ययोगः ।

'आदानात्सर्वभूतानां विष्णुरात्मा प्रकीर्तितः ।
सर्वभूतात्मभूतात्मा तत्र भूतमनाः पुमान्' ।। इति च ।। ७ ।।

नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यन् शृण्वन् स्पृशन् जिघ्रन् अश्नन् गच्छन् स्वपन् श्वसन् ।।
।। ८ ।।

प्रलपन् विसृजन् गृह्णन् उन्मिषन् निमिषन् अपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ।। ९ ।।

### भाष्यम्

संन्यासं स्पष्टयति पुनः श्लोकद्वयेन ।। ८, ९ ।।

### तात्पर्यम्

यथा न्यासस्य योगरूपत्वं तथाऽह नैव किञ्चिदित्यादिना ।

'विष्णुनाऽर्थेष्वीरितानि मन आदीनि सर्वशः ।
वर्तन्तेऽन्यो न स्वतन्त्र इति जानन् हि तत्ववित्' ।।
इति च ।। ८, ९ ।।

ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ।। १० ।।

### भाष्यम्

संन्यासयोगयुक्त एव च कर्मणा न लिप्यत इत्याह– **ब्रह्मणीति** ।
साधननियमोपचारत्वनिवृत्त्यर्थं पुनःपुनः फलकथनम् ।। १० ।।

**कायेन मनसा वुद्ध्या केवलैरिन्द्रियैरपि ।**
**योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये।। ११ ।।**

### भाष्यम्

एवञ्चाऽचार इत्याह– **कायेनेति** ।। ११ ।।

**युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।**
**अयुक्तः कामकारेण फले सक्तो निवध्यते ।। १२ ।।**

### भाष्यम्

पुनर्युक्त्यादिनियमनार्थं युक्तायुक्तफलमाह– **युक्त इति** । युक्तो योगयुक्तः ।। १२ ।।

**सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ।**
**नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ।। १३ ।।**

### भाष्यम्

पुनः संन्यासशब्दार्थं स्पष्टयति– **सर्वकर्माणीति** । मनसेति विशेषणादभिमानत्यागः ।। १३ ।।

### तात्पर्यम्

तत्पूजात्मकानि तत्कृतानि मम शुभार्थमिति ब्रह्मण्याधानम् । स्वातन्त्र्याभावापेक्षयैव जीवस्याकर्तृत्वम् ।

'स्ववन्दनं यथा पित्रा कारितं शिशुकर्तृकम् ।
एवं पूजा विष्ण्वधीना भवेज्जीवकृतेत्यपि' ।। इति प्रवृत्ते ।

अतो मनसैव कर्मन्यासोऽस्वातन्त्र्यापेक्षया ।। १०-१३ ।।

न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ १४ ॥

नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः ।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ १५ ॥

### भाष्यम्

न च करोति वस्तुत इत्याह– **न कर्तृत्वमिति** । प्रभुर्हि जीवो जडमपेक्ष्य ॥ १४, १५ ॥

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ १६ ॥

### भाष्यम्

ज्ञानमेवाज्ञाननाशकमित्याह– **ज्ञानेनेति** । प्रथमज्ञानं परोक्षम् ॥ १६ ॥

तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ १७ ॥

### भाष्यम्

अपरोक्षज्ञानाव्यवहितसाधनमाह– **तद्बुद्धय इति** ॥ १७ ॥

### तात्पर्यम्

यथा पितृदत्तं पालकत्वं राजपुत्राणाम् एवं परमात्मदत्तं क्रियास्वातन्त्र्य-लक्षणं कर्तृत्वम् । क्रियानिष्पन्नधर्मादिरूपकर्मणि स्वातन्त्र्यं च जीवानामप्यस्तीत्याशङ्कां परिहरति । **न कर्तृत्वमित्यादिना** ।

क्रियायामदृष्टोत्पादने फले च स्वातन्त्र्यं लोकस्य न सृजतीश्वर इत्यर्थः । अन्यथा लोकस्येति विशेषणं व्यर्थम् । जनपदे निवसतां तद्वित्त-भोजिनामप्याधिपत्यादानान्न दत्ता जनपदा राज्ञा स्वपुत्राणामितिवत्कर्म-फलादिसंयोगिनामपि तत्स्वातन्त्र्यादानान्न सृजतीति युज्यते । स्वयमेव भवति भावयति चेति स्वभावो भगवान् । स्वभावत्वात्स्वयमेव कर्तृत्वादिषु प्रवर्तते ।

**'स्वातन्त्र्याद्भगवान्विष्णुः स्वभाव इति कीर्तितः ।**
**तत्स्वातन्त्र्यं कदाप्येष नान्यस्य सृजति क्वचित् ।**
**स्वातन्त्र्यादेव पापादिसम्बन्धः कुर्वतोऽपि न ।**
**अज्ञानावृतबुद्धित्वादीदृशं तं न जानते' ।। इति महावाराहे ।**

**'अहं सर्वस्य प्रभवः' । 'तपाम्यहमहं वर्षं निगृह्णामि' ।**
**'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ।'**
**'न ऋते त्वत्क्रियते किञ्चनारे' । 'देवस्यैष स्वभावोऽयम्' ।**
**'लोकवत्तु लीलाकैवल्यम्' ।**

इत्यादेर्नास्यास्वाभाविकं कर्तृत्वमकर्तृत्वं वा । विपरीतप्रमाणाभावाच्च । अनिर्वाच्यनिरासादेव च निरस्तोऽयं पक्षः । न च सर्वविशेषराहित्य-वादिनां शून्यवादात्कश्चिद्विशेषः । न हि सर्वविशेषरहितमित्युक्ते तदस्तीति सिद्ध्यति । वाच्यत्वलक्ष्यत्वास्तित्वादीनामपि विशेषत्वात् । अन्यथाऽस्ति ब्रह्मेत्यादीनां शब्दानामपि पर्यायत्वादयो दोषाः । व्यावर्त्यविशेषश्च व्यावृत्तविशेषनिबन्धन एव । अन्यथा वैयर्थ्यमेव स्यात् । न च सर्वशब्दावाच्यस्य लक्ष्यत्वम् । न च सर्वप्रमाणा-गोचरमस्तीत्यत्र किञ्चिन्मानम् । नास्तित्वं तु सप्तमरसादिव-ददर्शनात्सिद्ध्यति ।

स्वप्रकाशत्वं च न अमानं सिद्ध्यति । स्वयंप्रकाशत्वं च ततोऽतिरिक्तं चेद्विशेषाङ्गीकारः । न चेत्तदेव प्रमाणगोचरम् । तत्प्रमाणाभावे परप्रकाशत्वमात्रनिरासे स्वप्रकाशत्वे प्रमाणाभावादप्रकाशत्वमेव स्यात् । अर्थतः सिद्धिरित्यर्थापत्तितः सिद्धिस्तत्प्रमाणतः सिद्धिर्वा । उभयथाऽपि प्रमेयत्वमेव स्यात् ।

स्वप्रकाशशब्देन स्वमितत्वानङ्गीकारात्परमितत्वानङ्गीकाराच्चासिद्धिरेव । प्रकाश इत्युक्तेऽपि स्वमन्यं वा किञ्चित्प्रकाश्यं विना न दृष्ट एव भोजनादिवत् । कर्तृकर्मविरोधश्चानुभवविरुद्धः । ज्ञानं च ज्ञेयं ज्ञातारं च विना न दृष्टम् । अतः शून्यवादान्न कश्चिद्विशेषः । अतोऽनन्तदोष-दुष्टत्वादुपरम्यते ।

**हरिः स्वभावतः कर्ता सर्वमन्यत्तदीरितम् ।**
**अतः सा कर्तृता तस्य न कदाचिद्विनश्यति ।। इति पैङ्गिश्रुतिः ।**
**।। १४-१७ ।।**

## विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।
## शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ।। १८ ।।

### भाष्यम्

परमेश्वरस्वरूपाणां सर्वत्र साम्यदर्शनं चापरोक्षज्ञानसाधनमित्याशय-वानाह– **विद्येति** ।। १८ ।।

### तात्पर्यम्

**'विषमेष्वपि जीवेषु समो विष्णुः सदैव तु ।**
**यत्तृणादिगतस्यापि गुणाः पूर्णा हरेः सदा' ।। इति च ।। १८ ।।**

इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।
निर्दोषं हि समं ब्रह्म तस्माद् ब्रह्मणि ते स्थिताः।।१९।।

न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम् ।
स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ।। २० ।।

### भाष्यम्

तदेव स्तौति– **इहैवेति** ।। १९, २० ।।

### भाष्यम्

संन्यासयोगज्ञानानि मिलित्वा प्रपञ्चयत्यध्यायशेषेण–

बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम् ।
स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते ।। २१ ।।

### भाष्यम्

पुनर्योगस्याऽधिक्यं स्पष्टयति– **बाह्यस्पर्शेष्विति** । कामरहित आत्मनि यत् सुखं विन्दति स एव ब्रह्मयोगयुक्तात्मा चेत् तदेवाक्षयं सुखं विन्दति । ब्रह्मविषयो योगो ब्रह्मयोगः । ध्यानादियुक्तस्यैवाऽत्म-सुखमक्षयमन्यथा नेत्यर्थः ।। २१ ।।

ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ।। २२ ।।

### भाष्यम्

संन्यासार्थं कामभोगं निन्दयति– **ये हीति** ।। २२ ।।

**शक्नोतीहैव यः सोढुं प्राक्शरीरविमोक्षणात् ।**
**कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ।। २३ ।।**

### भाष्यम्

तत्परित्यागं प्रशंसयति– **शक्नोतीति** । कामक्रोधोद्भवं वेगं सोढुं शक्नोति, शरीरविमोक्षणात् प्राक्, यथा मनुष्यशरीरे सोढुं सुकरं तथा नान्यत्रेति भावः । ब्रह्मलोकादिस्तु जितकामानामेव भवति ।। २३ ।।

### तात्पर्यम्

इदानीमपि परमात्मनि स्मृतमात्रे सुखं विन्दतीति यत्तदा स एव सम्यगुक्तः किमु ।। २१-२३ ।।

### भाष्यम्

ज्ञानिलक्षणं प्रपञ्चयत्युत्तरश्लोकैः–

**योऽन्तः सुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः ।**
**स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ।। २४ ।।**

### भाष्यम्

आरामः परदर्शनादिनिमित्तं सुखम् । अत्र तु परमात्मदर्शनादिनिमित्तं तत् । सुखं तूपद्रवक्षयव्यक्तम् । अत्र तु कामादिक्षयव्यक्तमात्मसुखम् । स्वयञ्ज्योतिष्ट्वाद् भगवतस्तद्व्यक्तेरन्तर्ज्योतिः । सर्वेषामन्तर्ज्योतिष्ट्वेऽपि व्यक्तेर्विशेषः । असम्प्रज्ञातसमाधीनां बाह्यादर्शनात् । दर्शनेऽप्य-किञ्चित्करत्वादेवशब्दः । उक्तं चैतत्–

**'दर्शनस्पर्शसम्भाषाद् यत् सुखं जायते नृणाम् ।**
**आरामः स तु विज्ञेयः सुखं कामक्षयोदितम्' ।। इति नारदीये ।**

'स्वज्योतिष्ट्वान्महाविष्णोरन्तर्ज्योतिस्तु तत्स्थितः' । इति च ।

अन्तःसुखत्वादेः कारणमाह - **ब्रह्मणि भूत** इति ।। २४ ।।

### तात्पर्यम्

ब्रह्मणि भूतः । अन्यथा पुनर्ब्रह्म गच्छतीति विरोधाच्च । अन्तस्सुखादिकं च ब्रह्मदर्शनात् ।। २४ ।।

**लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।**
**छिन्नद्वैधाऽऽयतात्मानः सर्वभूतहिते रताः ।। २५ ।।**

### भाष्यम्

पापक्षयाच्चैतद् भवतीत्याह - **लभन्त** इति । क्षीणकल्मषा भूत्वा छिन्नद्वैधाऽऽयतात्मानः । द्वेधाभावो द्वैधं संशयो विपर्ययो वा तच्चोक्तम्-

'विपर्ययः संशयो वा यद् द्वैधं त्वकृतात्मनाम् ।
ज्ञानासिना तु तच्छित्त्वा मुक्तसङ्गः परं व्रजेत्' ।। इति ।

छिन्नद्वैधास्त एवाऽयतात्मानः छिन्नद्वैधा(ऽऽ)यतात्मानः । दीर्घमनसः सर्वज्ञा इत्यर्थः । तत एव छिन्नद्वैधाः । तच्चोक्तम्–

'क्षीणपापा महद् ज्ञात्वा जायन्ते गतसंशयाः' । इति ।

छिन्नद्वैधाः यतात्मान इति वा ।। २५ ।।

**कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।**
**अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ।। २६ ।।**

### भाष्यम्

सुलभं तेषां ब्रह्मेत्याह - **कामक्रोधेति** । अभितः सर्वतः ।। २६ ।।

स्पर्शान्कृत्वा वहिर्वाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ।। २७ ।।

यतेन्द्रियमनोवुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ।। २८ ।।

### भाष्यम्

ध्यानप्रकारमाह - स्पर्शानित्यादिना । बाह्यान् स्पर्शान् बहिष्कृत्वा । श्रोत्रादीनि योगेन नियम्येत्यर्थः । चक्षुः भ्रुवोरन्तरे कृत्वा भ्रुवोर्मध्यमवलोयन्नित्यर्थः ।

उक्तं च–

'नासाग्रे वा भ्रुवोर्मध्ये ज्ञानी चक्षुर्निधापयेत्' । इति ।
प्राणापानौ समौ कृत्वा कुम्भके स्थित्वेत्यर्थः ।। २७, २८ ।।

### तात्पर्यम्

'अमुक्तो मुक्तसादृश्यान्मुक्त एव हि तत्त्वदृक् ।
किमु मुक्तिगतस्तस्माज्ज्ञानमेवाधिकं नरे' ।। इति नारदीये ।। २७, २८ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभगवद्गीतातात्पर्यनिर्णये पञ्चमोऽध्यायः ।।

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ।। २९ ।।

।। ओं तत्सदिति श्रीमद्भगवद्गीतासु उपनिषत्सु व्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे कर्मसन्न्यासयोगो नाम पञ्चमोऽध्यायः ।।

भाष्यम्

ध्येयमाह - **भोक्तारमिति** ।। २९ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीभगवद्गीताभाष्ये पञ्चमोऽध्यायः ।।

*****

# षष्ठोऽध्यायः

### भाष्यम्

ज्ञानान्तरङ्गं समाधियोगमाहानेनाध्यायेन -

### तात्पर्यम्

ध्यानमत्रोच्यते ।

### श्री भगवानुवाच

अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः।। १ ।।

### भाष्यम्

विवक्षितं संन्यासमाह योगेन सह - अनाश्रित इति । चतुर्थाश्रमिणोऽप्यग्निः क्रिया चोक्ता 'दैवमेव' इत्यादौ ।

'अग्निर्ब्रह्म च तत्पूजा क्रिया न्यासाश्रमे स्मृता' । इति च । तस्मान्निरग्निरक्रियः संन्यासी योगी च न भवत्येव ।। १ ।।

### तात्पर्यम्

'स ब्रह्मनिष्ठस्तु यतिर्महात्मा शारीरमग्निं च मुखे जुहोति' । इत्यादेर्न यतेरप्यनग्नित्वम् । आत्मसमारोपणाच्च ।। १ ।।

यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।
न ह्यसंन्यस्तसङ्कल्पो योगी भवति कश्चन ।। २ ।।

### भाष्यम्

संन्यासोऽपि योगान्तर्भूत इत्याह– **यं संन्यासमिति** । कामसङ्कल्पाद्य-परित्यागे कथमुपायवान् स्यादित्याशयः ॥ २ ॥

### तात्पर्यम्

योगविशेष एव संन्यास इत्यर्थः ॥ २ ॥

**आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।**
**योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ३ ॥**

### भाष्यम्

कियत्कालं कर्म कर्तव्यमित्यत आह– **आरुरुक्षोरिति** । योगमारुरुक्षोः उपायसम्पूर्तिमिच्छोः । योगारूढस्य सम्पूर्णोपायस्य । अपरोक्षज्ञानिन इत्यर्थः । कारणं परमसुखकारणम् । अपरोक्षज्ञानिनोऽपि समाध्यादि-फलमुक्तम् । तस्य सर्वोपशमेन समाधिरेव कारणं प्राधान्येनेत्यर्थः । तथाऽपि यदा भोक्तव्योपरमस्तदैव सम्यगसम्प्रज्ञातसमाधिर्जायते । अन्यदा तु भगवच्चरितादौ स्थितिः । तच्चोक्तम्-

**'ये त्वां पश्यन्ति भगवंस्त एव सुखिनः परम् ।**
**तेषामेव च सम्यक् तु समाधिर्जायते नृणाम् ।**
**भोक्तव्यकर्मण्यक्षीणे जपेन कथयाऽपि वा ।**
**वर्तयन्ति महात्मानस्त्वद्भक्तास्त्वत्परायणाः'** ॥ इति ॥ ३ ॥

### तात्पर्यम्

सम्पूर्णोपायो योगारूढः ।

'नानाजनस्य शुश्रूषा कर्मेति करवन्मितेः ।
योगार्थिना तु सा कार्या योगस्थेन हरौ स्थितिः ।
तेनापि स्वोत्तमानां तु कार्याऽन्यैरखिलेष्वपि ।
शक्तितः करणीयेति विशेषोऽसिद्धसिद्धयोः ।
प्राप्तोपायस्तु सिद्धः स्यात् प्रेप्सुः साधक उच्यते ।
तस्य प्राण्युपकारेण सन्तुष्टो भवतीश्वरः ।
सिद्धोपायेन विष्णोस्तु ध्यानव्याख्यार्चनादिकम् ।
कार्यं नान्यत् तस्य तेन तुष्टो भवति केशवः' ॥

इति प्रवृत्तवचनान्न विरोधः ।

'शमो मन्निष्ठता बुद्धेर्दम इन्द्रियनिग्रहः' । इति भागवते ॥ ३ ॥

यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।
सर्वसङ्कल्पसंन्यासी योगारूढस्तदोच्यते ॥ ४ ॥

## भाष्यम्

योगारूढलक्षणमाह - यदेति । सम्यगननुषङ्गस्तस्यैव भवति । उक्तं च -

'स्वतो दोषलयो दृष्ट्या त्वितरेषां प्रयत्नतः' । इति ॥ ४ ॥

## तात्पर्यम्

कथं नानुषज्यते ? सर्वसङ्कल्पसंन्यासी ।

'मयि सर्वणि कर्माणि' इत्युक्तत्वात् ।
'मदधीनमिदं ज्ञात्वा मत्संन्यासीति चोच्यते' । इति च ॥ ४ ॥

उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो वन्धुरात्मैव रिपुरात्मनः ॥ ५ ॥

वन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ।
अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥ ६ ॥

### भाष्यम्

स च योगारोहः प्रयत्नेन कर्तव्य इत्याह - **उद्धरेदित्यादिना** । कस्य बन्धुरात्मा इत्यत आह **बन्धुरात्मेति** । आत्मा मनः । आत्मनः जीवस्य । आत्मना मनसा । आत्मानं जीवम् । आत्मैव मनः । आत्मना बुद्ध्या, जीवेनैव वा । स हि बुद्ध्या विजयति । उक्तं च-

'मनः परं कारणमामनन्ति'

'मन एव मनुष्याणां कारणं वन्धमोक्षयोः' ।

'उद्धरेन्मनसा जीवं न जीवमवसादयेत् ।
जीवस्य बन्धुः शत्रुश्च मन एव न संशयः' ॥

'जीवेन बुद्ध्या हि यदा मनो जितं तदा बन्धुः शत्रुरन्यत्र चास्य ।
ततो जयेद् बुद्धिवलो नरस्तद् देवे च भक्त्या मधुकैटभारौ' ॥
इत्यादि ब्रह्मवैवर्ते ।

अनात्मनः अजितात्मनः पुरुषस्य । अजितमनस्कस्य । सदपि मनोऽनुपकारीत्यनात्मा । सन्नपि भृत्यो यस्य भृत्यपदे न वर्तते स ह्यभृत्यः । तस्याऽत्मा मन एव शत्रुवत् शत्रुत्वे वर्तते ॥ ५, ६ ॥

### तात्पर्यम्

'उद्धरेतैव संसाराज्जीवात्मानं परात्मना ।
विष्णुर्वन्धुः सतां नित्यं परात्मा ह्यसतामरिः ।
तत्प्रसादजया भक्तया जितो यस्य वशेत्विव ।
वर्तते तस्य मित्रं स तदन्यस्य च शत्रुवत्' ॥ इति च ।
'परमात्मा समाहितः' इति वाक्यशेषाच्च ॥ ५, ६ ॥

जितात्मनः प्रशान्तस्य परमात्मा समाहितः ।
शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥ ७ ॥

ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥ ८ ॥

### भाष्यम्

जितात्मनः फलमाह - **जितात्मन** इति । जितात्मा हि प्रशान्तो भवति । न तस्य मनः प्रायो विषयेषु गच्छति । तदा च परमात्मा सम्यक् हृद्याहितः सन्निहितो भवति । अपरोक्षज्ञानी स भवतीत्यर्थः । अपरोक्षज्ञानिनो लक्षणं स्पष्टयति - **शीतोष्णेत्यादिना** । शीतोष्णादिषु कूटस्थः । ज्ञानविज्ञानतृप्तात्मा विजितेन्द्रिय इति कूटस्थत्वे हेतुः । विज्ञानं विशेषज्ञानम् । अपरोक्षज्ञानं वा । तच्चोक्तम्-

'सामान्यैर्ये त्वविज्ञेया विशेषा मम गोचराः ।
देवादीनां तु तज्ज्ञानं विज्ञानमिति कीर्तितम्' ॥

'श्रवणान्मननाच्चैव यज्ज्ञानमुपजायते ।
तज्ज्ञानं दर्शनं विष्णोर्विज्ञानं शम्भुरब्रवीत्' ॥

'विमानं ज्ञानमङ्गादेर्विशिष्टं दर्शनं तथा' ॥ इत्यादि ॥
कूटस्थो निर्विकारः । कूटवत् स्थित इति व्युत्पत्तेः । कूटमाकाशः ।
'कूटं खं विदलं व्योम सन्धिकाराश उच्यते' । इत्यभिधानात् ।

योगी योगं कुर्वन् । युक्तो योगसम्पूर्णः । एवम्भूतो योगानुष्ठाता योगसम्पूर्ण उच्यत इत्यर्थः ॥ ७, ८ ॥

### तात्पर्यम्

'सर्वत्र विष्णोरुत्कर्षज्ञानं ज्ञानमितीर्यते ।
तद्विशेषपरिज्ञानं विज्ञानमिति गीयते' ।। इति च ।। ७,८ ।।

सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यवन्धुषु ।
साधुष्वपि च पापेषु समवुद्धिर्विशिष्यते ।। ९ ।।

### भाष्यम्

स एव च सर्वस्माद् विशिष्यते साधुपापादिषु समबुद्धिः । जीवचितः, परमात्मनः सर्वस्य तन्निमित्तत्वस्य च सर्वत्रैकरूप्येण । चिद्रूपा एव हि जीवाः । विशेषस्त्वन्तःकरणकृतः । सर्वेषां च साधुत्वादिकं सर्वमीश्वरकृतमेव स्वतो न किञ्चिदपि ।

उक्तं चैतत् सर्वम्–

'स्वतः सर्वेऽपि चिद्रूपाः सर्वदोषविवर्जिताः ।
जीवास्तेषां तु ये दोषास्त उपाधिकृता मताः ।
सर्वं चेश्वरतस्तेषां न किञ्चित् स्वत एव तु ।
समा एव ह्यतः सर्वे वैषम्यं भ्रान्तिसम्भवम् ।
एवं समा नृजीवास्तु विशेषो देवतादिषु ।
स्वाभाविकस्तु नियमाद्धरेरेव सदा(ना)तनः ।
असुरादेस्तथा दोषा नित्याः स्वाभाविका अपि ।
गुणदोषौ मानुषाणां नित्यौ स्वाभाविकौ मतौ ।
गुणैकमात्ररूपास्तु देवा एव सदा मताः' ।। इति ब्राह्मे ।

ननु साधुपापादीनां पूजासाम्यम् । तत्र दोषस्मृतेः–

'समानां विषमा पूजा विषमाणां समा तथा ।
क्रियते येन देवोऽपि स पदाद् भ्रश्यते पुमान्' ।। इति पाद्मे ।

'वित्तं वन्धुर्वयः कर्म विद्या चैव तु पञ्चमी ।
एतानि मान्यस्थानानि गरीयो (यद्यदुत्तरम्)' ह्युत्तरोत्तरम् ।। इति मानवे ।

'गुणानुसारिणीं पूजां समां दृष्टिं च यो नरः ।
सर्वभूतेषु कुरुते तस्य विष्णुः प्रसीदति ।
वैषम्यमुत्तमत्वं तु ददाति नरसश्चयात् ।
पूजाया विषमा दृष्टिः समा साम्यं विदुःखजम्' ।। इति ब्रह्मवैवर्ते ।

सुहृदादिषु शास्त्रोक्तपूजादिकृतिरन्यूनाधिका या साऽपि समता । तदप्याह–

'यथा सुहृत्सु कर्तव्यं पितृशत्रुसुतेषु च ।
तथा करोति पूजा(दिं)दि समबुद्धिः स उच्यते' ।। इति गारुडे ।

प्रत्युपकारनिरपेक्षयोपकारकृत् सुहृत् । क्लेशस्थानं निरूप्य यो रक्षां करोति (विदधाति) तन्मित्रम् । अरिर्वधादिकृत् । कर्तव्ये उपकारेऽपकारे च य उदास्ते स उदासीनः । कर्तव्यमुभयमपि यः करोति स मध्यस्थः । अवासितकृत् द्वेष्यः । आह चैतत्–

'द्वेष्योऽवासितकृत् कार्यमात्रकारी तु मध्यगः ।
प्रियकृत् प्रियो निरूप्यापि क्लेशं यः परिरक्षति ।
स मित्रमुपकारं तु अनपेक्ष्योपकारकृत् ।
यस्ततः स सुहृत् प्रोक्तः शत्रुश्चापि वधादिकृत्' ।। इति ।। ९ ।।

## तात्पर्यम्

'यस्य यत्र यथा वृत्तिर्विहिता वर्तनं तथा ।
ज्ञानं वाऽपि समत्वं तद्विषमत्वमतोऽन्यथा' ।। इति महाविष्णुपुराणे ।

'अनिमित्तस्नेहवांस्तु सुहृज्ज्ञात्वोपकारकृत् ।
मित्रं वधादिकृदरिर्द्वेष्यस्त्वप्रियमात्रकृत् ।

उदासीनः स्नेहवतोऽप्यस्नेही तत्कृतानुकृत् ।
मध्यस्थ इति विज्ञेयः सुहृदेषु विशिष्यते' ।।
इति नारदीये ।। ९-१९ ।।

योगी युञ्जीत सततमात्मानं रहसि स्थितः ।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ।। १० ।।

शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ।। ११ ।।

### भाष्यम्

समाधियोगप्रकारमाह– **योगी युञ्जीतेत्यादिना** । युञ्जीत समाधियोगयुक्तं कुर्यात् । आत्मानं मनः ।। १०, ११ ।।

तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ।। १२ ।।

समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।
सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ।। १३ ।।

प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।
मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ।। १४ ।।

### भाष्यम्

योगं समाधियोगं युञ्ज्यात् ।। १२-१४ ।।

युञ्जन्नेवं सदात्मानं योगी नियतमानसः ।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ।। १५ ।।

### भाष्यम्

निर्वाणपरमां शरीरत्यागोत्तरकालीनाम् ।। १५ ।।

नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।
न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ।। १६ ।।

### भाष्यम्

अनशनादिनिषेधोऽशक्तस्य । उक्तं हि–

'निद्राशनभयश्वासचेष्टात(न्द्रा)न्द्र्यादिवर्जनम् ।
कृत्वा निमीलिताक्षस्तु शक्तो ध्यायन् प्रसिद्ध्यति (प्रसीदति)'
इति नारदीये ।। १६ ।।

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ।। १७ ।।

### भाष्यम्

युक्ताहारविहारस्य सोपायाहारादेः । यावता श्रमाद्यभावो भवति तावदाहारादेः इत्यर्थः ।। १७ ।।

यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।
निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ।। १८ ।।

### भाष्यम्

आत्मनि भगवति ।। १८ ।।

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ।। १९ ।।

भाष्यम्

आत्मनः योगं भगवद्विषयं योगम् ।। १९ ।।

यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ।। २० ।।

भाष्यम्

आत्मना मनसा । आत्मनि देहे । आत्मानं भगवन्तं पश्यन् ।।२०।।

तात्पर्यम्

आत्मानं विष्णुम् । आत्मना तत्प्रसादेन (तत्प्रसादादेव) ।। २० ।।

सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ।। २१ ।।

भाष्यम्

तत्त्वतः भगवद्रूपात् ।। २१ ।।

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन्स्थितो न दुःखेन गुरुणापि विचाल्यते।। २२ ।।

तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ।। २३ ।।

भाष्यम्

दुःखसंयोगो येन वियुज्यते स दुःखसंयोगवियोगः । न केवलमुत्पन्नं

दुःखं नाशयति, उत्पत्तिमेव निवारयतीति दर्शयति संयोगशब्देन । निश्चयेन योक्तव्यः योक्तव्य एव तद्भूषुणेत्यर्थः ।। २३ ।।

**संङ्कल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः ।**
**मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ।। २४ ।।**

### भाष्यम्

सर्वान् सर्वविषयान् । अशेषतः, एकविषयोऽपि कामः स्वल्पः कादाचित्कोऽपि न कर्तव्य इत्यर्थः । मनसैव नियन्तुं शक्यते नान्येनेत्येवशब्दः ।। २४ ।।

**शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।**
**आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत्।।२५।।**

### भाष्यम्

बुद्धेः क(का)रणत्वं मनोनिग्रहे आत्मरमणे च ।। २५ ।।

**यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।**
**ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ।। २६ ।।**

**प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।**
**उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ।। २७ ।।**

### भाष्यम्

यतो यतो यत्र यत्र । 'यतो यतो धावति' इत्यादिप्रयोगात् । आत्मन्येव वशं नयेत् आत्मविषय एव वशीकुर्यादित्यर्थः ।। २६,२७ ।।

### तात्पर्यम्

ब्रह्मणि भूतम् ।। २७ ।।

**युञ्जन् एवं सदाऽऽत्मानं योगी विगतकल्मषः ।**
**सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ।। २८ ।।**

### भाष्यम्

पूर्वश्लोकोक्तं प्रपञ्चयति– एवं युञ्जन्निति ।। २८ ।।

**सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।**
**ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ।। २९ ।।**

### भाष्यम्

ध्येयमाह - **सर्वभूतस्थमिति** । सर्वभूतस्थमात्मानं परमेश्वरम् । सर्वभूतानि चाऽत्मनि परमेश्वरे । तं च परमेश्वरं ब्रह्मतृणादावैश्वर्यादिना साम्येन पश्यति । तच्चोक्तम्-

'आत्मानं सर्वभूतेषु भगवन्तमवस्थितम् ।
अपश्यत् सर्वभूतानि भगवत्यपि चाऽत्मनि' ।। इति ।

'समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्' । इति च ।। २९ ।।

### तात्पर्यम्

सर्वभूतेषु स्थितं परमात्मानम् ।। २९ ।।

**यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।**
**तस्याहं न प्रणश्यामि स च मे न प्रणश्यति।। ३० ।।**

### भाष्यम्

फलमाह - **यो मामिति** । तस्याहं न प्रणश्यामीति सर्वदा योगक्षेमवहः स्यामित्यर्थः । स च मे न प्रणश्यति सर्वदा मद्भक्तो भवति । सत्यपि स्वामिन्यरक्षत्यनाथः, एवं भृत्येऽप्यभजत्यभृत्य इति हि प्रसिद्धिः । उक्तं च-

'सर्वदा सर्वभूतेषु समं मां यः प्रपश्यति ।
अचला तस्य भक्तिः स्याद् योगक्षेमवहोऽप्यहम्' । इति गारुडे ।। ३० ।।

**सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।**
**सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ।। ३१ ।।**

### भाष्यम्

एतदेव स्पष्टयति - **सर्वभूतस्थितमिति** । एकत्वमास्थितः सर्वत्रैक एवेश्वर इति स्थितः । सर्वप्रकारेण वर्तमानोऽपि मय्येव वर्तते । एवमपरोक्षं पश्यतो ज्ञानफलं नियतमित्यर्थः । तथाऽपि प्रायो नाधर्मं करोति । कुर्वतस्तु महच्चेद् दुःखसूचकं भवतीत्युक्तं पुरस्तात् । आह च–

'कदाचिदपि नाधर्मे बुद्धिर्विष्णुदृशां भवेत् ।
प्रमादात्तु कृतं त्वल्पं पापं भस्मीभविष्यति ।
आदिराजैस्तथा देवैर्ऋषिभिः क्रियते कियत् ।
वाहुल्यात् कर्मणस्तेषां दुःखसूचकमेव तत्' ।। इति ।। ३१ ।।

### तात्पर्यम्

सर्वत्र विष्णुरेक इति स्थितः ।। ३१ ।।

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं स योगी परमो मतः।। ३२ ।।

### भाष्यम्

साम्यं प्रकारान्तरेण व्याचष्टे– आत्मौपम्येनेति ।। ३२ ।।

### तात्पर्यम्

अतो विष्ण्वनुवर्तिषु स्ववत् स्नेहः कर्तव्यः ।। ३२ ।।

### अर्जुन उवाच

योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ।
एतस्याहं न पश्यामि चञ्चलत्वात्स्थितिं स्थिराम् ।।३३।।

चञ्चलं हि मनः कृष्ण प्रमाथि वलवद्दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ।। ३४ ।।

### श्रीभगवानुवाच

असंशयं महावाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ।। ३५ ।।

### भाष्यम्

एतस्य योगस्य स्थिरां स्थितिं न पश्यामि मनसश्चञ्चलत्वात् । उक्तं च–

'मनसश्चञ्चलत्वाद्धि स्थितिर्योगस्य वै स्थिरा ।
विनाऽभ्यासान्न शक्या तु वैराग्याद्वा न संशयः' ।। इति व्यासयोगे ।
।। ३३, ३५ ।।

**असंयतात्मना योगो दुष्प्राप इति मे मतिः ।**
**वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥ ३६ ॥**

### भाष्यम्

न च कदाचित् स्वयमेव मनो नियम्यते–

'शुभेच्छारहितानां च द्वेषिणां च रमापतौ ।
नास्तिकानां च वै पुंसां सदा मुक्तिर्न जायते' ॥

इति निषेधाद् ब्राह्मे ॥ ३६ ॥

### अर्जुन उवाच

**अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।**
**अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ ३७ ॥**

### भाष्यम्

अयतिः अप्रयत्नः ॥ ३७ ॥

### तात्पर्यम्

अयतिः अप्रयत्नः । "प्रयत्नाद्यतमानस्तु" इति वाक्यशेषात् । योगशब्द-स्योपायार्थत्वेऽप्यत्रोपायविशेष एव ध्यानयोगादिर्विवक्षित इति न विरोधः ॥ ३७ ॥

**कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।**
**अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥ ३८ ॥**

**एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः ।**
**त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते ॥ ३९ ॥**

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं स योगी परमो मतः।। ३२ ।।

भाष्यम्

साम्यं प्रकारान्तरेण व्याचष्टे– आत्मौपम्येनेति ।। ३२ ।।

तात्पर्यम्

अतो विष्ण्वनुवर्तिषु स्ववत् स्नेहः कर्तव्यः ।। ३२ ।।

अर्जुन उवाच

योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ।
एतस्याहं न पश्यामि चञ्चलत्वात्स्थितिं स्थिराम् ।।३३।।

चञ्चलं हि मनः कृष्ण प्रमाथि वलवद्दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ।। ३४ ।।

श्रीभगवानुवाच

असंशयं महावाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ।। ३५ ।।

भाष्यम्

एतस्य योगस्य स्थिरां स्थितिं न पश्यामि मनसश्चञ्चलत्वात् ।
उक्तं च–

'मनसश्चञ्चलत्वाद्धि स्थितिर्योगस्य वै स्थिरा ।
विनाऽभ्यासान्न शक्या तु वैराग्याद्वा न संशयः' ।। इति व्यासयोगे ।
।। ३३, ३५ ।।

असंयतात्मना योगो दुष्प्राप इति मे मतिः ।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ।। ३६ ।।

### भाष्यम्

न च कदाचित् स्वयमेव मनो नियम्यते–

'शुभेच्छारहितानां च द्वेषिणां च रमापतौ ।
नास्तिकानां च वै पुंसां सदा मुक्तिर्न जायते' ।।
इति निषेधाद् ब्राह्मे ।। ३६ ।।

### अर्जुन उवाच

अयतिः श्रद्धयोपेतो योगाचलितमानसः ।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ।। ३७ ।।

### भाष्यम्

अयतिः अप्रयत्नः ।। ३७ ।।

### तात्पर्यम्

अयतिः अप्रयत्नः । ''प्रयत्नाद्यतमानस्तु'' इति वाक्यशेषात् । योगशब्द-स्योपायार्थत्वेऽप्यत्रोपायविशेष एव ध्यानयोगादिर्विवक्षित इति न विरोधः ।। ३७ ।।

कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।
अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ।। ३८ ।।

एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः ।
त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते ।। ३९ ।।

### श्रीभगवानुवाच

पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।
न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ।। ४० ।।

प्राप्य पुण्यकृतान् लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ।। ४१ ।।

अथवा योगिनामेव कुले भवति धीमताम् ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ।। ४२ ।।

तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ।। ४३ ।।

पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ।। ४४ ।।

### भाष्यम्

योगस्य जिज्ञासुरपि, ज्ञातव्यो मया योग इति यस्यातीवेच्छा सोऽपि शब्दब्रह्मातिवर्तते, परं ब्रह्म प्राप्नोतीत्यर्थः ।। ४४ ।।

### तात्पर्यम्

'मोक्षोपायस्य जिज्ञासुरपि केवलपाठकात् ।
विशिष्टः किमु तद्विद्वान् किं पुनर्यस्तदास्थितः' ।। इति परमयोगे ।। ४४ ।।

प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ।। ४५ ।।

### भाष्यम्

नैकजन्मनीत्याह– **प्रयत्नादिति** । जिज्ञासुर्ज्ञात्वा प्रयत्नं करोति । एवमनेकजन्मभिः संसिद्धोऽपरोक्षज्ञानी भूत्वा परां गतिं याति । आह च–

'अतीव श्रद्धया युक्तो जिज्ञासुर्विष्णुतत्परः ।
ज्ञात्वा ध्यात्वाऽथ दृष्ट्वा च जन्मभिर्बहुभिः पुमान् ।
विशेन्नारायणं देवं नान्यथा तु कथञ्चन' ।। इति नारदीये ।। ४५ ।।

**तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।**
**कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ।। ४६ ।।**

**योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।**
**श्रद्धावान् भजते यो मां स मे युक्तमो मतः।। ४७ ।।**

।। ओं तत्सदिति श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे समाधियोगप्रपश्चनं नाम षष्ठोऽध्यायः ।।

### भाष्यम्

ज्ञानिभ्यः योगज्ञानिभ्यः । तपस्विभ्यः कृच्छ्रादिचारिभ्यः । उक्तं च–

'कृच्छ्रादेरपि यज्ञादेर्ध्यानयोगो विशिष्यते ।
तत्रापि शेषश्रीब्रह्मशिवादिध्यानतो हरेः ।
ध्यानं कोटिगुणं प्रोक्तमधिकं वा मुमुक्षुणाम्' ।। इति गारुडे ।

'अज्ञात्वा ध्यायिनो ध्यानात् ज्ञानमेव विशिष्यते ।
ज्ञात्वा ध्यानं ज्ञानमात्राद् ध्यानादपि तु दर्शनम् ।
दर्शनाच्चैव भक्तेश्च न किञ्चित् साधनाधिकम्' ।। इति नारदीये ।
।। ४६,४७ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीभगवद्गीताभाष्ये षष्ठोऽध्यायः ।।

## तात्पर्यम्

'तपसश्चैव यज्ञादेर्ध्यानमेव विशिष्यते ।
अज्ञानिध्यानतो ज्ञानं ध्यानं सज्ज्ञानमप्यतः ।
तत्रापि मय्यभक्तस्य नान्यद्ध्यानं प्रयोजकम् ।
अन्यसामान्यविद् यो मे यश्चान्यं नेति पश्यति ।
अवरत्वदृगुदासीनो विद्वेषी चेत्यभक्तयः ।
मद्भक्तोऽपि हि कार्यार्थं यो ध्यायेदन्यदेवताः ।
परिवारतामृते तस्मात् केवलं मदुपासकः ।
वरोऽन्यान् मदधीनांश्च सर्वान् जानन् विशुद्धधीः' ।।
इति च दत्तात्रेयवचनम् ।। ४६,४७ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभगवद्गीतातात्पर्यनिर्णये षष्ठोऽध्यायः ।।

*****

# सप्तमोऽध्यायः

### भाष्यम्

साधनं प्राधान्येनोक्तमतीतैरध्यायैः । उत्तरैस्तु षड्भिर्भगवन्माहात्म्यं प्राधान्येनाऽह–

### तात्पर्यम्

भगवन्महिमा विशेषत उच्यते ।

### श्रीभगवानुवाच

**मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः ।**
**असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥ १ ॥**

### भाष्यम्

आसक्तमनाः अतीव स्नेहयुक्तमनाः । मदाश्रयः भगवानेव मया सर्वं कारयति; स एव च मे शरणम् ; तस्मिन्नेव चाहं स्थित इति स्थितः । असंशयं समग्रमिति क्रियाविशेषणम् ॥ १ ॥

**ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।**
**यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥ २ ॥**

### भाष्यम्

इदं मद्विषयं ज्ञानम् । विज्ञानं विशेषज्ञानम् ॥ २ ॥

**मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।**
**यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ३ ॥**

### भाष्यम्

दौर्लभ्यं ज्ञानस्याऽह - मनुष्याणामिति ।। ३ ।।

### तात्पर्यम्

'अनन्तानां तु जीवानां यतन्ते केचिदेव तु ।
मुक्त्यै तेषु च मुच्यन्ते केचिन्मुक्तेषु च स्फुटम् ।
केचनैव हरिं सम्यग् ब्रह्मरुद्रादयो विदुः ।
अन्येषां यावता मुक्तिस्तावत् ज्ञानं हरौ परम्' ।। इति पाद्मे ।

'मुक्तानामपि सिद्धानां नारायणपरायणः ।
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामते' ।। इति भागवते ।

'सर्वे मुक्ता हरौ भक्तास्तेषु ब्रह्मैव मुख्यतः ।
विष्णोः परमभक्तस्तु तस्मात् जीवघनो मतः' ।। इति सत्तत्त्वे ।। ३ ।।

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ।। ४ ।।

### भाष्यम्

प्रतिज्ञातं ज्ञानमाह– भूमिरित्यदिना । महतोऽहङ्कार एवान्तर्भावः ।
।। ४ ।।

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महावाहो ययेदं धार्यते जगत् ।। ५ ।।

एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।। ६ ।।

## भाष्यम्

अपरा अनुत्तमा वक्ष्यमाणामपेक्ष्य । जीवभूता श्रीः । जीवानां प्राणधारिणी चिद्रूपभूता सर्वदा सती । 'एतन्महद्भूतम्' इति श्रुतेः । जगाद च-

'प्रकृती द्वे तु देवस्य जडा चैवाजडा तथा ।
अव्यक्ताख्या जडा सा च सृष्ट्या भिन्नाऽष्टधा पुनः ।
महान् बुद्धिर्मनश्चैव पञ्चभूतानि चेति हि ।
अप(व)रा सा जडा श्रीश्च परेयं धार्यते तया ।
चिद्रूपा सा त्वनन्ता च अनादिनिधना परा ।
यत्समं तु प्रियं किञ्चिन्नास्ति विष्णोर्महात्मनः ।
नारायणस्य महिषी माता सा ब्रह्मणोऽपि हि ।
आभ्यामिदं जगत् सर्वं हरिः सृजति भूतराट्' ।। इति नारदीये ।

न केवलं ते जगत्प्रकृती मद्वशे इत्येतावन्मदैश्वर्यमित्याह– **अहमिति** । प्रभवादेः । सत्ताप्रतीत्यादिकारणत्वात् तद्भोक्तृत्वाच्च प्रभव इत्यादि । तथा च श्रुतिः–

'सर्वमकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः' इति । आह च–

'स्रष्टा पाता च संहर्ता नियन्ता च प्रकाशिता ।
यतः सर्वस्य तेनाहं सर्वोऽसीत्यृषिभिः स्तुतः ।
सुखरूपस्य भोक्तृत्वान्न तु सर्वस्वरूपतः ।
आगमिष्यत् सुखं चापि तस्यास्त्येव सदाऽपि तु ।
तथाऽप्यचिन्त्यशक्तित्वाज्जातं सुखमतीव च' ।। इति नारदीये ।।५,६।।

## तात्पर्यम्

'अचेतना चेतनेति द्विविधा प्रकृतिर्मता ।
त्रिगुणाऽचेतना तत्र चेतना श्रीर्हरिप्रिया ।

ते उभे विष्णुवशगे जगतः कारणे मते ।
पिता विष्णुः स जगतो माता श्रीर्या त्वचेतना ।
उपादानं तु जगतः सैव विष्णुवलेरिता' ।। इति ।। ४-६ ।।

**मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ।**
**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।। ७ ।।**

### भाष्यम्

अहमेव परतरः । मत्तोऽन्यत् परतरं न किञ्चिदपि । इदं ज्ञानम् ।। ७ ।।

### तात्पर्यम्

मत्तोऽन्यत् परतरं नास्ति । परतरस्त्वहमेवेत्यर्थः । अन्यथाऽन्यदिति व्यर्थम् ।

'अवरा दुःखसम्वन्धाज्जीवा एव प्रकीर्तिताः ।
नित्यनिर्दुःखरूपत्वात् परा श्रीरेकलैव तु ।
दुःखासम्पीडितत्वात्तु मध्यमो वायुरुच्यते ।
अनन्याधीनरूपत्वादसमाधिकसौख्यतः ।
तत्तन्त्रत्वाच्च सर्वस्य स विष्णुः परतमो मतः ।
अभावादन्तराऽन्यस्य त्विहैकार्थौ तरप्तमौ ।
यस्याः सम्वन्धयोग्यत्वाज्जीवा अप्यवरा मताः ।
तस्या जडायाः प्रकृतेरवरत्वे क संशयः ।
अथावरतरा ये तु विमुखाश्चेतना हरेः ।
नित्यदुःखैकयोग्यत्वान्न ह्येतत् स्यादचेतने ।
अतः परत(रं)मं विष्णुं यो वेत्ति स विमुच्यते ।
मुक्तस्तु स्यात् पराभासः सुनित्यसुखभोजनात् ।
तत्रापि तारतम्यं स्यात् तेषु ब्रह्माऽधिको मतः ।

विष्णोराधिक्यसंवित्तिः सर्वस्माज्ज्ञानमुच्यते ।
एवं विविच्य तज्ज्ञानं विज्ञानमिति कीर्तितम् ।
एतच्च तारतम्येन वर्तते केशवादिषु ।
मुख्यविज्ञान्यतो विष्णुः किञ्चिद्विज्ञानिनोऽपरे ।। ७ ।।

रसोऽहमप्सु कौन्तेय प्रभास्मि शशिसूर्ययोः ।
प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ।। ८ ।।

पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ।। ९ ।।

वीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ।
वुद्धिर्वुद्धिमतामस्मि तेजस्तेजस्विनामहम् ।। १० ।।

वलं वलवतां (चाहं) अस्मि कामरागविवर्जितम् ।
धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ।। ११ ।।

## भाष्यम्

रसोऽहमित्यादिविज्ञानम् । अबादयोऽपि तत एव । तथाऽपि रसादिस्वभावानां रसानां (साराणां) च स्वभावत्वे सारत्वे च विशेषतोऽपि स एव नियामकः । नत्वबादिनियमानुबद्धो रसादिस्तत्सारत्वादिश्चेति दर्शयति 'अप्सु रसः' इत्यादिविशेषशब्दैः । भोगश्च विशेषतो रसादेरिति च । उपासनार्थं च । उक्तं गीताकल्पे–

'रसादीनां रसादित्वे स्वभावत्वे तथैव च ।
सारत्वे सर्वधर्मेषु विशेषेणापि कारणम् ।
सारभोक्ता च सर्वत्र यतोऽतो जगदीश्वरः ।

रसादिमानिनां देहे स सर्वत्र व्यवस्थितः ।
अवादयः पार्षदा एव ध्येयः स ज्ञानिनां हरिः ।
रसादिसम्पत्त्याऽन्येषां वासुदेवो जगत्पतिः' ।। इति ।

'स्वभावो जीव एव च'
'सर्वस्वभावो नियतस्तेनैव किमतः परम्'
'न तदस्ति विना यत् स्यान्मया भूतं चराचरम्' । इति च ।
'धर्माविरुद्धः' 'कामरागविवर्जितम्'

इत्याद्युपासनार्थम् । उक्तं च गीताकल्पे–
'धर्माविरुद्धः कामोऽसावुपास्यः काममिच्छता ।
विहीने कामरागादेर्वले च वलमिच्छता ।
ध्यातस्तत्र त्वनिच्छद्भिर्ज्ञानमेव ददाति सः' ।। इत्यादि ।

'पुण्यो गन्धः' इति भोगापेक्षया च ।

तथाहि श्रुतिः– 'पुण्यमेवामुं गच्छति' 'ऋतं पिबन्तौ सुकृतस्य लोके' इत्यादिका । ऋतं च पुण्यम्- 'ऋतं सत्यं तथा धर्मः सुकृतं चाभिधीयते' इत्यभिधानात् । 'ऋतं तु मानसो धर्मः सत्यं स्यात् संम्प्रयोगगः' इति च । न च 'अनश्नन्नन्यो अभिचाकशीति' 'अन्यो निरन्नोऽपि बलेन भूयान्' इत्यादिविरोधः । स्थूलानशनोक्तेः । आह च सूक्ष्माशनम्- 'प्रविविक्ताहारतर इवैष भवत्यस्माच्छारीरादात्मनः' इति । न चात्र जीव उच्यते । 'शारीरादात्मनः' इति भेदाभिधानात् । स्वप्नादिश्च शारीर एव– 'शारीरस्तु त्रिधा भिन्नो जाग्रदादिष्ववस्थितेः' इति वचनाद् गारुडे । 'अस्मात्' इतीश्वरव्यावृत्त्यर्थम्–

'शारीरौ तावुभौ ज्ञेयौ जीवश्चेश्वरसंज्ञितः ।
अनादिवन्धनस्त्वेको नित्यमुक्तस्तथाऽपरः' ।। इति वचनान्नारदीये ।

भेदश्रुतेश्च । सति गत्यन्तरे पुरुषभेद एव कल्प्यो नत्ववस्थाभेदः । आह च–

'प्रविविक्तभुग् यतो ह्यस्माच्छारीरात् पुरुषोत्तमः ।
अतोऽभोक्ता च भोक्ता च स्थूलाभोगात् स एव तु' ।। इति गीताकल्पे ।
।। ८-११ ।।

## तात्पर्यम्

सोऽप्सु स्थित्वा रसयति रसनामा ततः स्मृतः ।
सूर्यचन्द्रादिषु स्थित्वा प्रभानामा प्रभासनात् ।
वेदस्थः प्रणवाख्योऽसावात्मानं यत् प्रणौत्यतः ।
खे स्थितः शव्दनामाऽसौ यच्छव्दयति केशवः ।। ८ ।।

पुण्यापुण्यं गन्धयति स्वयं पुण्यो धरास्थितः ।
तेजयत्यग्निसंस्थः (स) सन् भूतस्थो जीवनप्रदः ।
तपस्विसंस्थस्तपति ........ ........... ।। ९ ।।

.................. व्यञ्जनाद् वीजसंज्ञितः ।
वोधनाद् वुद्धिनामाऽसौ वुद्धिमत्सु व्यवस्थितः ।। १० ।।

नित्यपूर्णवलत्वात्तु वलकामविवर्जितः ।
अरा(जस)गजवलश्चैव स्थानेभ्योऽन्येष्वयोजनात् ।
एतादृशवलात्माऽसौ वलिनां वलदः स्वयम् ।
वेति पूर्णत्ववाची स्यात् तद्रतेर्वलमुच्यते ।
प्रायो हि कामिता अर्था धर्मं हन्युर्हरिः पुनः ।
न धर्महानिकृत् किन्तु कामितो धर्मवृद्धिकृत् ।
धर्माविरुद्धकामोऽतो विष्णुर्भूतेषु संस्थितः ।
एवं स सर्वतश्चान्यः स्वतन्त्रश्चैव सर्वगः ।
व्यवस्थयैव सर्वेषां सर्वदा सर्वदः प्रभुः ।। ११ ।।

ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।
मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ।। १२ ।।

### भाष्यम्

नत्वहं तेष्विति तदनाधारत्वमुच्यते । उक्तं च-

'तदाश्रितं जगत् सर्वं नासौ कुत्रचिदाश्रितः' । इति गीताकल्पे ।। १२ ।।

### तात्पर्यम्

ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।
तत एव नचान्यस्मात् तदायत्तमिदं न सः ।।
अन्यायत्तः ........................ ।। १२ ।।

त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ।
मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ।। १३ ।।

### भाष्यम्

तर्हि कथमेवं न ज्ञायसे इत्यत आह - त्रिभिरिति । तादात्म्यार्थे मयट् । तच्चोक्तम्-

'तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधा' । इति ।

नहि गुणकार्यभूता माया । 'गुणमयी' इति च वक्ष्यति । सिद्धं च कार्यस्यापि तादात्म्यम्–

'तादात्म्यं कार्यधर्मादेः संयोगो भिन्नवस्तुनोः' । इति व्यासयोगे ।

भावैः पदार्थैः । सर्वे भावा दृश्यमाना गुणमया एत इति दर्शयति-

एभिरिति । ज्ञानिव्यावृत्त्यर्थम्- इदमिति । गुणमयदेहादिकं दृष्ट्वेश्वरदेहोऽपि तादृश इति मायामोहित इत्यर्थः । जगाद च व्यासयोगे–

**'गौणान् ब्रह्मादिदेहादीन् दृष्ट्वा विष्णोरपीदृशः ।**
**देहादिरिति मन्वानो मोहितोऽज्ञो जनो भृशम्' ।। इति ।**

एभ्यः गुणमयेभ्यः । 'गुणेभ्यः परम्' इति वक्ष्यमाणत्वात् । 'केवलो निर्गुणश्च' इत्यादिश्रुतिभ्यश्च । 'त्रैगुण्यवर्जितम्' इति चोक्तम् ।। १३ ।।

**दैवी ह्येषा गुणमयी मम माया दुरत्यया ।**
**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ।। १४ ।।**

### भाष्यम्

कथमनादिकाले मोहानत्ययो बहूनामित्यत आह- **दैवीति** । अयमाशयः - माया ह्येषा मोहिका । सा च सृष्ट्यादिक्रीडादि- मद्देवसम्बन्धित्वा- दतिशक्तेर्दुरत्यया । तथाहि देवशब्दार्थं पठन्ति–

**'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु'**

इति । कथं दैवी ? मदीयत्वात् । अहं हि देव इति । अब्रवीच्च–

**'श्रीर्भूर्दुर्गेति या भिन्ना महामाया तु वैष्णवी ।**
**तच्छक्त्यनन्तांशहीनाऽथापि तस्याऽश्रयात् प्रभोः ।**
**अनन्तब्रह्मरुद्रादेर्नास्याः शक्तिः कलाऽपि हि ।**
**तेषां दुरत्ययाऽप्येषा विना विष्णुप्रसादतः' ।। इति व्यासयोगे ।**

तर्हि न कथञ्चिदत्येतुं शक्यत इत्यत आह– **मामेवेति** । अन्यत् सर्वं परित्यज्य मामेव ये प्रपद्यन्ते । गुर्वादिवन्दनं च मय्येव समर्पयन्ति । स एव च तत्र स्थित्वा गुर्वादिर्भवतीत्यादि पश्यन्ति । आह च नारदीये-

'मत्सम्पत्त्या तु गुर्वादीन् भजन्ते मध्यमा नराः ।
मदुपाधितया तांश्च सर्वभूतानि चोत्तमाः ।।' इति ।
'आचार्यचैत्यवपुषा स्वग(तं)तिं व्यनक्ति' । इति च ।। १४ ।।

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।
माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ।। १५ ।।

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ।। १६ ।।

### भाष्यम्

तर्हि किमिति सर्वेऽपि नात्यायन्नित्यत आह– **न मामिति** । दुष्कृतित्वान्मूढाः । अत एव नराधमाः । अपहृतज्ञानत्वाच्च मूढाः । अत एवाऽऽसुरं भावमाश्रिताः । स च वक्ष्यते– 'प्रवृत्तिं च निवृत्तिं च' इत्यादिना । अपहारोऽभिभवः । उक्तं चैतद् व्यासयोगे–

'ज्ञानं स्वभावो जीवानां मायया ह्यभिभूयते' इति ।

असुषु रता असुराः । तच्चोक्तं नारदीये–

'ज्ञानप्रधाना देवास्तु असुरास्तु रता असौ' । इति ।। १५, १६ ।।

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः।। १७ ।।

उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ।।१८।।

भाष्यम्

एकस्मिन्नेव भक्तिरित्येकभक्तिः । तच्चोक्तं गारुडे–

'मय्येव भक्तिर्नान्यत्र एकभक्तिः स उच्यते' । इति ।। १७, १८ ।।

**वहूनां जन्मनामन्ते ज्ञानावान्मां प्रपद्यते ।**
**वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ।। १९ ।।**

भाष्यम्

बहूनां जन्मनामन्ते ज्ञानवान् भवति । तच्चोक्तं ब्राह्मे–

'जन्मभिर्वहुभिर्ज्ञात्वा ततो मां प्रतिपद्यते' । इति ।। १९ ।।

तात्पर्यम्

....... अचेतनया तन्मेयत्वात्तु मायया ।
लक्ष्म्या वशगया लोको विष्णुनैव विमोहितः ।
ये तु विष्णुं प्रपद्यन्ते ते मायां (तु) तां तरन्ति हि ।
लक्ष्मीः सा जडमायाया देवता ते उभे अपि ।
विष्णोर्वशे ततोऽनन्यभक्त्या तं शरणं व्रजेत् ।
यादृशी तत्र भक्तिः स्यात् तादृश्यन्यत्र नैव चेत् ।
अनन्यभक्तिः सा ज्ञेया विष्णावेव तु सा भवेत् ।
अन्येषु वैष्णवत्वेन लक्ष्मीब्रह्महरादिषु ।
कुर्याद् भक्तिं नान्यथा तु तद्वशा एव ते यतः ।
एवं जानंस्तमाप्नोति नान्यथा तु कथञ्चन ।
पूर्णं वस्तु यतो ह्येको वासुदेवो नचापरः ।
एवंविद् दुर्लभो लोके यत् सर्वे मिश्रयाजिनः ।। १३-१९ ।।

कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।
तं तं नियममास्थाय प्रकृत्या नियताः स्वया।। २० ।।

### भाष्यम्

प्रकृत्या स्वभावेन

'स्वभावः प्रकृतिश्चैव संस्कारो वासनेति च' । इत्यभिधानात् ।। २० ।।

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ।। २१ ।।

स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान्मयैव विहितान्हि तान्।। २२ ।।

अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।
देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि ।। २३ ।।

### भाष्यम्

यां यां ब्रह्मादिरूपां तनुम् । उक्तं च नारदीये-

'अन्तो ब्रह्मादिभक्तानां मद्भक्तानामनन्तता' । इति ।
'मुक्तश्च कां गतिं गच्छेन्मोक्षश्चैव किमात्मकः' ।

इत्यादेः परिहारसन्दर्भाच्च मोक्षधर्मेषु ।

'अवतारे महाविष्णोर्भक्तः कुत्र च मुच्यते' । इत्यादेश्च ब्रह्मवैवर्ते ।।
।। २१-२३ ।।

## तात्पर्यम्

....... ........ यत् सर्वे मिश्रयाजिनः ।।
'विष्णुं तत् परमज्ञात्वा रमाब्रह्महरादिकान् ।
यजन्नपि तमो घोरं नित्युदुःखं प्रयाति हि ।
अज्ञानां तु कुले जातो यावद् विष्णोः समर्चनम् ।
विष्णुतत्त्वं च जानीयात् तावत् सेवा पृथक् कृता ।
विद्यायैहिकभोगाय यदि बुद्ध्वा पुनर्न तु ।
परिवारतामृते कुर्यादन्यदेवार्चनं क्वचित् ।
अजानता कृतं त्यक्तं न दोषाय भविष्यति ।
जन्मादिप्रदमेव स्यादत्यागे पुनरेव तु ।
क्षिप्रं च ज्ञापयत्येव भगवान् स्वयमेव तु ।
यदि जन्मान्तरे स्वीयो निमित्तीकृत्य कश्चन' ।। इत्यादि च ।

'मत्त एवेति तान् विद्धि' इत्युपसंहाराच्च तत्तत्कारणत्वात् तत्तन्नामेत्यवसीयते । ''मयि सर्वमिदं प्रोतम्'' इति भेदेनैवोपक्रमाच्च । आप्नोति विष्णुमित्येवाऽत्मशब्दो ज्ञानिनि । 'यच्चाऽप्नोति यदादत्ते' इत्यादेः । 'आस्थितः स हि' 'मां प्रपद्यते' इत्यादिवाक्यशेषाच्च । बहूनां जन्मनामन्ते ज्ञानवान् भवति । ततो मां प्रपद्यते । वासुदेवः सर्वमिति पूर्णमिति जानन् । 'प्रपद्यन्तेऽन्यदेवताः' इत्यादिवाक्यशेषे भेददर्शनाच्च । 'देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि' इति च ।। २०-२२ ।।

'ज्ञात्वा परत्वं विष्णोस्तु पृथग् देवान् यजन्नरः ।
याति देवांस्तदज्ञात्वा तम एव प्रपद्यते ।
तथाऽपि यावदन्यैस्तु साम्यं हीनत्वमेकताम् ।
न निश्चिन्वन्ति जायन्ते संसारे ते पुनः पुनः' ।। इति च ।। २३ ।।

**अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।**
**परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ २४ ॥**

### भाष्यम्

को विशेषस्तवान्येभ्य इत्यत आह– **अव्यक्तमिति** । कार्यदेहादि-वर्जितम् । तद्वानिव प्रतीयस इत्यत आह– **व्यक्तिमापन्नमिति** । कार्यदेहाद्यापन्नम् । तच्चोक्तम्– 'सदसतः परम्' 'न तस्य कार्यम्' 'अपाणिपादः' 'आनन्ददेहं पुरुषं मन्यन्ते गौणदेहिकम्' इत्यादौ । भावं याथार्थ्यम् । (तच्चा)तथाऽब्रवीत्–

'यायातथ्यमजानन्तः परं तस्य विमोहिताः' । इति ॥ २४ ॥

### तात्पर्यम्

'अव्यक्तः परमात्माऽसौ व्यक्तो जीव उदाहृतः ।
मन्यते यस्तयोरैक्यं स तु यात्यधरं तमः' ॥ इति च ॥ २४ ॥

**नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।**
**मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥ २५ ॥**

### भाष्यम्

अज्ञानं च मदिच्छयेत्याह– **नाहमिति** । योगेन सामर्थ्योपायेन मायया च । मयैव मूढो नाभिजानाति । तथा(हि)ऽह पाद्मे–

'आत्मनः प्रावृतिं चैव लोकचित्तस्य वन्धनम् ।
स्वसामर्थ्येन देव्या च कुरुते स महेश्वरः' ॥ इति ॥ २५ ॥

वेदाहं समतीतानि वर्तमानानि चाऽर्जुन ।
भविष्याणि च भूतानि मां तु वेद न कश्चन।। २६ ।।

### भाष्यम्

न (च) मां माया बध्नातीत्याह– वेदेति । न कश्चनातिसमर्थोऽपि स्वसामर्थ्यात् ।। २६ ।।

### तात्पर्यम्

'यथाऽऽत्मानं हरिर्वेत्ति तथाऽन्ये नैव तं विदुः ।
जानन्ति किञ्चित् क्रमशो रमाद्यास्तत्प्रसादतः' ।। इति च ।। २६ ।।

इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत ।
सर्वभूतानि संमोहं सर्गे यान्ति परन्तप ।। २७ ।।

### भाष्यम्

द्वन्द्वमोहेन सुखदुःखादिविषयमोहेन । इच्छाद्वेषयोः प्रवृद्धयोर्नहि किञ्चिज्ज्ञातुं शक्यम् । कारणान्तरमेतत् । सर्गे सर्गकालं आरभ्यैव । शरीरे हि (सति) सन्तीच्छादयः । पूर्वं त्वज्ञानमात्रम् ।। २७ ।।

### तात्पर्यम्

द्वन्द्वमोहो मिथ्याज्ञानम् ।

'तमस्तु शार्वरं विद्यान्मोहश्चैव विपर्ययः' । इति भारते ।

जीवेश्वरादिकं द्वन्द्वम् । तद्विषयो मोहो द्वन्द्वमोहः । सम्मोहः तदाग्रह :-

'तदाग्रहो महामोहस्तामिस्रः क्रोध उच्यते' । इत्युक्तत्वात् ।

सर्गे सर्गकाल एव ।

'जीवधर्मानीश्वरे तु यो जीवेष्वैश्वरानपि ।
विद्याज्जीवेश्वरैक्यं वा द्वन्द्वमोही स उच्यते' ।। इत्याग्नेये ।। २७ ।।

येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ।। २८ ।।

### भाष्यम्

विपरीताश्च केचित् सन्तीत्याह– येषामिति ।। २८ ।।

जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम्।। २९ ।।

साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ।। ३० ।।

।। ओं तत्सदिति श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे ज्ञानविज्ञानयोगो नाम सप्तमोऽध्यायः ।।

### भाष्यम्

जरामरणमोक्षायेत्यन्यकामनिवृत्त्यर्थम् । मोक्षे सक्तिस्तुत्यर्थं वा । न विधिः ।

'मुमुक्षोरमुमुक्षुस्तु वरो ह्येकान्तभक्तिभाक्' । इतीतरस्तुतेर्नारदीये ।
'नात्यन्तिकम्' इति च ।

'देवानां गुणलिङ्गानामानुश्राविककर्मणाम् ।
सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या ।

अनिमित्ता भगवति भक्तिः सिद्धेर्गरीयसी ।
जरयत्याशु या कोशं निगीर्णमनलो यथा' ।। इति भागवते लक्षणाच्च ।

आह च–

'सर्वे वेदास्तु देवार्था देवा नारायणार्थकाः ।
नारायणस्तु मोक्षार्थे मोक्षो नान्यार्थ इष्यते ।
एवं मध्यमभक्तानामेकान्तानां न कस्यचित् ।
अर्थे नारायणो देवस्त्वन्यत् सर्वं तदर्थकम्' ।। इति गीताकल्पे ।

त एव च विदुः । 'यमेवैष वृणुते' इति श्रुतेः ।। २९, ३० ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीभगवद्गीताभाष्ये सप्तमोऽध्यायः ।।

## तात्पर्यम्

'तद् ब्रह्म' इत्युक्तेऽन्यत्वाशङ्कां निवारयति - साधिभूताधिदैवं मामिति ।
।। ३० ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीभगवद्गीतातात्पर्यनिर्णये सप्तमोऽध्यायः ।।

*****

# अष्टमोऽध्यायः

### भाष्यम्

मरणकालकर्तव्यगत्याद्यस्मिन्नध्याये उपदिशति-

### तात्पर्यम्

उक्तव्याख्यानपूर्वकं ब्रह्मप्राप्तिरुच्यते ।

### अर्जुन उवाच

किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।
अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥ १ ॥

अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदन ।
प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥ २ ॥

### श्रीभगवानुवाच

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३ ॥

### भाष्यम्

परममक्षरं परं ब्रह्म । वेदादिशङ्काव्यावृत्त्यर्थमेतत् । आत्मन्यधि यत् तदध्यात्मम् । आत्माधिकारे यत् तदिति वा । तथाहि जैवः स्वभावः । स्वाख्यो भाव इति व्युत्पत्त्या जीवो वा स्वभावः । सर्वदाऽस्त्येवैक-प्रकारेणेति भावः । अन्तःकरणादिव्यावृत्त्यर्थो भावशब्दः । नह्येकप्रकारेण स्थितिरन्तःकरणादेः, विकारित्वात् । स्वशब्दः ईश्वरव्यावृत्त्यर्थः ।

भूतानां जीवानां भावानां जडपदार्थानां चोद्भवकरेश्वरक्रिया विसर्गः । विशेषेण सर्जनं विसर्ग इत्यर्थः ।। १-३ ।।

### तात्पर्यम्

तदिति विशेषणात् ब्रह्मेत्युक्तमन्यदेव प्रकृत्यादीनां मध्ये किञ्चित्; उपरि 'साधियज्ञं च' इति चशब्दादधिभूतादिसहितत्वेन विष्णुज्ञान-मन्यदेवेति संशयः 'किं तद् ब्रह्म' इति प्रश्नकारणम् ।। १,२ ।।

**अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।।**
**अधियज्ञोऽहमेवात्र देहे देहभृतां वर ।। ४ ।।**

### भाष्यम्

भूतानि सशरीरान् जीवानधिकृत्य यत् तदधिभूतम् । क्षरो भावः विनाशिकार्यपदार्थः । अव्यक्तान्तर्भावे तस्याप्यन्यथाभावाख्यो विनाशोऽस्त्येव । तच्चोक्तम्–

**'अव्यक्तं परमे व्योम्नि(व्योमन्) निष्क्रिये सम्प्रलीयते' । इति ।**
**'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम' । इति च ।**
**'विकारोऽव्यक्तजन्म हि' इति च स्कान्दे ।**

पुरि शयनात् पुरुषो जीवः । स च सङ्कर्षणो ब्रह्मा वा । स सर्वदेवानधिकृत्य पतिरित्यधिदैवतम् । देवाधिकारस्थ इति वा । सर्वयज्ञभोक्तृत्वादेरधियज्ञः । अन्योऽधियज्ञोऽग्न्यादिः प्रसिद्धः इति देह इति विशेषणम् ।

**'भोक्तारं यज्ञतपसाम्', 'त्रैविद्या माम्', 'येऽप्यन्यदेवताभक्ताः', 'एतस्य वा अक्षरस्य प्रशासने गार्गि', 'ददतो मनुष्याः प्रशंसन्ति यजमानं देवाः' । इत्यादेः ।**

'कुतो ह्यस्य ध्रुवं स्वर्गः कुतो नैश्श्रेयसं परम्' । इत्यादिपरिहाराच्च ।
।। मोक्षधर्मे ।।

भगवांश्चेत् तद्धोक्तृत्वादेरधियज्ञत्वं सिद्धमिति कथमित्यस्य परिहारः पृथङ् नोक्तः । सर्वप्राणिदेहस्थरूपेणाधियज्ञः । अत्रेति स्वदेह-निवृत्त्यर्थम् । नहि तत्रेश्वरस्य नियन्तृत्वं पृथगस्ति । नात्रोक्तं ब्रह्म भगवतोऽन्यत् । 'ते ब्रह्म' इत्युक्त्वा 'साधिभूताधिदैवं मां साधियज्ञं च ये विदुः' इति परामर्शात् । तस्यैव च प्रश्नात् । साधियज्ञमिति भेदप्रतीतेस्तन्निवृत्त्यर्थम् 'अधियज्ञोऽहम्' इत्युक्तम् । मामित्यभेद-प्रतीतेरक्षरमित्येवोक्तम् ।

आह च गीताकल्पे–

'देहस्थविष्णुरूपाणि अधियज्ञ इतीरितः ।
कर्मेश्वरस्य सृष्ट्याख्यं तच्चापीच्छायमुच्यते ।
अधिभूतं जडं प्रोक्तमध्यात्मं जीव उच्यते ।
हिरण्यगर्भोऽधिदैवं देवः सङ्कर्षणोऽपि वा ।
ब्रह्म नारायणो देवः सर्वदेवेश्वरेश्वरः' ।। इति ।

'यथाप्रतीतं वा सर्वमत्र वै न विरुद्ध्यते' ।। इति च ।

'आत्माभिमानाधिकारस्थितमध्यात्ममुच्यते ।
देहाद् वाह्यं विनाऽतीव वाह्यत्वादधिदैवतम् ।
देवाधिकारगं सर्वं महाभूताधिकारगम् ।
तत्कारणं तथा कार्यमधिभूतं तदन्तिकात्' ।। इति स्कान्दे ।।

'अध्यात्मं देहपर्यन्तं केवलात्मोपकारकम् ।
सदेहजीवभूतानि यत् तेषामुपकारकृत् ।
अधिभूतं तु मायान्तं देवानामधिदैवतम्' ।। इति महाकौर्मे ।। ४ ।।

## तात्पर्यम्

परमाक्षरं विष्णुरेव मुख्यत इति प्रसिद्धत्वात् तथैव (परिहार इति) परिहरति । अज्ञानां तदपि ज्ञापयितुं तथैव परिहारः । पुनरहमिति नोक्तमित्याशङ्का 'अव्यक्तं व्यक्तिमापन्नम्'' इति विष्णावेव प्रयुक्तेना-व्यक्तशब्देन 'अव्यक्तोऽक्षर इत्युक्तः' इति परिह्रियते । 'ये चाप्यक्षर-मव्यक्तम्' इत्यत्र तु पृथक् प्रश्नादुपासकयोः फलतारतम्यकथनात् 'कूटस्थोऽक्षर उच्यते' इत्युक्ताक्षरादपि चोत्तमः इति विष्णोरुत्तमत्व-कथनाच्चान्यदेवेत्यवसीयते । 'अधियज्ञोऽहमेव' इति साधियज्ञमित्युक्त्या प्राप्तभेदनिवृत्त्यर्थम् । तस्यैव सर्वप्राणिदेहस्थित-रूपान्तरापेक्षया सहितत्वं युज्यते ।

'प्राणिनां देहगो विष्णुरधियज्ञ इतीरितः ।
स एव व्याप्तरूपेण ब्रह्मेति परिकीर्त्यते ।
तैस्तैरधिकयाज्यत्वाद् बृंहितत्वाच्च हेतुतः ।
अध्यात्मं तत्स्वभावो यदधिकः परमात्मगः ।
पुंसां सजडभावानां सर्गः कर्म हरेः स्मृतम् ।
भूताधिकत्वतो जीवा अधिभूतमितीरिताः ।
अधिको दैवतं विष्णुरेव यस्यास्तु सा रमा ।
पुरुप्राणाऽधिदैवाख्या त्विति ज्ञेयमिदं नरैः' ।। इति तत्त्वविवेके ।

कथंरूपोऽधियज्ञ इति प्रश्नस्तु 'अहमेव' इत्युक्तत्वात् तल्लक्षणोक्त्यैव परिहृतः ।। ३,४ ।।

**अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम् ।**
**यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ।। ५ ।।**

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ६ ॥

तस्मात्सर्वेषु कालेषु मामनुस्मर युद्ध्य च ।
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः ॥ ७ ॥

अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८ ॥

### भाष्यम्

मद्भावं मयि सत्ताम् । निर्दुःखनिरतिशयानन्दात्मिकाम् । तच्चोक्तम्–

**'मुक्तानां च गतिर्ब्रह्मन् क्षेत्रज्ञ इति कल्पितः' । इति मोक्षधर्मे ॥ ५ ॥**

स्मरंस्त्यजतीति भिन्नकालीनत्वेऽप्यविरोध इति मन्दमतेः शङ्का मा भूदिति 'अन्ते' इति विशेषणम् । सुमतेर्नैव शङ्कावकाशः । स्मरं-स्त्यजतीत्येककालीनत्वप्रतीतेः । दुर्मतेर्दुःखान्न स्मरंस्त्यजतीति भविष्यति शङ्का ।

**'त्यजन् देहं न कश्चित्तु मोहमाप्नोत्यसंशयम्' । इति च स्कान्दे ।**

**'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति' । इति हि श्रुतिः ।**

**सदा तद्भावभावित** इत्यन्तकालस्मरणोपायमाह । भावोऽन्तर्गतं मनः । तथाऽभिधानात् । भाविततत्वमतिवासितत्वम् । 'भावना त्वतिवासना' इत्यभिधानात् ॥ ६, ७ ॥

सदा तद्भावभावितत्वं स्पष्टयति– **अभ्यासेति** । अभ्यास एव योगोऽभ्यासयोगः । दिव्यं पुरुषं पुरिशयं पूर्णं च ।

**'स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयो नैनेन किञ्चनानावृतं नैनेन किञ्चनासंवृतम्' ।। इति श्रुतेः ।**

दिव्यं सृष्ट्यादिक्रीडादियुक्तम् । 'दिवु क्रीडा-' इति धातोः ।। ८ ।।

## तात्पर्यम्

मद्भावं मयि भावम् । सदा तद्भावभावितानामेव स्मरंस्त्यजतीति केवलतत्कालस्मरणं भवति । न चेत् स्मरतोऽपि समाधिस्थस्खलनवत् पूर्वकर्मानुसारिस्मृत्या तत्प्राप्तिरेव भवति । अपरोक्षज्ञानिनां प्रारब्ध-कर्मावसाने स्मरंस्त्यजतीति भवत्येव । 'प्रयाणकालेऽपि च मां ते विदुः' इत्युक्तत्वात् । 'युक्तचेतसः' इति विशेषणान्नित्यं स्मरतामेवा-परोक्षज्ञानं जायते ।

**'भक्त्या ज्ञानान्निषिद्धानां त्यागान्नित्यहरिस्मृतेः ।**
**अरागाद् विहितात्यागादित्येतैरेव संयुतैः ।**
**अपरोक्षदर्शनं विष्णोर्जायते नान्यथा क्वचित्' ।। इति सत्तत्त्वे ।। ५-८ ।।**

**कविं पुराणमनुशासितारम् अणोरणीयांसमनुस्मरेद्यः।**
**सर्वस्य धातारमचिन्त्यरूपम् आदित्यवर्णं तमसः परस्तात् ।।**
**।। ९ ।।**

## भाष्यम्

ध्येयमाह- **कविमिति** । कविं सर्वज्ञम् । 'यः सर्वज्ञः' इति श्रुतिः । 'त्वं कविः सर्ववेदनात्' इति च ब्राह्मे । धातारं धारणपोषणकर्तारम् ।

'डुधाञ् धारणपोषणयोः' इति धातोः । 'धाता विधाता परमोत सन्दृग्' इति च श्रुतिः । 'ब्रह्मा स्थाणुः' इत्यारभ्य 'तस्य प्रसादा-दिच्छन्ति तदादिष्टफलां गतिम्' इत्यादेश्च मोक्षधर्मे । तमसोऽव्यक्तात् परतः स्थितम्–

'तमसः परस्तादिति । अव्यक्तं वै तमः । परस्ताद्धि स ततः' इति पिप्पलादशाखायाम् ।

'मृत्युर्वाव तमः । मृत्युर्वै तमो ज्योतिरमृतम्' इति श्रुतेः ॥ ९ ॥

**प्रयाणकाले मनसाऽचलेन भक्त्या युक्तो योगवलेन चैव ।**
**भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम् ॥**
**॥ १० ॥**

### भाष्यम्

वायुजयादियोगयुक्तानां मृतिकालकर्तव्यमाह विशेषतः - **प्रयाणकाल** इति । वायुजयादिरहितानामपि ज्ञानभक्तिवैराग्यसम्पूर्णानां भवत्येव मुक्तिः । तद्वतां त्वीषज्ज्ञानाद्यसम्पूर्णानामपि निपुणानां तद्बलात् कथञ्चिद् भवतीति विशेषः । उक्तं च भागवते–

'पानेन ते देवकथासुधायाः प्रवृद्धभक्त्या विशदाशया ये ।
वैराग्यसारं प्रतिलभ्य वोधं यथाऽञ्जसा त्वाऽऽपुरकुण्ठधिष्ण्यम् ।
तथा परे त्वात्मसमाधियोगवलेन जित्वा प्रकृतिं वलिष्ठाम् ।
त्वामेव धीराः पुरुषं विशन्ति तेषां श्रमः स्यान्नतु सेवया ते ।' इति ॥

'ये तु तद्भाविता लोक एकान्तित्वं समाश्रिताः ।
एतदभ्यधिकं तेषां तत् तेजः प्रविशन्त्युत' ॥ इति च मोक्षधर्मे ।

'सम्पूर्णानां भवेन्मोक्षो विरक्तिज्ञानभक्तिभिः ।
नियमेन तथाऽपीरजयादियुतयोगिनाम् ।
वश्यत्वान्मनसस्त्वीषत् पूर्वमप्याप्यते ध्रुवम्' इति च व्यासयोगे ।
।। १० ।।

## तात्पर्यम्

तमसः परस्तात् अप्राकृतदेहम् ।। ९, १० ।।

**यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण प्रवक्ष्ये ।।
।। ११ ।।**

## भाष्यम्

तदेव सद्ध्येयं प्रपञ्चयति– **यदक्षरमित्यादिना** । प्राप्यते मुमुक्षुभिरिति । पदं स्वरूपम् । 'पदगतौ' इति धातोः ।

'तद् विष्णोः परमं पदम्' इति श्रुतेश्च । 'गीयसे पदमित्येव मुनिभिः पद्यसे यतः' इति च नारदीये ।। ११ ।।

## तात्पर्यम्

मन आदीनां ब्रह्मणि चरणं ब्रह्मचर्यम् ।। ११ ।।

**सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायाऽत्मनः प्राणमास्थितो योगधारणाम्।। १२ ।।**

**ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।
यः प्रयाति त्यजन् देहं स याति परमां गतिम्।। १३ ।।**

### भाष्यम्

ब्रह्मनाडीं विना यद्यन्यत्र गच्छति तर्हि विना मोक्षं स्थानान्तरं प्राप्नोतीति सर्वद्वाराणि संयम्य । 'निर्गच्छंश्चक्षुषा सूर्यं दिशः श्रोत्रेण चैवहि' इत्यादिवचनाद् व्यासयोगे मोक्षधर्मे च ।

हृदि नारायणे ।

'ह्रियते त्वया जगद् यस्माद्धृदित्येव प्रभाष्यसे' इति हि पाद्मे । नहि मूर्ध्नि प्राणस्थितेर्हृदि मनसः स्थितिः सम्भवति । 'यत्र प्राणो मनस्तत्र तत्र जीवः परस्तथा' इति व्यासयोगे । योगधारणामास्थितः योगभरण एवाभियुक्त इत्यर्थः ।। १२, १३ ।।

### तात्पर्यम्

एकाक्षरवाच्यत्वादेकाक्षरं परं ब्रह्म ।। १३ ।।

**अनन्यचेताः सततं यो मां स्मरति नित्यशः ।**
**तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ।। १४ ।।**

### भाष्यम्

नित्ययुक्तस्य नित्योपायवतः । योगिनः परिपूर्णयोगस्य ।। १४ ।।

**मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।**
**नाऽप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ।। १५ ।।**

### भाष्यम्

तत्प्राप्तिं स्तौति– **मामिति** । परमां संसिद्धिं गता, हि त इति तत्र हेतुः ।। १५ ।।

**आब्रह्मभवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।**
**मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ।। १६ ।।**

### भाष्यम्

महामेरुस्थब्रह्मसदनमारभ्य न पुनरावृत्तिः ।

तच्चोक्तं नारायणगोपालकल्पे–

**'आ मेरुब्रह्मसदनादाजनान्न जनिर्भुवि ।**
**तथाऽप्यभावः सर्वत्र प्राप्यैव वसुदेवजम्' ।। इति ।। १६ ।।**

### तात्पर्यम्

**'नियमाज्जन्मनोऽभावो मुक्तस्यैव तथाऽपि तु ।**
**महर्लोकमतीतानां न जन्मांशलयौ विना ।**
**तत्राप्यवश्यं तत् स्थानं तैः क्षिप्रं पुनराप्यते' ।। इति पाद्मे ।। १६ ।।**

**सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः ।**
**रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ।। १७ ।।**

### भाष्यम्

मां प्राप्य न पुनरावृत्तिरिति स्थापयितुमव्यक्ताख्यात्मसामर्थ्यं दर्शयितुं प्रलयादि दर्शयति– **सहस्रयुगेत्यादिना** । सहस्रशब्दोऽत्रानेकवाची । 'सा विश्वरूपस्य रजनी' इति हि श्रुतिः ।। १७ ।।

### तात्पर्यम्

**सहस्रमिति वह्वेव । ब्रह्मणः परब्रह्मणः ।**

**'अव्यक्ताद् व्यक्तयः सर्वाः प्रभवन्त्यहराग मे**
**रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके' ।। इति वाक्यशेषात् ।**

नहि विरिञ्चाहन्येव सर्वव्यक्तलयः ।

'नित्यस्यापि हरेः कालो द्विपरार्धात्मकस्त्वयम् ।
अहःश्वासौ(श्वासो) निमेषश्चेत्यप्रवृत्त्योपचर्यते' ।। इति च ।। १७ ।।

अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ।। १८ ।।

भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।
रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ।। १९ ।।

परस्तस्मात्तुभावोऽन्योऽव्यक्तोऽव्यक्तात्सनातनः ।
यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ।। २० ।।

### भाष्यम्

द्विपरार्धप्रलय एवात्र विवक्षितः । 'अव्यक्ताद् व्यक्तयः सर्वाः' इत्युक्तेः । उक्तं च महाकौर्मे–

'अनेकयुगपर्यन्तमहर्विष्णोस्तथा निशा ।
रात्र्यादौ लीयते सर्वमहरादौ च जायते' ।। इति ।

'यः स सर्वेषु भूतेषु' इति वाक्यशेषाच्च ।। १८-२० ।।

अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ।। २१ ।।

### भाष्यम्

अव्यक्तो भगवान् । 'यं प्राप्य न निवर्तन्ते' इति 'मामुपेत्य' इत्युक्तस्य परामर्शात् । 'अव्यक्तं परमं विष्णुम्' इति प्रयोगाच्च गारुडे । धाम

स्वरूपम् । 'तेजः स्वरूपं च गृहं प्राज्ञैर्धमेति गीयते' इत्यभिधानात्
॥ २१ ॥

**पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।**
**यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥ २२ ॥**

### भाष्यम्

परमं साधनमाह- **पुरुष इति** ॥ २२ ॥

**यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।**
**प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ २३ ॥**

### भाष्यम्

यत्कालाद्यभिमानिदेवता गता आवृत्त्यनावृत्ती गच्छन्ति ता आह– **यत्रेत्यादिना** । काल इत्युपलक्षणम् । अग्न्यादेरपि वक्ष्यमाणत्वात् ।
॥ २३ ॥

### तात्पर्यम्

यत्र कालाभिमानिदेवतासु मृत्यनन्तरं प्रयाताः । अग्निर्ज्योतिर्धूमानाम-कालाभिमानित्वेऽपि कालप्राचुर्यात् काल इत्युच्यते ॥ २३ ॥

**अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।**
**तत्र प्रयाता गच्छन्ति व्रह्म व्रह्मविदो जनाः ॥ २४ ॥**

**धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।**
**तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ २५ ॥**

**शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।**
**एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः ॥ २६ ॥**

## भाष्यम्

ज्योतिरर्चिः । 'तेऽर्चिषमभिसम्भवन्ति' इति हि श्रुतिः ।

तथाहि नारदीये–

**'अग्निं प्राप्य ततश्चार्चिस्ततश्चाप्यहरादिकम्'** । इति ।

अभिमानिदेवताश्चाग्न्यादयः । कथमन्यथा 'अह्न आपूर्यमाणपक्षम्' इति युज्येत ।

**'दिवादिदेवताभिस्तु पूजितो ब्रह्म याति हि'** । इति हि ब्राह्मे ।

मासाभिमानिन्योऽयनाभिमानिनी च पृथक् ।

तच्चोक्तं गारुडे– **'पूजितस्त्वयनेनासौ मासैः परिवृतेन हि'** इति ।

अहरभिजिता शुक्लं पौर्णमास्या अयनं विषुवा सह ।

तच्चोक्तं ब्रह्मवैवर्ते–

**'साह्ना मध्यन्दिनेनाथ शुक्लेन च स पूर्णिमा ।**
**सविष्वा चायनेनासौ पूजितः केशवं व्रजेत्'** ॥ इति ॥ २४-२६ ॥

## तात्पर्यम्

**'अग्निर्ज्योतिरिरिति द्वेधा वह्नेः पुत्रो व्यवस्थितः ।**
**तं प्राप्य याति ब्रह्मिष्ठो दिवसाद्यभिमानिनः'** ॥ इति सत्तत्त्वे ।

तत्कालमरणविवक्षायामग्निर्ज्योतिर्धूमानामयोगः । 'अथ यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं गच्छत्येतौ वै सूर्याचन्द्रमसोर्महिमानौ ब्राह्मणो विद्वानभिजयति तस्माद् ब्रह्मणो महिमानमाप्नोति' इति विदुषो दक्षिणायनमरणेऽप्यपुनरावृत्त्या ब्रह्मप्राप्तिश्रुतेः । 'विद्वान् ब्रह्म समाप्नोति यत्र तत्र मृतोऽपि सन्' इति च पाद्मे ।। २४-२६ ।।

**नैते सृती पार्थ जानन् योगी मुह्यति कश्चन ।**
**तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ।। २७ ।।**

**वेदेषु यज्ञेषु तपःसु चैव दानेषु यत्पुण्यफलं प्रदिष्टम् ।**
**अत्येति तत्सर्वमिदं विदित्वा योगी परं स्थानमुपैति चाद्यम् ।**
**।। २८ ।।**

।। ओं तत्सदिति श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे अक्षरब्रह्मयोगो नाम अष्टमोऽध्यायः ।।

### भाष्यम्

एते सृती सोपाये ज्ञात्वाऽनुष्ठाय न मुह्यति ।

तच्चाऽह स्कान्दे–

'सृती ज्ञात्वा तु सोपाये चानुष्ठाय च साधनम् ।
न कश्चिन्मोहमाप्नोति न चान्या तत्र वै गतिः' ।। इति ।। २७, २८ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीभगवद्गीताभाष्ये अष्टमोऽध्यायः ।।

## तात्पर्यम्

'मार्गौ ब्रह्म च यः पश्येत् साक्षादेवापरोक्षतः ।
सर्वपुण्यातिगोऽमुह्यन् यात्यसौ ब्रह्म तत् परम्' ।। इति च ।

।। २७-२८ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभगवद्गीतातात्पर्यनिर्णये अष्टमोऽध्यायः ।।

*****

# नवमोऽध्यायः

### भाष्यम्

सप्तमाध्यायोक्तं स्पष्टयत्यस्मिन्नध्याये-

### तात्पर्यम्

सप्तमोक्तं प्रपञ्चयति ।

### श्रीभगवानुवाच

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १ ॥

राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥

अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप ।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥ ३ ॥

### भाष्यम्

राजविद्या प्रधानविद्या । प्रत्यक्षं ब्रह्म अवगम्यते येन तत् प्रत्यक्षावगमम् । अक्षेषु इन्द्रियेषु प्रति प्रति स्थित इति प्रत्यक्षः । तथा च श्रुतिः–

'यः प्राणे तिष्ठन् प्राणादन्तरो यं प्राणो न वेद यस्य प्राणः शरीरं यः प्राणमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः' ।

'यो विज्ञाने तिष्ठन्' 'यश्चक्षुषि तिष्ठन्' इत्यादेः ।

'य एषोऽन्तरक्षिणि पुरुषो दृश्यते' इति च ।

'अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः' इति च ।
'त्वं मनस्त्वं चन्द्रमास्त्वं चक्षुरादित्यः' इत्यादेश्च मोक्षधर्मे ।
'स प्रत्यक्षः । प्रति प्रति हि सोऽक्षेष्वक्षवान् स भवति हि य एवं विद्वान् प्रत्यक्षं वेद' इति सामवेदे (वारुणशाखायाम्) वाभ्रव्यशाखायाम् ।

धर्मो भगवान् । तद्विषयं धर्म्यम् । सर्वं जगद् धत्त इति धर्मः । 'पृथिवी धर्ममूर्धनि' इति प्रयोगान्मोक्षधर्मे । 'भारभृत् कथितो योगी' इति च । 'भर्ता सन् भ्रियमाणो बिभर्ति' इति च श्रुतिः । 'धर्मो वा इदमग्र आसीन्न पृथिवी न वायुर्नाऽकाशो न ब्रह्मा न रुद्रो नेन्द्रो न देवा न ऋषयः सोऽध्यायत्' इति च सामवेदे बाभ्रव्यशाखायाम् ।
॥ १-३ ॥

**मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।**
**मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ ४ ॥**

## भाष्यम्

प्रत्यक्षावगमशब्देनापरोक्षज्ञानसाधनत्वमुक्तम् । तज्ज्ञानाद्याह– **मयेति** । तर्हि किमिति न दृश्यत इत्यत आह– **अव्यक्तमूर्तिनेति** ॥ ४ ॥

**न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।**
**भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥ ५ ॥**

## भाष्यम्

मत्स्थत्वेऽपि यथा पृथिव्यां स्पृष्ट्वा स्थितानि न तथा मयीत्याह– **न चेति** ।

'न दृश्यश्चक्षुषा चासौ न स्पृश्यः स्पर्शनेन च' । इति मोक्षधर्मे । 'संज्ञासंज्ञ' इति च ।

ममाऽत्मा देह एव भूतभावनः । 'महाविभूते माहात्म्यशरीर' इति हि मोक्षधर्मे ।। ५ ।।

**यथाऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।**
**तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ।। ६ ।।**

### भाष्यम्

मत्स्थानि न च मत्स्थानीत्यस्य दृष्टान्तमाह– **यथाऽऽकाश स्थित** इति । न ह्याकाशस्थितोऽपि वायुः स्पर्शाद्याप्नोति ।। ६ ।।

**सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।**
**कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ।। ७ ।।**

**प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।**
**भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ।। ८ ।।**

### भाष्यम्

ज्ञानप्रदर्शनार्थं प्रलयादि प्रपञ्चयति– **सर्वभूतानीत्यादिना** । प्रकृत्यवष्टम्भस्तु यथा कश्चित् समर्थोऽपि पादेन गन्तुं लीलया दण्डमवष्टभ्य गच्छति ।

'सर्वभूतगुणैर्युक्तं नैवं त्वं ज्ञातुमर्हसि' । इति च मोक्षधर्मे ।

'सर्वभूतगुणैर्युक्तं दैवं (मां) त्वं ज्ञातुमर्हसि' । इति च ।

'विदित्वा सप्त सूक्ष्माणि षडङ्गं च महेश्वरम् ।
प्रधानविनियोगस्थः परं ब्रह्माधिगच्छति' ।। इति च ।

'न कुत्रचिच्छक्तिरनन्तरूपा विहन्यते तस्य महेश्वरस्य ।
तथाऽपि मायामधिरुह्य देवः प्रवर्तते सृष्टिविलापनेषु' ।। इत्यृग्वेदखिलेषु ।

'मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे' । इति भागवते ।
'अथ कस्मादुच्यते परं ब्रह्म इति, वृहति वृंहयति च' । इत्याथर्वणे ।

'पराऽस्य शक्तिर्विविधैव श्रूयते' । इति च ।

'विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि'

'न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप' इत्यादेश्च ।

प्रकृतेर्वशादवशम्–

'त्वमेवैतत्सर्जने सर्वकर्मण्यनन्तशक्तोऽपि स्वमाययैव ।
मायावशं चावशं लोकमेतत् स्रक्ष्यस्यत्सि पासीश विष्णो' ।।
इति गौतमखिलेषु ।। ७,८ ।।

**न च मां तानि कर्माणि निवध्नन्ति धनञ्जय ।**
**उदासीनवदासीनमसक्तं तेषु कर्मसु ।। ९ ।।**

### भाष्यम्

उदासीनवत्, नतूदासीनः । तदर्थमाह- **असक्तमिति** । 'अवाक्यनादरः' इति हि श्रुतिः ।

'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।
यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया' ।। इति भागवते ।

यस्यासत्त्यैव सर्वकर्मशक्तिः कुतस्तस्य सर्वकर्मबन्ध इति भावः । 'न कर्मणा वर्धते नो कनीयान्' इति श्रुतिः । यः कर्मापि निय(या)मयति कथं च तत् तं बध्नाति ? ॥ ९ ॥

### तात्पर्यम्

'विष्णुगान्यप्यतत्स्थानि भूतान्येष ह्यसङ्गतः' इति च । ममाऽत्मा मम देह एव । तदनन्यत्वात् । देहस्याचेतनत्वाशङ्कानिवृत्तये **'ममाऽत्मा'** इत्याह ॥ ४-९ ॥

**मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।**
**हेतुनानेन कौन्तेय जगद्विपरिवर्तते ॥ १० ॥**

### भाष्यम्

उदासीनवदिति चेत् स्वयमेव प्रकृतिः सूयत इत्यत आह– **मयेति** । प्रकृतिसूतिद्रष्टा कर्ता चाहमेवेत्यर्थः । तथा च श्रुतिः–
**'यतः प्रसूता जगतः प्रसूती तोयेन जीवान् व्यससर्ज भूम्याम्'** । इति ।
॥ १० ॥

### तात्पर्यम्

'अध्यक्षोऽधिपतिः प्रोक्तो यदक्षाण्यस्य चोपरि' । इति शब्दनिर्णये ।
॥ १० ॥

**अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।**
**परं भावमजानन्तो मम भूतमहेश्वरम् ॥ ११ ॥**

### भाष्यम्

तर्हि कथं केचित् त्वामवजानन्ति ? का च तेषां गतिरिति ? आह– **अवजानन्तीत्यादिना** । मानुषीं तनुं, मूढानां मानुषवत् प्रतीताम् तनुं, न तु मनुष्यरूपाम् । उक्तं च मोक्षधर्मे–

'यत्किञ्चिदिह लोकेऽस्मिन् देहवद्धं विशाम्पते ।
सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः ।
ईश्वरो हि जगत्स्रष्टा प्रभुर्नारायणो विराट् ।
भूतान्तरात्मा विज्ञेयः सगुणो निर्गुणोऽपि च ।
भूतप्रलयमव्यक्तं शुश्रूषुर्नृपसत्तम' । इति ।

अवतारप्रसङ्गे चैतदुक्तम् । अतो नावताराश्च पृथक् शङ्क्याः ।

'रूपाण्यनेकान्यसृजत् प्रादुर्भावभवाय सः ।
वाराहं नारसिंहं च वामनं मानुषं तथा' ।।

इति तत्रैव प्रथमसर्गकाल एवावताररूपविभक्त्युक्तेः ।

अतो न तेषां मानुषत्वादिर्विना भ्रान्तिम् । भूतं महदीश्वरं चेति भूतमहेश्वरम् । तथाहि बाभ्रव्यशाखायाम्-

'अनाद्यनन्तं परिपूर्णरूपमीशं वराणामपि देववीर्यम्' । इति ।
'अस्य महतो भूतस्य निःश्वसितम्' इति च ।
'ब्रह्मपुरोहित ब्रह्मकायिकमहाराजिक' इति च मोक्षधर्मे ।। ११ ।।

**मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ।। १२ ।।**

**भाष्यम्**

तेषां फलमाह– **मोघाशा इति** । वृथाशाः । भगवद्द्वेषिभिराशाशितमामुष्मिकं न किञ्चिदाप्यते । यज्ञादिकर्माणि च तेषां वृथैव । ज्ञानं च । केनापि ब्रह्मरुद्रादिभक्त्याद्युपायेन न कश्चित् पुरुषार्थ आमुष्मिकस्तैराप्यत इत्यर्थः । वक्ष्यति च– 'तानहं द्विषतः क्रूरान् संसारेषु' इत्यादि ।

**'कर्मणा मनसा वाचा यो द्विष्याद् विष्णुमव्ययम् ।**
**मज्जन्ति पितरस्तस्य नरके शाश्वतीः समाः ।**
**यो द्विष्याद् विबुधश्रेष्ठं देवं नारायणं प्रभुम् ।**
**कथं स न भवेद् द्वेष्य आलोकान्तस्य कस्यचित्' ।। इति मोक्षधर्मे ।**

**'सर्वोत्कृष्टे ज्ञानभक्ती हि यस्य नारायणे पुष्करविष्टराद्ये ।**
**सर्वावमो द्वेषयुतश्च तस्मिन् भ्रूणानन्तघ्नोऽप्यस्य समो न चैव' ।।**
**इति च सामवेदे शाण्डिल्यशाखायाम् ।**

'द्वेषाच्चेद्यादयो नृपाः' 'वैरेण यन्नृपतयः शिशुपालपौण्ड्रसाल्वादयो गतिविलासविलोकनाद्यैः । ध्यायन्त आकृतधियः शयनासनादौ तत्साम्यमापुरनुरक्तधियः पुनः किम्' इत्यादि तु भगवतो भक्तप्रियत्वज्ञापनार्थम्, (नित्यध्यानस्तुत्यर्थं च ।) स्वभक्तस्य कदाचिच्छापबलाद् द्वेषिणोऽपि भक्तिफलमेव भगवान् ददातीति ।

भक्ता एव हि ते पूर्वं शिशुपालादयः । शापबलादेव च द्वेषिणः । तत्प्रश्ने पूर्वपार्षदत्वशापादिकथनाच्चेतज्ज्ञायते । अन्यथा किमिति तदप्रस्तुतमुच्येत ? भगवतः साम्यकथनं तु द्वेषिणामपि द्वेषमनिरूप्य पूर्वतनभक्तिफलमेव ददातीति ज्ञापयितुम् । 'न मे भक्तः प्रणश्यति' इति च वक्ष्यति । न च 'भावो हि भ(भा)वकारणम्' इत्यादिविरोधः ।

### भाष्यम्

तर्हि कथं केचित् त्वामवजानन्ति ? का च तेषां गतिरिति ? आह– **अवजानन्तीत्यादिना** । मानुषीं तनुं, मूढानां मानुषवत् प्रतीताम् तनुं, न तु मनुष्यरूपाम् । उक्तं च मोक्षधर्मे–

'यत्किञ्चिदिह लोकेऽस्मिन् देहवद्धं विशाम्पते ।
सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः ।
ईश्वरो हि जगत्स्रष्टा प्रभुर्नारायणो विराट् ।
भूतान्तरात्मा विज्ञेयः सगुणो निर्गुणोऽपि च ।
भूतप्रलयमव्यक्तं शुश्रूषुर्नृपसत्तम' । इति ।

अवतारप्रसङ्गे चैतदुक्तम् । अतो नावताराश्च पृथक् शङ्क्याः ।

'रूपाण्यनेकान्यसृजत् प्रादुर्भावभवाय सः ।
वाराहं नारसिंहं च वामनं मानुषं तथा' ।।

इति तत्रैव प्रथमसर्गकाल एवावताररूपविभक्त्युक्तेः ।

अतो न तेषां मानुषत्वादिर्विना भ्रान्तिम् । भूतं महदीश्वरं चेति भूतमहेश्वरम् । तथाहि बाभ्रव्यशाखायाम्-

'अनाद्यनन्तं परिपूर्णरूपमीशं वराणामपि देववीर्यम्' । इति ।
'अस्य महतो भूतस्य निःश्वसितम्' इति च ।
'ब्रह्मपुरोहित ब्रह्मकायिकमहाराजिक' इति च मोक्षधर्मे ।। ११ ।।

**मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।**
**राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ।। १२ ।।**

### भाष्यम्

तेषां फलमाह– **मोघाशा इति** । वृथाशाः । भगवद्द्वेषिभिराशाशितमामुष्मिकं न किञ्चिदाप्यते । यज्ञादिकर्माणि च तेषां वृथैव । ज्ञानं च । केनापि ब्रह्मरुद्रादिभक्त्याद्युपायेन न कश्चित् पुरुषार्थ आमुष्मिकस्तैराप्यत इत्यर्थः । वक्ष्यति च– 'तानहं द्विषतः क्रूरान् संसारेषु' इत्यादि ।

**'कर्मणा मनसा वाचा यो द्विष्याद् विष्णुमव्ययम् ।**
**मज्जन्ति पितरस्तस्य नरके शाश्वतीः समाः ।**
**यो द्विष्याद् विबुधश्रेष्ठं देवं नारायणं प्रभुम् ।**
**कथं स न भवेद् द्वेष्य आलोकान्तस्य कस्यचित्' ।। इति मोक्षधर्मे ।**

**'सर्वोत्कृष्टे ज्ञानभक्ती हि यस्य नारायणे पुष्करविष्टराद्ये ।**
**सर्वावमो द्वेषयुतश्च तस्मिन् भ्रूणानन्तघ्नोऽप्यस्य समो न चैव' ।।**
**इति च सामवेदे शाण्डिल्यशाखायाम् ।**

'द्वेषाच्चेद्यादयो नृपाः' 'वैरेण यन्नृपतयः शिशुपालपौण्ड्रसाल्वादयो गतिविलासविलोकनाद्यैः । ध्यायन्त आकृतधियः शयनासनादौ तत्साम्यमापुरनुरक्तधियः पुनः किम्' इत्यादि तु भगवतो भक्तप्रियत्वज्ञापनार्थम्, (नित्यध्यानस्तुत्यर्थं च ।) स्वभक्तस्य कदाचिच्छापबलाद् द्वेषिणोऽपि भक्तिफलमेव भगवान् ददातीति ।

भक्ता एव हि ते पूर्वं शिशुपालादयः । शापबलादेव च द्वेषिणः । तत्प्रश्ने पूर्वपार्षदत्वशापादिकथनाच्चेतज्ज्ञायते । अन्यथा किमिति तदप्रस्तुतमुच्येत ? भगवतः साम्यकथनं तु द्वेषिणामपि द्वेषमनिरूप्य पूर्वतनभक्तिफलमेव ददातीति ज्ञापयितुम् । 'न मे भक्तः प्रणश्यति' इति च वक्ष्यति । न च 'भावो हि भ(भा)वकारणम्' इत्यादिविरोधः ।

द्वेषभाविनां द्वेष एव भवतीति हि युक्तम् । अन्यथा गुरुद्वेषिणो गुरुत्वं भवतीत्याद्यनिष्टमापद्येत । न चाकृतधीत्वे विशेषः । तेषामेव हिरण्यकशिप्वादीनां पापप्रतीतेः–

**'हिरण्यकशिपुश्चापि भगवन्निन्दया तमः ।**
**विविक्षुरत्यगात् सूनोः प्रह्लादस्यानुभावतः'** ।। इति ।

'यदनिन्दत् पिता मह्यम्' इत्यारभ्य 'तस्मात् पिता मे पूयेत दुरन्ताद् दुस्तरादघात्' इति प्रह्लादेन भगवतो वरयाचनाच्च । बहुषु ग्रन्थेषु च निषेधः । कुत्रचिदेव तदुक्तिरिति विशेषः । यस्मिंस्तदुच्यते तत्रैव च निषेध उक्तः । महातात्पर्यविरोधश्चोक्तः पुरस्तात् । अयुक्तिमद्भ्यो युक्तिमन्त्येव च बलवन्ति वाक्यानि युक्तयश्चोक्ता अन्येषाम् । न चैषां काचिद् गतिः । साम्येऽपि वाक्ययोर्लोकानुकूलाननुकूलयोरनुकूलमेव बलवत् । लोकानुकूलं च भक्तप्रियत्वं नेतरत् । उक्तं च तेषां पूर्वभक्तत्वम्–

**'मन्येऽसुरान् भागवतान् त्र्यधीशे संरम्भमार्गाभिनिविष्टचित्तान्'** । इति ।

अतो न भगवद्द्वेषिणां काचिद् गतिरिति सिद्धम् । द्वेषकारणमाह- **राक्षसीमिति** ।। १२ ।।

**महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।**
**भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ।। १३ ।।**

**सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।**
**नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ।। १४ ।।**

### भाष्यम्

नेतरे द्विषन्तीति दर्शयितुं देवानाह - **महात्मान इत्यादिना** ।
।। १३, १४ ।।

### तात्पर्यम्

मानुषीं मनुष्यसदृशीम्–

'तन्वा विष्णुरनन्योऽपि स्वाधीनत्वात् तदाश्रितः' । इति च ।

'ब्रह्मरुद्ररमादीनां साम्यदृष्टिरनन्यता ।
प्रादुर्भावगतस्यापि दोषदृष्टिरपूर्णता ।
धर्मदेहावतारादेर्भेददृष्टिश्च सङ्करः ।
अवतारेष्विति ज्ञेयमवज्ञानं जनार्दने ।
सर्वं मोघं शुभं तस्य योऽवजानाति केशवम् ।
अवरं याति च तमः प्रादुर्भावगतोऽप्यतः ।
ज्ञेयः केवलचिद्देहो विदोषः पूर्णसद्गुणः' ।।
इति च भविष्यत्पर्वणि ।। ११-१४ ।।

**ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।
एकत्वेन पृथक्त्वेन वहुधा विश्वतोमुखम् ।। १५ ।।**

### भाष्यम्

सर्वत्रैक एव नारायणः स्थित इत्येकत्वेन । पृथक्त्वेन सर्वतो वैलक्षण्येन । 'बहुधा तस्य रूपमाभाति । शुक्लमिव लोहितमिवाथो नीलमथार्जुनम्' इति हि सनत्सुजा(तीये)ते ।

'दैवमेवापरे' इत्युक्तप्रकारेण बहवो बहुधा ।। १५ ।।

### तात्पर्यम्

'एकमूर्तिश्चतुर्मूर्तिरथवा पञ्चमूर्तिकः ।
द्वादशादिप्रभेदो वा पूज्यते सज्जनैर्हरिः' ।। इति च ।। १५ ।।

अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम् ।
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ।। १६ ।।

पिताहमस्य जगतो माता धाता पितामहः ।
वेद्यं पवित्रमोङ्कार ऋक्साम यजुरेव च ।। १७ ।।

### भाष्यम्

प्रतिज्ञातं विज्ञानमाह– **अहं क्रतुरित्यादिना** । क्रतवोऽग्निष्टोमादयः । यज्ञो देवतामुद्दिश्य द्रव्यपरित्यागः । 'उद्दिश्य देवान् द्रव्याणां त्यागो यज्ञ इतीरितः' । इत्यभिधानात् ।। १६-१७ ।।

गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ।। १८ ।।

### भाष्यम्

गम्यते मुमुक्षुभिरिति गतिः । तथाहि सामवेदेषु वासिष्ठशाखायाम्- 'अथ कस्मादुच्यते गतिरिति । ब्रह्मैव गतिस्तद्धि गम्यते पापमुक्तैः' इति ।

साक्षादीक्षत इति साक्षी । तथाहि बाष्कलशाखायाम्–

'स साक्षादिदमद्राक्षीद् यदद्राक्षीत् तत् साक्षिणः साक्षित्वम्' इति ।

शरणमाश्रयः संसारभीतस्य–

'परमं यः परायणम्' इति ह्युक्तम् ।

'नारायणं महाज्ञेयं विश्वात्मानं परायणम्' इति च ।

संहारकाले प्रकृत्या जगदत्र निधीयत इति निधानम् ।

तथाहि ऋग्वेदखिलेषु– 'अपश्यमप्यये मायया विश्वकर्मण्यदो जगन्निहितं शुभ्रचक्षुः' इति ।। १८ ।।

**तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।**
**अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ।। १९ ।।**

## भाष्यम्

सत् कार्यम् । असत् कारणम्–

'सदभिव्यक्तरूपत्वात् कार्यमित्युच्यते बुधैः ।
असदव्यक्तरूपत्वात् कारणं चापि शब्दितम्' ।। इति ह्यभिधानम् ।

'असच्च सच्चैव च यद् विश्वं सदसतः परम्' । इति च भारते ।।१९।।

## तात्पर्यम्

'अर्च्यत्वादृक्समत्वाच्च निजरूपेषु साम सः ।
याज्यत्वात् स यजुर्यज्ञः सार्वज्ञ्यात् पुरुषोत्तमः' ।

'क्रतुः कृतिस्वरूपत्वात् स्वधाऽनन्यधृतो यतः ।
मानात् त्रातीति मन्त्रोऽयमुष्टानां निधिरौषधम् ।
आ ज्यायस्त्वादाज्यनामा दर्भोदरधरो यतः ।
अहूतत्वाद्धुतं चायमग्निर्नेताऽगतेर्यतः' ।। इत्यादि च ।

'तत्तत्पदार्थभिन्नोऽपि तत्तन्नामैवमच्युतः ।
स्वातन्त्र्यात् सर्वकर्तृत्वात् गुणानन्त्याच्च केवलम्' ।। इति च ।

'ओमित्याक्रियते यस्मादोङ्कारो भगवान् (हरिः) परः' इति च ।

'पातीति पिता मानान्माता यत् स पितुर्महान् ।
पितामहो निधातृत्वान्निधानं भीतरक्षणात् ।
शरणं व्यञ्जनाच्चैव बीजमित्युच्यते प्रभुः' ।। इति च ।

प्रलयकाले संहर्तृत्वात् प्रलयः । अन्यदाऽपीति मृत्युः–

'प्राणगः प्राणधर्ता यदमृतं प्रविलापयन् ।
विश्वं प्रलय इत्युक्तो मृत्युरन्यत्र मारणात्' ।। इति च ।

'सत् साधुगुणपूर्णत्वादस्मान्नान्यो गुणाधिकः ।
यतोऽतोऽसदिति प्रोक्तं विष्ण्वाख्यं परमं पदम्' ।। इति शब्दनिर्णये ।
।। १६-१९ ।।

त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते पुण्यमासाद्य सुरेन्द्रलोकं अश्नन्ति दिव्यान् दिवि देवभोगान्
।। २० ।।

ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।
एवं त्रयीधर्ममनुप्रपन्ना
गतागतं कामकामा लभन्ते ।। २१ ।।

### भाष्यम्

तथाऽपि मद्भजनमेवान्यदेवताभजनाद् वरमिति दर्शयति– त्रैविद्या इति ।। २०-२१ ।।

**अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।**
**तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ २२ ॥**

### भाष्यम्

अनन्याः अन्यदचिन्तयित्वा । तथाहि गौतमखिलेषु–

'सर्वं परित्यज्य मनोगतं यद् विना देवं केवलं शुद्धमाद्यम् ।
ये चिन्तयन्तीह तमेव धीरा अनन्यास्ते देवमेवाऽविशन्ति' ॥ इति ।

'कामः कालेन महता एकान्तित्वात् समाहितैः ।
शक्यो द्रष्टुं स भगवान् प्रभासन्दृश्यमण्डलः' ॥ इति मोक्षधर्मे ।

नित्यमभितः सर्वतो युक्तानाम् ॥ २२ ॥

**येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयाऽन्विताः ।**
**तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ २३ ॥**

### भाष्यम्

तर्हि 'अहं क्रतुः' इत्याद्यसत्यमित्यत आह– येऽपीति ॥ २३ ॥

### तात्पर्यम्

'अनन्यदेवतायागाद् भक्त्युद्रेकादकामनात् ।
सदा योगाच्च वैशिष्ट्यं त्रैविद्याद् वैष्णवादपि ।
स्याद्धि भागवतस्यैव तेन ब्रह्मादयोऽखिलाः ।
अश्वमेधादिभिर्यज्ञैरपि केशवयाजिनः ।
वैष्णवा इति बुद्ध्यैव मानयन्त्यन्यदेवताः ॥' इत्याग्नेये ।

'सम्यग्गुणगणज्ञानादुपासा पर्युपासना' । इति च ॥ २०-२३ ॥

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ।। २४ ।।

भाष्यम्

कारणमाहाविधिपूर्वकत्वे– **अहं हीति** ।। २४ ।।

यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ।।
।। २५ ।।

भाष्यम्

फलं विविच्याऽह - **यान्तीति** ।। २५ ।।

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ।। २६ ।।

भाष्यम्

दुर्बलैस्त्वं पूजयितुमशक्यो महत्त्वादित्याशङ्क्याऽह– **पत्रमिति** । नत्वविहितपत्रादि । तस्यापराधत्वोक्तेर्वाराहादौ । भक्त्यैवाहं तुष्ट (तृप्यः) इति भावः ।

'भक्तप्रियं सकललोकनमस्कृतं च' इति च भारते ।
'एतावानेव लोकेऽस्मिन् पुंसः स्वार्थः परः स्मृतः ।
एकान्तभक्तिर्गोविन्दे यत् सर्वत्राऽत्मदर्शनम्' ।। इति भागवते ।। २६ ।।

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम् ।। २७ ।।

**शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।**
**संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ।। २८ ।।**

### भाष्यम्

अतो यत् करोषि ।। २७, २८ ।।

### तात्पर्यम्

मामिष्ट्वा प्रार्थयन्त इत्युक्तत्वाज्जानन्तोऽपि नाभिजानन्ति तत्त्वेन ।

**'सर्वदेववरत्वेन यो न जानाति केशवम् ।**
**तस्य पुण्यानि मोघानि याति चान्धं तमो ध्रुवम्'** ।। इति च ।

'मोघाशा मोघकर्माणः' इत्युक्तत्वाच्च न केवलाज्ञविषयं मिथ्याज्ञानिविषयं वा 'च्यवन्ति ते' इत्यादि । अतः सर्वाधिक्यं विष्णोर्ज्ञात्वाऽपि ब्रह्मादीनां तत्परिवारत्वादिकमजानतामिदं फलम् ।। २४-२८ ।।

**समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।**
**ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ।।२९।।**

### भाष्यम्

तर्हि स्नेहादिमत्त्वादल्पभक्तस्यापि कस्यचिद् बहु फलं ददासि; विपरीतस्यापि कस्यचिद् विपरीतमित्यत आह– **समोऽहमिति** । तर्हि न भक्तिप्रयोजनमित्यत आह - **ये भजन्तीति** । मयि ते तेषु चाप्यहमिति - मम ते वशास्तेषामहं वश इति । उक्तं च पैङ्गिखिलेषु- 'ये वै भजन्ते परमं पुमांसं तेषां वशः स तु ते तद्वशाश्च' । इति । तद्वशा एव ते सर्वदा । तथाऽपि बुद्धिपूर्वकत्वाबुद्धिपूर्वकत्वेन भेदः । उद्धवादिवत्, शिशुपालादिवच्च । तच्चोक्तं तत्रैव–

'अबुद्धिपूर्वाद् यो वशस्तस्य ध्यानात् पुनर्वशो भवते बुद्धिपूर्वम्' - इति ।। २९ ।।

### तात्पर्यम्

'नास्य भक्तोऽपि यो द्वेष्यो नचाभक्तोऽपि यः प्रियः ।
किन्तु भक्त्यनुसारेण फलदोऽतः समो हरिः' इति पाद्मे ।

प्रीत्या मयि ते ।। २९ ।।

अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः।। ३० ।।

### भाष्यम्

न भवत्येव प्रायशस्तद्भक्तो सुदुराचारः । तथाऽपि बहुपुण्येन यदि कथञ्चिद् भवति तर्हि साधुरेव स मन्तव्यः ।। ३० ।।

क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ।। ३१ ।।

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्।।३२।।

किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ।। ३३ ।।

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ।। ३४ ।।

।। ओं तत्सदिति श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे राजविद्याराज्यगुह्ययोगो नाम नवमोऽध्यायः ।।

### भाष्यम्

कुतः ? क्षिप्रं भवति धर्मात्मा । देवदेवांशादिष्वेव चैतद् भवति । उक्तं च शाण्डिल्यशाखायाम्–

'नाविरतो दुश्चरितान्नाभक्तो नासमाहितः ।
सम्यग् भक्तो भवेत् कश्चिद् वासुदेवेऽमलाशयः ।
देवर्षयस्तदंशाश्च भवन्ति क च ज्ञानतः ।। इति ।

अतोऽन्यः कश्चिद् भवति चेत् डाम्भिकत्वेन सोऽनुमेयः । साधारण-पापानां तु सत्सङ्गान्महत्यपि कथञ्चिद् भक्तिर्भवति । साधारण-भक्तिर्वेतरेषाम् ।

'शठमतिरुपयाति योऽर्थतृष्णां तमधमचेष्टमवैहि नास्य(भक्तम्)भक्तिः' । इति हि श्रीविष्णुपुराणे ।

'सा श्रद्दधानस्य विवर्धमाना विरक्तिमन्यत्र करोति पुंसाम्' इति च ।

'वेदाः स्वधीता मम लोकनाथ तप्तं तपो नानृतमुक्तपूर्वम् ।
पूजां गुरूणां सततं करोमि परस्य गुह्यं न च भिन्नपूर्वम् ।
गुप्तानि चत्वारि यथागमं मे शत्रौ च मित्रे च समोऽस्मि नित्यम् ।
तं चापि देवं शरणं प्रपन्नः एकान्तभावेन नमाम्यजस्रम् ।
एतै(रुपायैः)र्विशेषैः परिशुद्धसत्त्वः कस्मान्न पश्येयमनन्तमेनम्' ।।

इति मोक्षधर्मे आचारस्य साधनत्वोक्तेश्च । ज्ञानाभावे च सम्यग्-भक्त्यभावात् । तथाहि गौतमखिलेषु–

'विना ज्ञानं कुतो भक्तिः कुतो भक्तिं विना च तत्' । इति ।
'भक्तिः परे स्वेऽनुभवो विरक्तिरन्यत्र चैष त्रिक एककालम्' इति च भागवते ।। ३१-३४ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीभगवद्गीताभाष्ये नवमोऽध्यायः ।।

## तात्पर्यम्

'पापादिकारिताश्चैव पुंसां स्वाभाविका अपि ।
विप्रत्वाद्यास्तत्र पुण्याः स्वाभाव्या एव मुक्तिगाः ।
यान्ति स्त्रीत्वं पुमांसोऽपि पापतः कामतोऽपि वा ।
न स्त्रियो यान्ति पुंस्त्वं तु स्वभावादेव याः स्त्रियः ।
पुंसा सहैव पुंदेहस्थितिः स्याद् वरदानतः ।
तज्जन्मनि वराः पापजाताभ्यो निजसत्स्त्रियः ।
सर्वेषामपि जीवानामन्त्यदेहो यथा निजः।
मुक्तौ च निजभावः स्यात् कर्मभोगान्ततोऽपि वा'
इति भविष्यत्पर्ववचनात् पापयोनयः पुण्या इति विशेषणम् ।

।। ३२-३४ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभगवद्गीतातात्पर्यनिर्णये नवमोऽध्यायः ।।

*****

# दशमोऽध्यायः

**भाष्यम्**

उपासनार्थं विभूतीर्विशेषकारणत्वं च केषाञ्चिदनेन अध्यायेनाऽह–

**श्री भगवानुवाच**

**भूय एव महाबाहो शृणु मे परमं वचः ।**
**यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥ १ ॥**

**भाष्यम्**

प्रीयमाणाय श्रुत्वा सन्तोषं प्राप्नुवते ॥ १ ॥

**न मे विदुः सुरगणाः प्रभवं न महर्षयः ।**
**अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ २ ॥**

**भाष्यम्**

प्रभवं प्रभावम् । मदीयां जगदुत्पत्तिं वा । तद्वशत्वात् तस्येत्युच्यते । यद्यस्ति तर्हि देवादयो जानन्ति सर्वज्ञत्वात्, अतो नास्तीति भावः । 'अहमादिर्हि' इति तु उत्पत्तिरपि यस्य वशा कुतस्तस्य जनिरिति ज्ञापनार्थम् । 'अहं सर्वस्य जगतः प्रभवः' इति चोक्तम् । उक्तं चैतत् सर्वमन्यत्रापि–

**'को अद्धा वेद क इह प्र वोचत् कुत आजाता कुत इयं विसृष्टिः ।**
**अर्वाग् देवा अस्य विसर्जनेनाथा को वेद यत आ बभूव' ॥ इति ।**
**'न तत्प्रभावमृषयश्च देवा विदुः कुतोऽन्येऽल्पधृतिप्रमाणाः' ।**
**इत्यृग्वेदखिलेषु ।**

अन्यस्त्वर्थो 'यो मामजम्' इति वाक्यादेव ज्ञायते ।। २ ।।

### तात्पर्यम्

उपलक्षणार्थं सुरगणा इत्यादि ।। १,२ ।।

**यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।**
**असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ।। ३ ।।**

### भाष्यम्

अनः चेष्टयिता आदिश्च सर्वस्येत्यनादिः । अजत्वेन सिद्धेरितरस्य ।
।। ३ ।।

### तात्पर्यम्

अनस्यापि आदिः अनादिः ।। ३ ।।

**बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ।**
**सुखं दुःखं भवोऽभावो भयं चाभयमेव च ।। ४ ।।**

**अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।**
**भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ।। ५ ।।**

### भाष्यम्

तत् प्रथयति- बुद्धिरित्यादिना । कार्याकार्यविनिश्चयो बुद्धिः । ज्ञानं प्रतीतिः–

'ज्ञानं प्रतीतिर्बुद्धिस्तु कार्याकार्यवि(निश्चयः)निर्णयः' । इत्यभिधानम् ।

दम इन्द्रियनिग्रहः । शमः परमात्मनिष्ठा– 'शमो मन्निष्ठता बुद्धेर्दम इन्द्रियनिग्रहः' ।। इति हि भागवते ।

तुष्टिरलम्बुद्धिः- 'अलम्बुद्धिस्तथा तुष्टिः' इत्यभिधानात् ।। ४-५ ।।

## तात्पर्यम्

'बुद्धिर्बोधनिधित्वात् तदन्तःकरणमुच्यते' । इति शब्दनिर्णये ।
।। ४-५ ।।

**महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।**
**मद्भावा मानसा जाता येषां लोक इमाः प्रजाः।। ६ ।।**

## भाष्यम्

पूर्वे सप्तर्षयः–

**'मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।**
**वसिष्ठश्च महातेजाः' इति मोक्षधर्मोक्ताः ।**

ते हि सर्वे(सर्व) पुराणेषूच्यन्ते । चत्वार प्रथमाः स्वायम्भुवाद्याः । तेषां हीमाः प्रजाः । नहि भविष्यतामिमाः प्रजा इति युक्तम् । विभागः प्राधान्यं च प्राथमिकत्वादेव भवति ।

तच्चोक्तं गौतमखिलेषु– 'स्वायम्भुवं स्वारोचिषं रैवतं च तथोत्तमम् । वेद यः स प्रजावान्' इति ।

पूर्वेभ्यो ह्युत्तरा जायन्त इति च तेषां प्राधान्यम् । अजातेषु च ज्यैष्ठ्यम् । तापसस्य भगवदवतारत्वादनुक्तिः । तच्च भागवते प्रसिद्धम् । मानसत्वं च सर्वेषां मनूनामुक्तं भागवते–

**'ततो मनून् ससर्जान्ते मनसा लोकभावनान्' । इति ।**

अन्यपुत्रत्वं त्वपरित्यज्यापि शरीरं तद् भवति । प्रमाणं चोभयविध-वाक्यान्यथानुपपत्तिरेव । पूर्वे इति विशेणाच्च एतत्सिद्धिः । मत्तो भावो येषां ते मद्भावाः । ये ते ब्रह्मणो मनसा जातास्ते मत्त एव जाता इति भावः ॥ ६ ॥

### तात्पर्यम्

'मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठश्च महातेजाः पूर्वे सप्तर्षयः स्मृताः' ॥ इति ब्राह्मे ।

'मनवो बोधवैशेष्याद् देवा ब्रह्मादयः स्मृताः ।
विप्रादिवर्णभेदेन चत्वारो बहवोऽपि ते ।
दीनत्वाद् देवनामानस्त्वन्ये ब्रह्मादिनामकाः ।
अवैष्णवकृतो यज्ञो दीनैर्देवैस्तु भुज्यते ।
वैष्णवैस्तु कृतो यज्ञो देवैर्हि मनुनामकैः ।
मरीच्याद्यास्तु तत्पुत्रा मानवा नामतः स्मृताः ।
तत्पुत्रपौत्रा मुनयस्तथा मानवमानवाः ।
तेभ्यो मनुष्या इत्येषा सृष्टिर्विष्णोः समुत्थिता' ॥
इति महाविष्णुपुराणे ॥ ६ ॥

**एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।**
**सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥ ७ ॥**

### तात्पर्यम्

'युज्यते येन योगोऽसावुपायः शक्तिरेव वा' । इति च । विशिष्टभवनं विभूतिः । महत्त्वम् । विविधभवनं वा । योगः सामर्थ्यम् ॥ ७ ॥

**अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।**
**इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ८ ॥**

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ।। ९ ।।

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ।। १० ।।

तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ।। ११ ।।

### भाष्यम्

सन्ति च भजन्तः केचिदित्याह- अहमित्यादिना ।। ८-११ ।।

### तात्पर्यम्

'भजन्ते माम्' इत्यनेन जीवेश्वरैक्यशङ्कां निवर्तयति ।। ८ ।।

मद्गतप्राणाः मद्विषयचेष्टाः ।। ९ ।।

### अर्जुन उवाच

परं ब्रह्म परं धाम पवित्रं परमं भवान् ।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ।। १२ ।।

आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।
असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ।। १३ ।।

सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।
न हि ते भगवन्व्यक्तिं विदुर्देवा न दानवाः ।। १४ ।।

**स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम ।**
**भूतभावन भूतेश देवदेव जगत्पते ॥ १५ ॥**

**भाष्यम्**

ब्रह्म परिपूर्णम्–

'अथ कस्मादुच्यते परं ब्रह्म । बृहति(बृंहति) बृंहयति च' इति हि श्रुतिः । 'बृह बृंह (बृहि) वृद्धौ' इति च पठन्ति । 'परमं यो महद् ब्रह्म' इति च ।

विविधमासीदिति विभुः । तथाहि वारुणशाखायाम्–

'विभु प्रभु प्रथमं मेहनावत इति । स ह्येव प्राभवद् विविधोऽभवत्' इति ।

'सोऽकामयत बहु स्यां प्रजायेय' इत्यादेश्च ॥ १२-१५ ॥

**वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।**
**याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥ १६ ॥**

**भाष्यम्**

विभूतयः विविधभूतयः ॥ १६ ॥

**कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ।**
**केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥ १७ ॥**

**विस्तरेणात्मनो योगं विभूतिं च जनार्दन ।**
**भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥ १८ ॥**

भाष्यम्

न जायतेऽर्दयति च संसारं इति जनार्दनः । तथा च बाभ्रव्यशाखायाम्–

'स भूतः स जनार्दन इति स ह्यासीत् स नाऽसीत् सोऽर्दयति' इति ।
॥ १८ ॥

श्रीभगवानुवाच

हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥ १९ ॥

अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
अहमादिश्च मध्यं च भूतानामन्त एव च ॥ २० ॥

आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २१ ॥

भाष्यम्

विष्णुः सर्वव्यापित्वप्रवेशित्वादेः ।

'विष्लृ व्याप्तौ' 'विश प्रवेशने' इति हि पठन्ति ।

'गतिश्च सर्वभूतानां प्रजानां चापि भारत ।
व्याप्तौ मे रोदसी पार्थ कान्तिश्चाभ्यधिका मम ।
अधिभूतनिविष्टश्च तदिच्छुश्चा(स्मि)पि भारत ।
क्रमणाच्चाप्यहं पार्थ विष्णुरित्यभिसंज्ञितः' ॥ इति मोक्षधर्मे ॥ २१ ॥

वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥ २२ ॥

रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसाम् ।
वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ।। २३ ।।

पुरोधसां च मुख्यं मां विद्धि पार्थ वृहस्पतिम् ।
सेनानीनामहं स्कन्दः सरसामस्मि सागरः ।। २४ ।।

महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ।। २५ ।।

अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।
गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ।। २६ ।।

### भाष्यम्

सुखरूपः पाल्यते लीयते च जगदनेनेति कपिलः–

'प्रीतिः सुखं कं आनन्दः' इत्याद्यभिधानात् । 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इति च ।

'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत् ।

सुखादनन्तात् पालना(ल्लीयनाच्च)ल्लापनाच्च यं वै देवं कपिलमुदाहरन्ति' । इति च बाभ्रव्यशाखायाम् ।। २६ ।।

उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।
ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ।। २७ ।।

आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।
प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ।। २८ ।।

अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।
पितॄणामर्यमा चास्मि यमः संयमतामहम् ॥ २९ ॥

प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥ ३० ॥

पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।
झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥ ३१ ॥

## भाष्यम्

आनन्दरूपत्वात् पूर्णत्वात् लोकरमणाच्च रामः ।

'आनन्दरूपो निष्परीमाण एष लोकश्चैतस्माद् रमते तेन रामः' ।
इति शाण्डिल्यशाखायाम् ।

रश्च अमश्चेति व्युत्पत्तिः ॥ ३१ ॥

सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ३२ ॥

अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ।
अहमेवाक्षयः कालो धाताहं विश्वतोमुखः ॥ ३३ ॥

मृत्युः सर्वहरश्चाहं उद्भवश्च भविष्यताम् ।
कीर्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥३४॥

बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।
मासानां मार्गशीर्षोऽहं ऋतूनां कुसुमाकरः ॥ ३५ ॥

द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।
जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम्।। ३६ ।।

वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः ।
मुनीनामप्यहं व्यासः कवीनामुशना कविः ।। ३७ ।।

### भाष्यम्

आच्छादयति सर्वं वासयति वसति च सर्वत्रेति वासुः । देवशब्दार्थ उक्तः पुरस्तात् ।

'छादयामि जगत् सर्वं भूत्वा सूर्य इवांशुभिः ।
सर्वभूताधिवासश्च वासुदेवस्ततो ह्यहम्' ।। । इति मोक्षधर्मे ।

विशिष्टः सर्वस्मात् आ समन्तात् स एवेति व्यासः । तथाचाऽ-(अग्निवेश्य)ग्रेयशाखायाम्–

'स व्यासो वीति तमब्वै विः सोऽधस्तात् स उत्तरतः स पश्चात् स पूर्वस्मात् स दक्षिणतः स उत्तरत इति' इति ।

'यच्च किञ्चित् जगत् सर्वं दृश्यते श्रूयतेऽपि वा ।
अन्तर्वहिश्च तत् सर्वं व्याप्य नारायणः स्थितः' ।। इति च ।। ३७ ।।

दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ।। ३८ ।।

यच्चापि सर्वभूतानां वीजं तदहमर्जुन ।
न तदस्ति विना यत्स्यात् मया भूतं चराचरम् ।।३९।।

नान्तोऽस्ति मम दिव्यानां विभूतीनां परंतप ।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ४० ॥

## भाष्यम्

मया विना यद् भूतं स्यात् तन्नास्ति । 'विश्वरूपः अनन्तगतिः अनन्तभागः अनन्तगः अनन्तः' इत्यादि हि मोक्षधर्मे ॥ ३९,४० ॥

## तात्पर्यम्

'येषां विष्णुस्वरूपाणां सन्निधेरन्यवस्तुषु ।
विशिष्टत्वं स्वजातेः स्याद् विभूत्याख्यानि तानि तु ।
ब्रह्मनामा ब्रह्मगतः सर्वदेवतसश्रयात् ।
आधिक्यहेतुर्भगवान् सामस्थः सामनामकः ।
आधिक्यहेतुर्वेदेभ्यस्तथाऽश्वत्थस्थितो हरिः ।
उत्कर्षहेतुर्वृक्षेभ्यो य एवाश्वत्थनामकः' ॥ इत्यादि विभूतितत्त्वे ।

'केषु केषु च भावेषु' इत्युक्तत्वाच्च ब्रह्मादिजीवेभ्योऽन्यदेव विभूतिरूपम् ।

'द्विविधं वैभवं रूपं प्रत्यक्षं च तिरोहितम् ।
कपिलव्यासकृष्णाद्यं प्रत्यक्षं वैभवं स्मृतम् ।
भिन्नं ब्रह्मादिजीवेभ्यो जडेभ्यश्चापि तद्गतम् ।
स्वजात्याधिक्यदं तेषां तत् तिरोहितवैभवम्' ॥ इत्यादि च ।

'आत्माऽऽततगुणत्वेन रवज्ञेयो यतो रविः ।
उदवन्मेघचलनान्मरीचिः साम साम्यतः ।
सुखात् सुखत्वात्तु शशी वेदो वेदनतो हरिः ।
वासवर्ती वासवोऽसौ चेतोनेता तु चेतना ।
पालकैर्वननीयत्वात् पवनो वोधनान्मनः ।
पावकः शोधनान्मेरुरीरो यन्माऽस्य सागरः ।

सारस्य गरणात् स्कन्दो जगतः स्कन्दनाद् भृगुः ।
भर्जनाज्जपयज्ञश्च जातपो याज्य एव च ।
अश्वाकारस्थितोऽश्वत्थ ऐरा श्रीश्च तदाश्रयः ।
ऐरावतो नराणां यद् दद्यात् सर्वं स नारदः ।
ह्रीश्रीसमाश्रयत्वाच्च हिमालय इतीरितः ।
वर्ज्यत्वादरिभिर्वज्रो वैनतेयो नतास्पदः ।
वासुकिर्वाससुखदः कन्दर्पः सुखभेदपः ।
अर्यमा ज्ञेयमातृत्वात् काल आकालनादपि ।
वरुणो वरणाद् द्वन्द्वो द्विरूपोऽन्तर्वहिर्यतः ।
मकरो मानकर्तृत्वाद् यमः संयमनाद् विभुः ।
प्रह्लादः स महानन्दो मृगेन्द्रो मृगयत्पतिः ।
जाह्नवी जहतां स्थानमध्यात्मं चाऽत्मनां पतिः ।
विद्या ज्ञप्तिस्वरूपत्वाद् वादो वाच्यत्वतो हरिः ।
कीर्त्यो वक्ताऽऽश्रयः कीर्तिर्वाक् श्रीरिति च नामतः ।
स्मरणीयः स्मृतिर्मेधा क्षमारूपस्तथेर्यते ।
द्यूतं क्रीडापरत्वाच्च गायत्री त्राति गायकान् ।
सत्त्वं साधुगुणत्वाच्च दण्डनाद्दण्ड उच्यते ।
वृहत्सारोऽप्यमेयश्च वृहत्सामोशनोशतेः ।
शुभाशुभज्ञानकरः कुसुमाकर ईरितः ।
ज्ञानं ज्ञानात्मतो मौनं मुनीड्यो नीतिरानयन् ।
मार्गाणामन्तगत्वात्तु मार्गशीर्षः प्रकीर्तितः ।
सुखं पिवन् लीलयैव कपिलो व्यास एव च ।
विशिष्टत्वाद् विष्णुनामा विशिष्टप्राणसौख्यतः ।
एवं नानागुणैर्विष्णुर्नानानामभिरीरितः ।
नानाप्राण्यादिसंस्थश्च विभूतिरिति शब्दितः ।
शश्यादिषु विजातीयस्वाम्यदः सारदः क्वचित् ।
शर्वादिषु सजातीयश्रैष्ठ्यदत्वेन संस्थितः ।

शक्रोशनार्जुनाद्येषु सजातीयैकदेशतः ।
देवेष्वभ्यधिको ब्रह्मा यतो विष्णोरनन्तरः ।
कवित्वादिगुणेष्वेवं यत्समो नास्ति कश्चन ।
तथा भीमश्च पार्थेषु ज्ञानं यज्ञेषु चोत्तमम् ।
सुदर्शनश्चाऽयुधेषु वेदेष्वृग्वेद एव च' ।। इत्यादि विभूतितत्त्वे ।

क्वचित् साम्न आधिक्यमभिमान्यपेक्षया– 'ऋचः श्रीर्गीरुमाद्याश्च साम्नः प्राणशिवादयः' इत्याद्यभिमानिभेदात् । तत्रापि यथायोग्यम् ।
।। २१-४० ।।

**यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।**
**तत्तदेवावगच्छ त्वं मम तेजोंशसम्भवम् ।। ४१ ।।**

### भाष्यम्

यद्यद् विभूतिमदिति विस्तरः । विष्ण्वादीनि तु स्वरूपाण्येव । अन्यानि तु तेजोंऽशयुक्तानि ।

तथा च पैङ्गिखिलेषु–

'विशेषका रुद्रवैन्येन्द्रदेवराजन्याद्या अंशयुतान्यजीवाः ।
कृष्णव्यासौ रामकृष्णौ च रामः कपिलयज्ञप्रमुखाः स्वयं सः' ।। इति ।

'स एवैको भार्गवदाशरथिकृष्णाद्यास्त्वंशयुता अन्यजीवाः' इति च ।
गौतमखिलेषु ।

'ऋषयो मनवो देवा मनुपुत्रा महौजसः ।
कलाः सर्वे हरेरेव सप्रजापतयः स्मृताः'
एते स्वांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्' ।।

इति च भागवते ऋष्यादीनंशयुतत्वेनोक्त्वा वराहादीन् स्वरूपत्वेनाऽह ।

तु शब्द एवार्थे । अन्यस्तु विशेषो न कुत्राप्यवगतः । अंशत्वं च तत्राप्यवगतम्- 'उद्ब्बर्हाऽत्मनः केशौ' इति । 'मृडयन्ति' इति बहुवचनं चायुक्तम् । नह्यन्तराऽन्यदुक्त्वा पूर्वमपरामृश्य तत्क्रिया उच्यमाना दृष्टा कुत्रचित् ।। ४१ ।।

## तात्पर्यम्

मम तेजोंशेन संयुक्तं भवति ।। ४१ ।।

**अथवा बहुनैतेन किं ज्ञातेन तवार्जुन ।**
**विष्टभ्याहमिदं कृत्स्नं एकांशेन स्थितो जगत् ।। ४२ ।।**

।। ओं तत्सदिति श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विभूतियोगो नाम दशमोऽध्यायः ।।

## भाष्यम्

किमिति वक्ष्यमाणप्राधान्यज्ञापनार्थम् । न तूक्तनिष्फलत्वज्ञापनाय । तथा सति नोच्येत ।

'अज्ञात्वै(वं)नं सर्वविशेषयुक्तं देवं परं को हि मुच्येत बन्धात्' । इति च ऋग्वेदखिलेषु ।

त्वं तु बहुफलप्राप्तियोग्य इति तवेति विशेषणम् । अन्यस्तुत्यर्थत्वेन प्रसिद्धश्चैकत्र किंशब्दः–

'रागद्वेषौ यदि स्यातां तपसा किं प्रयोजनम् ।
रागद्वेषौ न चेत् स्यातां तपसा किं प्रयोजनम्' ।। इत्यादौ ।

प्राधान्यं च सिद्धमेकत्र दर्शनात् सर्वत्र भगवद्दर्शनस्य 'यो मां पश्यति सर्वत्र' इत्यादौ ।। ४२ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीभगवद्गीताभाष्ये दशमोऽध्यायः ।।

## तात्पर्यम्

'किं ज्ञातेन' इति वक्ष्यमाणस्याधिकफलत्वज्ञापकमेव । अन्यथोक्तेरेव वैयर्थ्यात् ।

'अन्याधिक्यज्ञापनार्थं शुभं चाऽऽक्षिप्यते क्वचित् ।
न तावताऽस्य निन्द्यत्वं ज्ञेयैवान्यवरिष्ठता ।
उभयं मिलितं चैव ततोऽप्यधिकशोभनम्' ।। इति च ।। ४२ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीभगवद्गीतातात्पर्यनिर्णये दशमोऽध्यायः ।।

*****

# एकादशोऽध्यायः

### भाष्यम्

यथा श्रुते ध्यानं कर्तुं शक्यं तथा स्वरूपस्थितिरनेनाध्यायेनोच्यते-

### अर्जुन उवाच

मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।
यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ १ ॥

भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ।
त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ २ ॥

एवमेतद्यथात्थ त्वमात्मानं परमेश्वर ।
द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ ३ ॥

मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।
योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥ ४ ॥

### भाष्यम्

प्रभुः समर्थः–

'नास्ति तस्मात् परं भूतं पुरुषाद्वै सनातनात्' । इति हि मोक्षधर्मे ।
'प्रभुरीशः समर्थश्च' इत्यादि चाभिधानम् ॥ १-४ ॥

### श्रीभगवानुवाच

पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५ ॥

पश्यादित्यान्वसून् रुद्रानश्विनौ मरुतस्तथा ।
वहून्यदृष्टपूर्वाणि पश्याऽश्चर्याणि भारत ।। ६ ।।

इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।
मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ।। ७ ।।

न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ।। ८ ।।

सञ्जय उवाच

एवमुक्त्वा ततो राजन्महायोगेश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ।। ९ ।।

भाष्यम्

हरिः सर्वयज्ञादिभागहरत्वात्–

'इडोपहूतं गेहेषु हरे भागं क्रतुष्वहम् ।
वर्णो मे हरितः श्रेष्ठस्तस्माद्धरिरिति स्मृतः' ।। इति हि मोक्षधर्मे ।
।। ९ ।।

अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ।। १० ।।

दिव्यमाल्याम्वरधरं दिव्यगन्धानुलेपनम् ।
सर्वाश्चर्यमयं देवं अनन्तं विश्वतो मुखम् ।। ११ ।।

### भाष्यम्

सर्वाश्चर्यमयं सर्वाश्चर्यात्मकम् ।। १०, ११ ।।

**दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।**
**यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः।। १२ ।।**

### भाष्यम्

सहस्रशब्दोऽनेकवाची । तदपि 'पाकशासनविक्रमः' इत्यादिवत् प्रत्यायनार्थमेव । तथाहि ऋग्वेदखिलेषु–

'अनन्तशक्तिः परमोऽनन्तवीर्यः सोऽनन्ततेजाश्च ततस्ततोऽपि' । इति ।

महातात्पर्याच्च बाहुल्यम् । न च परिमाणोक्त्या किञ्चित् प्रयोजनम् । ।। १२ ।।

**तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।**
**अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ।। १३ ।।**

**ततः स विस्मयाविष्टो हृष्टरोमा धनञ्जयः ।**
**प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ।। १४ ।।**

### तात्पर्यम्

'आत्मानमव्ययम्' 'परमं रूपमैश्वरम्' 'सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम्' इत्यादिरूपविशेषणाच्च रूपस्येश्वरसाक्षात्स्वरूपत्वं नित्यत्वं तत एव चिदानन्दाद्यात्मकत्वं च सिद्धम् । 'मम देहे' इत्युक्तत्वाच्चाऽदित्यादीनां भेदः सिद्धः । 'मे रूपाणि' 'सर्वतोऽनन्तरूपम्' इत्यादेः 'द्रष्टुमिच्छामि ते रूपम्' इत्यादेश्चैकस्यैवाभिन्नानन्तरूपत्वं च ।

'एकं रूपं हरेर्नित्यमचिन्त्यैश्वर्ययोगतः ।
बहुसङ्ख्यागोचरं च विशेषादेव केवलम् ।
अभावो यत्र भेदस्य प्रमाणावसितो भवेत् ।
विशेषनामा तत्रैव विशेषव्यवहारवान् ।
विशेषोऽपि स्वरूपं स स्वनिर्वाहक एव च ।
द्रव्यात्मना स नित्योऽपि विशेषात्मैव जायते ।
नित्या एव विशेषाश्च केचिदेवं द्विधैव सः ।
वस्तुस्वरूपमस्त्येवेत्येवमादिष्वभेदिनः ।
विशेषोऽनुभवादेव ज्ञायते सर्ववस्तुषु ।
नचाविशेषितं किञ्चिद् वाच्यं लक्ष्यं तथा मितम् ।
विशिष्टस्य स्वतोऽन्यत्वे स्वस्यामेयत्वहेतुतः ।
नैव ज्ञेयं विशिष्टं च मानाभावाच्च नो भवेत् ।
स्वयमित्यपि हि स्वत्वविशेषेण विवर्जितम् ।
न ज्ञेयं तद्विशेष्यं च तथैवेत्यनवस्थितिः ।
अभेदे न विरोधोऽस्ति ज्ञाताज्ञातं यतोऽखिलम् ।
तदेव ज्ञातरूपेण ज्ञातमज्ञातमन्यथा ।
अभिन्नस्य विशिष्टत्वान्न दोषद्वयमप्युत ।
एकत्वानुभवाच्चैव विशेषानुभवादपि ।
तज्ज्ञानानुभवाच्चैव न दोषद्वयसम्भवः ।
भेदाभेदौ च तेनैव (तौ नैव) कर्तृभोक्तृविशेषणे ।
मदन्य इत्यनुभवो यतो नैवास्ति कस्यचित् ।
भेदो विशेषणस्यापि नाऽन्तरस्य क्वचिद् भवेत् ।
शुद्धस्वरूप इत्यादावभेदस्यैव दर्शनात् ।
अपृथग्दृष्टिनियमाद् बलज्ञानादिकस्य च ।
ऐक्यं बाह्यविशेषाणां पृथग्दृष्ट्यैव तन्न तु ।
विशेषहेत्वभावेऽपि द्वैविध्यं कल्प्यते यदि ।
कल्पनागौरवाद्यास्तु दोषास्तत्रातिसङ्गताः ।

नैकत्वं वाऽपि नानात्वं नियमादस्त्यचेतने ।
भेदाभेदावनुभवादतस्तत्रान्यथागतेः ।
एको मदन्यतोऽन्यश्चेत्येवमेव व्यवस्थितौ ।
भेदाभेदौ चेतनेषु तस्मान्नैकप्रकारता ।
एकमित्येव यज्ज्ञातं वहुत्वेनैव तत् पुनः ।
पटाद्यं ज्ञायते यस्माद् भेदाभेदौ कुतो न तत् ।
तन्तुभ्योऽन्यः पटः साक्षात् कस्य दृष्टिपथं गतः ।
अनन्यश्चेत् तन्तुभावे पटाभावः कुतो भवेत् ।
न चाऽत्मनि विशेषोऽत्र दृष्टान्तत्वं गमिष्यति ।
शुद्धोऽहंप्रत्ययो यस्मात् तत्राभेदप्रदर्शकः ।
अत्रावयवभेदेन स्यादेव ह्यनवस्थितिः ।
न चानवयवं वस्तु क्वचित् स्यान्मानगोचरम् ।
पूर्वापरादिभेदेन यतोंऽशोऽस्यावगम्यते ।
उपाधिरप्येकदेशसम्वद्धः सन्तमेव हि ।
ज्ञापयेद् भेदमखिलं ग्रसन् स विभजेत् कथम् ।
तस्माद् गुणादिकमपि नास्त्यनंशतया क्वचित् ।
भावाभावव्यवहृतेर्विद्यमानेऽपि वस्तुनि ।
भेदाभेदौ गुणादेश्च जडे वस्तुनि संस्थितौ ।
चेतने शक्तिरूपेण गुणादेर्भाव इष्यते ।
सुप्तोऽयं वलवान् विद्वानित्यादिव्यवहारतः ।
नचैवं शक्तिरूपेण जडे व्यवहृतिः क्वचित् ।
एकमेवाद्वितीयं तन्नेह नानाऽस्ति किञ्चन ।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ।
यथोदकं दुर्गे वृष्टं पर्वतेपु विधावति ।
एवं धर्मान् पृथक् पश्यंस्तानेवानुविधावति ।
इत्यादिश्रुतिमानाच्च परमैश्वर्यतस्तथा ।
सर्वं तु घटते विष्णौ यत् कल्याणगुणात्मकम्' ।। इत्यादि ब्रह्मतर्के ।

।। १-१४ ।।

अर्जुन उवाच

पश्यामि देवांस्तव देव देहे
सर्वांस्तथा भूतविशेषसङ्घान् ।
ब्रह्माणमीशं कमलासनस्थं
ऋषींश्च सर्वान् उरगांश्च दिव्यान् ॥ १५ ॥

तात्पर्यम्

कमलासने ब्रह्मणि स्थितं रुद्रम्–

'विष्णुं समाश्रितो ब्रह्मा ब्रह्मणोऽङ्कगतो हरः ।
हरस्याङ्गविशेषेषु देवाः सर्वेऽपि संस्थिताः' ॥ इति पाद्मे ॥ १५ ॥

अनेकवाहूदरवक्त्रनेत्रं
पश्यामि त्वां सर्वतोऽनन्तरूपम् ।
नान्तं न मध्यं न पुनस्तवाऽदिं
पश्यामि विश्वेश्वर विश्वरूप ॥ १६ ॥

भाष्यम्

अनेकशब्दोऽनन्तवाची । 'अनन्तबाहुम्' इति वक्ष्यति । 'सर्वतः पाणिपादं तत्' इत्यादि च ।

'विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् ।
सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एकः' ॥
इति ऋग्वेदे ।

'विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पात् ।
सं बाहुभ्यां नमति सं पतत्रैर्द्यावापृथिवी जनयन् देव एकः' ॥
इति यजुर्वेदे च ।

विश्वशब्दश्चानन्तवाची–

‘सर्वं समस्तं विश्वं च अनन्तं पूर्णमेव च’ । इत्यभिधानात् ।

‘अनन्तपादं तमनन्तबाहुमनन्तवक्त्रं पुरुरूपमेकम्’ ।।

इति च बाभ्रव्यशाखायाम् ।

महत्त्वाद्युक्तिस्तु तदात्मकत्वेनापि भवति । अन्यथा ‘अनादिमत् परं ब्रह्म’ इत्याद्ययुक्तं स्यात् । एकत्र त्वनन्तान्यस्य रूपाणीत्यनन्तरूपः । अन्यत्र त्वपरिमाण इति ।

उक्तं ह्युभयमपि ‘परात् परं यन्महतो महान्तम्’ ‘यदेकमव्यक्तमनन्त-रूपम्’ इति यजुर्वेदे । अव्यक्तस्यानन्तत्वादेव महतो महत्त्वेऽपरिमेयत्वं सिद्ध्यति ।

**‘महान्तं च समावृत्य प्रधानं समवस्थितम् ।**
**अनन्तस्य न तस्यान्तः सङ्ख्यानं चापि विद्यते’ ।। इत्यादित्यपुराणे ।**

तानि चैकैकानि रूपाण्यनन्तानीति चैकत्र भवन्ति(भवति) ।

**‘असङ्ख्याता ज्ञानकास्तस्य देहाः सर्वे परीमाणविवर्जिताश्च’ ।**

**इति हि ऋग्वेदखिलेषु ।**

**‘यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः ।**
**उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते ।**
**उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ’ ।। इति च ।**

**‘कृष्णस्य गर्भजगतोऽतिभरावसन्नपार्ष्णिप्रहारपरिरुग्णफणातपत्रम्’ ।**

**इति च भागवते ।**

न चैतदयुक्तम् । अचिन्त्यशक्तित्वादीश्वरस्य ।

**'अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्'** ।

इति श्रीविष्णुपुराणे ।

**'नैषा तर्केण मतिरापनेया'** इति च श्रुतिः ।

अतिप्रसङ्गस्तु महातात्पर्यवशाद् वाक्यबलाच्चापनेयः । नहि घटवत् कश्चिदपि पदार्थो न दृष्ट इत्येतावता प्रमाणदृष्टः स निराक्रियते । केषुचित् पदार्थेषु वाक्यव्यवस्थाऽचिन्त्यशक्तित्वाभावादङ्गीक्रियते ।

**'गुणाः श्रुताः सुविरुद्धाश्च देवे सन्त्यश्रुता अपि नैवात्र शङ्का ।
चिन्त्या अचिन्त्याश्च तथैव दोषाः श्रुताश्च नाङ्गैर्हि तथा प्रतीताः ॥
एवं परेऽन्यत्र श्रुताश्रुतानां गुणागुणानां च क्रमाद् व्यवस्था'** ॥

इति जावालखिलश्रुतेश्च ।

उपचारत्वपरिहाराय 'न मध्यम्' इति । अन्यथाऽऽद्यन्ताभावेनैव तत्सिद्धेः । विश्वरूपः पूर्णरूपः–

**'स विश्वरूपोऽनूनरूपो यतोऽयं सोऽनन्तो नहि नाशोऽस्ति तस्य'**

इति शाण्डिल्यशाखायाम् ॥ १६ ॥

**किरीटिनं गदिनं चक्रिणं च
तेजोराशिं सर्वतो दीप्तिमन्तम् ।
पश्यामि त्वां दुर्निरीक्ष्यं समन्ता-
द्दीप्तानलार्कद्युतिमप्रमेयम् ॥ १७ ॥**

**भाष्यम्**

अनलार्कद्युतिमित्युक्ते मितत्वशङ्कामपाकरोति - **अप्रमेयमिति** ॥ १७ ॥

त्वमक्षरं परमं वेदितव्यं
त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययः शाश्वतधर्मगोप्ता-
सनातनस्त्वं पुरुषो मतो मे ॥ १८ ॥

अनादिमध्यान्तमनन्तवीर्य-
मनन्तबाहुं शशिसूर्यनेत्रम् ।
पश्यामि त्वां दीप्तहुताशवक्त्रं
स्वतेजसा विश्वमिदं तपन्तम् ॥ १९ ॥

**भाष्यम्**

शशिसूर्यनेत्रमित्यपि 'अहं क्रतुः' इत्यादिवत् ।

'तदङ्गजाः सर्वसुरादयोऽपि तस्मात् तदङ्गेत्यृषिभिः स्तुतास्ते' ।
इत्यृग्वेदखिलेषु ।

'चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत' । इति च ।

बहुरूपत्वाद् बह्वङ्गत्वं च तेषां युक्तम् ॥ १८, १९ ॥

द्यावापृथिव्योरिदमन्तरं हि
व्याप्तं त्वयैकेन दिशश्च सर्वाः ।
दृष्ट्वाद्भुतं रूपमुग्रं तवेदं
लोकत्रयं प्रव्यथितं महात्मन् ॥ २० ॥

## भाष्यम्

**'मातापित्रोरन्तरगः स एकरूपेण चान्यैः सर्वगतः स एकः' ।**

इति वारुणश्रुतेरेकेन रूपेण द्यावापृथिव्योरन्तरं प्राप्तो (व्याप्तो भवति) भाति । 'पश्य मे पार्थ रूपाणि' इति बहूनि हि रूपाणि प्रतिज्ञातानि । मातापितरौ च पृथिवीद्यावौ- 'मा नो माता पृथिवी दुर्मतौ धात्' 'मधु द्यौरस्तु नः पिता' इत्यादिप्रयोगात् । न तु नियमतो भयप्रदं तत्स्वरूपम् । नारदस्य तदभावात् । केषाञ्चित् तथा दर्शयति भगवान् ।

**'प्रीयन्ति केचित् तस्य रूपस्य दृष्टौ विभेति कश्चिदभ्यसे सर्वतृप्तिः' ।**
इति हि वारुणशाखायाम् ।

न तु तं सर्वे पश्यन्ति अदृष्ट्वाऽपि तन्निरूप्यभये द्रष्टुस्तथा प्रतिभाति । तथा च गौतमखिलेषु–

**'दृष्ट्वा देवं मोदमाना अदृष्ट्वाऽप्येतद्भयाद् विभ्यतो दृष्टवत् ते ।**
**पश्यन्ति तन्नस्तचक्षुर्मुखांस्तु तस्मिन्नेवैते मनसो गतत्वात्' ।।** इति ।
।। २० ।।

## तात्पर्यम्

द्यावापृथिव्योरन्तरमेकेनैव रूपेण व्याप्तम् । 'नान्तं न मध्यम्' इत्युक्तत्वात् पुनः 'अनादिमध्यान्तम्' इति गुणानन्त्यापेक्षया । 'त्वया ततं विश्वमनन्तरूप' इति कालापेक्षया । स्वयमन्तं विद्यमानमपि न पश्यतीत्याशङ्क्य 'त्वया ततं विश्वम्' इत्याह । अन्यत् तात्पर्यज्ञापनायाभ्यासरूपम् । 'सर्वं समाप्नोषि ततोऽसि सर्वः' इति 'सर्वं खल्विदं ब्रह्म' इत्यादिषु सर्वशब्दव्याख्यानरूपम् ।

'त्रिलोकेषु स्थितैर्भक्तैरर्जुनाय प्रदर्शितम् ।
दृष्टं विष्णोर्विश्वरूपं स्वयोग्यत्वानुरूपतः ।
प्रायः सहैव पार्थेन प्रायो भीताश्च तेऽखिलाः ।
दर्शनाभ्यासतो दृष्टिरानन्दोद्रेकता भवेत् ।
तस्मिन् काले तु भूमेश्च भारहारार्थमुद्यमात् ।
उग्रत्वमिव सर्वत्र न भीतिर्ब्रह्मदर्शिनाम् ।
अर्जुनादधिका ये तु तेषां भीतिर्न चाभवत् ।
श्रीब्रह्मरुद्रपूर्वाणां कृष्णाया भीमरामयोः' ।। इत्याग्नेयवचनात् ।
'दृष्ट्वाऽद्भुतं रूपम्' इत्यादि युज्यते ।। १९,२० ।।

अमी हि त्वां सुरसङ्घा विशन्ति
केचिद्भीताः प्राञ्जलयो गृणन्ति ।
स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घाः
स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ।। २१ ।।

रुद्रादित्या वसवो ये च साध्या
विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।
गन्धर्वयक्षासुरसिद्धसङ्घा
वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ।। २२ ।।

रूपं महत्ते वहुवक्त्रनेत्रं
महावाहो वहुवाहूरुपादम् ।
वहूदरं वहुदंष्ट्राकरालं
दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ।। २३ ।।

नभःस्पृशं दीप्तमनेकवर्णं
व्यात्ताननं दीप्तविशालनेत्रम् ।
दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा
धृतिं न विन्दामि शमं च विष्णो ॥ २४ ॥

दंष्ट्राकरालानि च ते मुखानि
दृष्ट्वैव कालानलसन्निभानि ।
दिशो न जाने न लभे च शर्म
प्रसीद देवेश जगन्निवास ॥ २५ ॥

अमी च त्वां धृतराष्ट्रस्य पुत्राः
सर्वे सहैवावनिपालसङ्घैः ।
भीष्मो द्रोणः सूतपुत्रस्तथासौ
सहास्मदीयैरपि योधमुख्यैः ॥ २६ ॥

वक्त्राणि ते त्वरमाणा विशन्ति
दंष्ट्राकरालानि भयानकानि ।
केचिद्विलग्ना दशनान्तरेषु
संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥ २७ ॥

यथा नदीनां बहवोऽम्बुवेगाः
समुद्रमेवाभिमुखा द्रवन्ति ।
तथा तवामी नरलोकवीरा
विशन्ति वक्त्राण्यभिविज्वलन्ति ॥ २८ ॥

यथा प्रदीप्तं ज्वलनं पतङ्गा
विशन्ति नाशाय समृद्धवेगाः ।
तथैव नाशाय विशन्ति लोका-
स्तवापि वक्त्राणि समृद्धवेगाः ॥ २९ ॥

लेलिह्यसे ग्रसमानः समन्तात्-
लोकान् समग्रान्वदनैर्ज्वलद्भिः ।
तेजोभिरापूर्य जगत्समग्रं
भासस्तवोग्राः प्रतपन्ति विष्णो ॥ ३० ॥

आख्याहि मे को भवानुग्ररूपो
नमोऽस्तु ते देववर प्रसीद ।
विज्ञातुमिच्छामि भवन्तमाद्यं
न हि प्रजानामि तव प्रवृत्तिम् ॥ ३१ ॥

### भाष्यम्

धर्मान्तरज्ञानार्थमेव को भवानिति पृच्छति । यथा कश्चित् किञ्चि-न्नामादिकं जानन्नपि जातिज्ञानार्थं पृच्छति कस्त्वमिति । यदि तमेव न जानाति तर्हि विष्णो इत्येव सम्बोधना न स्यात् । 'त्वमक्षरम्' इत्यादि च ॥ २१-३१ ॥

### तात्पर्यम्

मुक्ताः सुरसङ्घा विशन्ति । 'प्रवेशो निर्गमश्चैव मुक्तानां स्वेच्छया भवेत्' । इति हि ब्रह्माण्डे ॥ २१-२५ ॥

अन्यचेष्टां कुर्वतामपि भगवच्चेष्टयैव प्रलये प्रजानां प्रवेशवत् प्रवेशो युज्यते । सेनामध्यतो भगवन्मुखानामुभयाभिमुखत्वाच्चोभे सेने तत्र प्रविशतः । ये तु तस्मिन्नेव मुहूर्ते मरिष्यन्ति तेषां दशनान्तरेषु चूर्णितमपि शिरः सूक्ष्मदृष्टिगोचरत्वान्मानुषदृष्ट्या तथा न दृश्यते । यथा भिन्नमपि घटादिकं यावत् पृथङ् न पतति तावन्मन्ददृष्टीनां न ज्ञायते । यथा पुरूरवसो जराऽश्विभ्यामेव दृष्टा ।। २६-३० ।।

विशेषगुणकर्मविषय एव प्रश्नः । 'विष्णो' इति सम्बोधनात् ।। ३१ ।।

**श्रीभगवानुवाच**

**कालोऽस्मि लोकक्षयकृत्प्रवृद्धो**
**लोकान् समाहर्तुमिह प्रवृत्तः ।**
**ऋतेऽपि त्वा न भविष्यन्ति सर्वे**
**येऽवस्थिताः प्रत्यनीकेषु योधाः ।। ३२ ।।**

**भाष्यम्**

कालशब्दो जगद्बन्धनच्छेदनज्ञानादिसर्वभगवद्धर्मवाची । 'कल बन्धने' 'कल च्छेदने' 'कल ज्ञाने' 'कल कामधेनुः' इति हि पठन्ति । प्रसिद्धश्च स शब्दो भगवति ।

'नियतं कालपाशेन वद्धं शक्र विकत्थसे ।
अयं स पुरुषः श्यामो लोकस्य हरति प्रजाः ।
वद्ध्वा तिष्ठति मां रौद्रः पशुं(पशून्) रशनया यथा' ।

इति हि मोक्षधर्मे विष्णुना बद्धो बलिर्वक्ति ।

'विष्णौ चाधीश्वरे चित्तं धारयन् कालविग्रहे' इति हि भागवते ।

प्रवृद्धः परिपूर्णोऽनादिर्वा ।

'ऋतं च सत्यं चाभीद्धात्' इति हि श्रुतिः । 'एतन्महद्भूतमनन्तम्' इति च ।

'प्र विष्णुरस्तु तवसस्तवीयान् त्वेषं ह्यस्य स्थविरस्य नाम' इति च ।

न तु वर्धनम्–

'नासौ जजान न मरिष्यति नैधतेऽसौ' । इति हि भागवते ।

'यस्य दिव्यं हि तद् रूपं हीयते वर्धते न च' इति मोक्षधर्मे ।

'न कर्मणा' इति तु कर्मणाऽपि न, किमु स्वयमिति । लोकान् समाहर्तुमिह विशेषेण प्रवृत्तः । भ्रात्रादींश्चर्त इत्यपिशब्दः । प्रत्यनीकत्वं तु परस्परतया । सर्वे हि न भविष्यन्ति । अक्षोहिण्यादिभेदेन बहुवचनं च युक्तम् ।। ३२ ।।

## तात्पर्यम्

'कालः कलितसम्पूर्णसद्गुणत्वाज्जनार्दनः ।
संहारात् सर्ववित्त्वाद् वा सर्वविद्रावणेन वा' ।। इति महावराहे ।

अपिशब्देन भ्रात्रादीन् अपि ऋते ।। ३२ ।।

तस्मात्त्वमुत्तिष्ठ यशो लभस्व
जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम् ।
मयैवैते निहताः पूर्वमेव
निमित्तमात्रं भव सव्यसाचिन् ।। ३३ ।।

द्रोणं च भीष्मं च जयद्रथं च
कर्णं तथान्यानपि योधवीरान् ।

मया हतांस्त्वं जहि मा व्यथिष्ठा
युध्यस्व जेतासि रणे सपत्नान् ॥ ३४ ॥

### भाष्यम्

योऽस्य शिरश्छिन्नं भूमौ पातयति तच्छिरो भेत्स्यतीति तत्पितुर्वराज्जयद्रथो विशेषेणोक्तः । सवरा वासवी शक्तिरिति कर्णः ।
॥ ३४ ॥

### तात्पर्यम्

जयद्रथस्य पितुर्वरादेव विशेषः । निहताः निहतप्राया । पश्चादर्जुनेऽपि स्थित्वा स एव हनिष्यति ॥ ३४ ॥

### सञ्जय उवाच

एतच्छ्रुत्वा वचनं केशवस्य
कृताञ्जलिर्वेपमानः किरीटी ।
नमस्कृत्वा भूय एवाह कृष्णं
सगद्गदं भीतभीतः प्रणम्य ॥ ३५ ॥

### अर्जुन उवाच

स्थाने हृषीकेश तव प्रकीर्त्या
जगत्प्रहृष्यत्यनुरज्यते च ।
रक्षांसि भीतानि दिशो द्रवन्ति
सर्वे नमस्यन्ति च सिद्धसङ्घाः ॥ ३६ ॥

प्रवृद्धः परिपूर्णोऽनादिर्वा ।

'ऋतं च सत्यं चाभीद्धात्' इति हि श्रुतिः । 'एतन्महद्भूतमनन्तम्' इति च ।

'प्र विष्णुरस्तु तवसस्तवीयान् त्वेषं ह्यस्य स्थविरस्य नाम' इति च ।

न तु वर्धनम्–

'नासौ जजान न मरिष्यति नैधतेऽसौ' । इति हि भागवते ।

'यस्य दिव्यं हि तद् रूपं हीयते वर्धते न च' इति मोक्षधर्मे ।

'न कर्मणा' इति तु कर्मणाऽपि न, किमु स्वयमिति । लोकान् समाहर्तुमिह विशेषेण प्रवृत्तः । भ्रात्रादींश्चर्त इत्यपिशब्दः । प्रत्यनीकत्वं तु परस्परतया । सर्वे हि न भविष्यन्ति । अक्षोहिण्यादिभेदेन बहुवचनं च युक्तम् ।। ३२ ।।

## तात्पर्यम्

'कालः कलितसम्पूर्णसद्गुणत्वाज्जनार्दनः ।
संहारात् सर्ववित्त्वाद् वा सर्वविद्रावणेन वा' ।। इति महावराहे ।

अपिशब्देन भ्रात्रादीन् अपि ऋते ।। ३२ ।।

तस्मात्त्वमुत्तिष्ठ यशो लभस्व
जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम् ।
मयैवैते निहताः पूर्वमेव
निमित्तमात्रं भव सव्यसाचिन् ।। ३३ ।।

द्रोणं च भीष्मं च जयद्रथं च
कर्णं तथान्यानपि योधवीरान् ।

मया हतांस्त्वं जहि मा व्यथिष्ठा
युध्यस्व जेतासि रणे सपत्नान् ।। ३४ ।।

### भाष्यम्

योऽस्य शिरश्छिन्नं भूमौ पातयति तच्छिरो भेत्स्यतीति तत्पितुर्व-राज्जयद्रथो विशेषेणोक्तः । सवरा वासवी शक्तिरिति कर्णः ।
।। ३४ ।।

### तात्पर्यम्

जयद्रथस्य पितुर्वरादेव विशेषः । निहताः निहतप्राया । पश्चादर्जुनेऽपि स्थित्वा स एव हनिष्यति ।। ३४ ।।

### सञ्जय उवाच

एतच्छ्रुत्वा वचनं केशवस्य
कृताञ्जलिर्वेपमानः किरीटी ।
नमस्कृत्वा भूय एवाह कृष्णं
सगद्गदं भीतभीतः प्रणम्य ।। ३५ ।।

### अर्जुन उवाच

स्थाने हृषीकेश तव प्रकीर्त्या
जगत्प्रहृष्यत्यनुरज्यते च ।
रक्षांसि भीतानि दिशो द्रवन्ति
सर्वे नमस्यन्ति च सिद्धसङ्घाः ।। ३६ ।।

### भाष्यम्

यदेतद् वक्ष्यमाणं तत् स्थाने युक्तमेवेत्यर्थः । अग्नीषोमाद्यन्तर्यामितया जगद्धर्षणात् हृषीकेशः । केशत्वं त्वंशूनां तन्नियन्तृत्वादेः । प्रमाणं तु 'शशिसूर्यनेत्रम्' इत्यत्रोक्तम् । हृषीकाणामिन्द्रियाणामीशत्वाच्च हृषीकेशः । तेषां विशेषेणेशत्वं च 'यः प्राणे तिष्ठन्' इत्यादौ सिद्धम् । 'न मे हृषीकाणि पतन्त्यसत्पथे' इत्यादिप्रयोगाच्च । इतरोऽर्थो मोक्षधर्मे सिद्धः–

'सूर्याचन्द्रमसौ शश्वत् केशैर्मे अंशुसंज्ञितैः ।
वोधयन् स्थापयंश्चैव जगदुत्पद्यते पृथक् ।
वोधनात् स्थापनाच्चैव जगतो हर्षसम्भवात् ।
अग्नीषोमकृतैरेभिः कर्मभिः पाण्डुनन्दन ।
हृषीकेशो(ऽहमीशानो)महेशानो वरदो लोकभावनः' इति ।। ३५, ३६ ।।

**कस्माच्च ते न नमेरन्महात्मन्**
**गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।।**
**अनन्त देवेश जगन्निवास**
**त्वमक्षरं सदसत्तत्परं यत् ।। ३७ ।।**

### भाष्यम्

कथं स्थान इति ? तदाह– **कस्मादित्यादिना** । पूर्णश्चासौ आत्मा चेति महात्मा । आत्मशब्दश्चोक्तो भारते–

'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य सन्ततो भावस्तस्मादात्मेति भण्यते' ।। इति ।

तत्परं सदसतोः परम् ।

'असच्च सच्चैव च यद् विश्वं सदसतः परम्' इति च भागवते ।
॥ ३७ ॥

त्वमादिदेवः पुरुषः पुराण-
स्त्वमस्य विश्वस्य परं निधानम् ।
वेत्ताऽसि वेद्यं च परं च धाम
त्वया ततं विश्वमनन्तरूप ॥ ३८ ॥

वायुर्यमोऽग्निर्वरुणः शशाङ्कः
प्रजापतिस्त्वं प्रपितामहश्च ।
नमो नमस्तेऽस्तु सहस्रकृत्वः
पुनश्च भूयोऽपि नमो नमस्ते ॥ ३९ ॥

## तात्पर्यम्

वायुर्वलज्ञानयोगात् शशाङ्कोऽतिसुखाङ्कितः ।
इन्द्रः स परमैश्वर्यादिति नानाभिधो हरिः । इति च ॥ ३९ ॥

नमः पुरस्तादथ पृष्ठतस्ते
नमोऽस्तु ते सर्वत एव सर्व ।
अनन्तवीर्यामितविक्रमस्त्वं
सर्वं समाप्नोषि ततोऽसि सर्वः ॥ ४० ॥

सखेति मत्वा प्रसभं यदुक्तं
हे कृष्ण हे यादव हे सखेति ।
अजानता महिमानं तवेदं
मया प्रमादात् प्रणयेन वापि ॥ ४१ ॥

यच्चापहासार्थमसत्कृतोऽसि
विहारशय्यासनभोजनेषु ।
एकोऽथवाप्यच्युत तत्समक्षं
तत्क्षामये त्वामहमप्रमेयम् ॥ ४२ ॥

### भाष्यम्

एकस्त्वमेव कारयिता नान्योऽस्ति, अथापि ॥ ४२ ॥

### तात्पर्यम्

एकः सर्वोत्तमोऽप्यसत्कृतः । 'एकः सर्वाधिको ज्ञेय एष एव करोति यत्' इति च ॥ ४२ ॥

पितासि लोकस्य चराचरस्य
त्वमस्य पूज्यश्च गुरुर्गरीयान् ।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो
लोकत्रयेऽप्यप्रतिमप्रभाव ॥ ४३ ॥

तस्मात्प्रणम्य प्रणिधाय कायं
प्रसादये त्वामहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः
प्रियः प्रियायार्हसि देव सोढुम् ॥ ४४ ॥

अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा
भयेन च प्रव्यथितं मनो मे ।
तदेव मे दर्शय देव रूपं
प्रसीद देवेश जगन्निवास ॥ ४५ ॥

किरीटिनं गदिनं चक्रहस्त-
मिच्छामि त्वां द्रष्टुमहं तथैव ।
तेनैव रूपेण चतुर्भुजेन
सहस्रबाहो भव विश्वमूर्ते ।। ४६ ।।

## तात्पर्यम्

तेनैव रूपेण भवेति अनन्तरूपगोपनेन तदेव प्रकाशयेत्यर्थः ।
'पञ्चाननं चिन्त्यमचिन्त्यरूपं पद्मासनं गोपितविश्वरूपम्' ।
इति हि वैहायससंहितायाम् ।। ४६ ।।

## श्रीभगवानुवाच

मया प्रसन्नेन तवार्जुनेदं
रूपं परं दर्शितमात्मयोगात् ।
तेजोमयं विश्वमनन्तमाद्यं
यन्मे त्वदन्येन न दृष्टपूर्वम् ।। ४७ ।।

## तात्पर्यम्

'विश्वनामा स भगवान् यतः पूर्णगुणः प्रभुः' । इति पाद्मे ।

'त्वदन्येन न दृष्टपूर्वम्' इत्यनेन तेनैवेन्द्रशरीरेण दृष्टमिति ज्ञायते । त्वदन्येनेति तदवरापेक्षया । तैरपि तद्वन्न दृष्टमित्येव ।

'विश्वरूपं प्रथमतो ब्रह्माऽपश्यच्चतुर्मुखः ।
तच्छतांशेन रुद्रस्तु तच्छतांशेन वासवः ।
यथेन्द्रेण पुरा दृष्टमपश्यत् सोऽर्जुनोऽपि सन् ।
तदन्ये क्रमयोगेन तच्छतांशादिदर्शिनः' ।। इति ब्रह्माण्डे ।। ४७ ।।

न वेदयज्ञाध्ययनैर्न दानै-
र्न च क्रियाभिर्न तपोभिरुग्रैः ।
एवंरूपः शक्य अहं नृलोके
द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ४८ ॥

### तात्पर्यम्

वेदादिभिरपि त्वदवरेणैवं द्रष्टुमशक्यः । अन्यथा 'दृष्ट्वाऽद्भुतं रूपम्' इत्यादिविरोधः ॥ ४८ ॥

मा ते व्यथा मा च विमूढभावो
दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ।
व्यपेतभीः प्रीतमनाः पुनस्त्वं
तदेव मे रूपमिदं प्रपश्य ॥ ४९ ॥

### सञ्जय उवाच

इत्यर्जुनं वासुदेवस्तथोक्त्वा
स्वकं रूपं दर्शयामास भूयः ।
आश्वासयामास च भीतमेनं
भूत्वा पुनः सौम्यवपुर्महात्मा ॥ ५० ॥

### भाष्यम्

स्वकं रूपं तु भ्रान्तप्रतीत्या । अन्यथा तदपि स्वकमेव । प्रमाणानि तूक्तानि पुरस्तात् ॥ ५० ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीभगवद्गीताभाष्ये एकादशोऽध्यायः ॥

## तात्पर्यम्

स्ववत् क्रियत इति स्वकं रूपम् । विश्वरूपमज्ञानां स्वरूपवन्न दर्शयति । एतदज्ञानामपि तथैव दर्शयतीति विशेषः । अन्यथा 'द्रष्टुमिच्छामि ते रूपम्' इति विरुद्धं स्यात् ।

'परावरविभेदस्तु मुग्धदृष्टिमपेक्ष्य तु ।
प्रादुर्भावस्वरूपाणां विश्वरूपस्य च प्रभोः ।
अन्यथा न विशेषोऽस्ति व्यक्तिर्ह्यज्ञव्यपेक्षया' ।। इति च ।। ५० ।।

## अर्जुन उवाच

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ।। ५१ ।।

## तात्पर्यम्

किञ्चित् मनुष्यवद् दृश्यमानत्वात् मानुषम् ।। ५१ ।।

## श्रीभगवानुवाच

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ।। ५२ ।।

## तात्पर्यम्

ये दर्शनकाङ्क्षिणस्तैरपीदानीं दृष्टप्रायः ।। ५२ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभगवद्गीतातात्पर्यनिर्णये एकादशोऽध्यायः ।।

नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ ५३ ॥

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥ ५४ ॥

मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥ ५५ ॥

॥ ओं तत्सदिति श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विश्वरूपदर्शनयोगो नाम एकादशोऽध्यायः ॥

*****

# द्वादशोऽध्यायः

**भाष्यम्**

अव्यक्तोपासनाद् भगवदुपासनस्योत्तमत्वं प्रदर्श्य तदुपायं प्रदर्शयत्यस्मिन्नध्याये–

**अर्जुन उवाच**

**एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।**
**ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥**

**भाष्यम्**

तदुपासनमपि हि मोक्षसाधनं प्रतीयते–

**'श्रियं वसाना अमृतत्वमायन् भवन्ति सत्या समिथा मितद्रौ'** इति ।

'अनाद्यनन्तं' महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते'. इति च ।

अव्यक्तं च महतः परम्–

'महतः परमव्यक्तम्' इत्युक्तपरामर्शोपपत्तेः ।

**'उपास्य तां श्रियमव्यक्तसंज्ञां भक्त्या मर्त्यो मुच्यते सर्वबन्धैः'** । इति सामवेदे आग्निवेश्यशाखायाम् ।

महच्च माहात्म्यं तस्याः वेदेषूच्यते–

**'चतुष्कपर्दा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते ।**
**तस्यां सुपर्णा वृषणा निषेदतुः यत्र देवा दधिरे भागधेयम्'** ॥ इति ।

'चतुःशिखण्डा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते ।
तस्यां सुपर्णा वृषणा निषेदतुर्यत्र देवा दधिरे भागधेयम्' इति च ।

'अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः' इत्यारभ्य

'अहं राष्ट्री सङ्गमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम् ।
तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्यावेशयन्तीम् ।
मया सो अन्नमत्ति यो वि पश्यति यः प्राणिति य ईं शृणोत्युक्तम् ।
अमन्तवो मां त उप क्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि',

'यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ।
अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्त वाउ' ।

'अहं सुवे पितरमस्य मूर्धन् मम योनिरप्स्वान्तः समुद्रे' ।
'परो दिवा पर एना पृथिव्यैतावती महिना सं बभूव' इत्यादि च ।
'त्वया जुष्ट ऋषिर्भवति देवि त्वया ब्रह्मा गतश्रीरुत त्वया' इति च ।

इति शङ्का कस्यचिद् भवति । अतो जानन्नपि सूक्ष्मयुक्तिज्ञानार्थं पृच्छति– **एवमिति** । एवं शब्देन दृष्टश्रुतरूपं 'मत्कर्मकृत्' इत्यादि-प्रकारश्च परामृश्यते । अव्यक्तं प्रकृतिः 'महतः परमव्यक्तम्' । इति प्रयोगात् ।

'यत्तत् त्रिगुणमव्यक्तं नित्यं सदसदात्मकम् ।
प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत्' ।। इति च भागवते ।

अक्षरं च तत्– 'अक्षरात् परतः परः' इति श्रुतेः । परं तु ब्रह्म न हि भगवतोऽन्यत्– 'आनन्दमानन्दमयो(ऽ)वसाने सर्वात्मके ब्रह्मणि वासुदेवे' इति भागवते । रूपं चेदृशं साधितं पुरस्तात् । उपासनं च तथैव कार्यम्– 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्' इत्यारभ्य 'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते' इति हि साभ्यासा । आदित्यवर्णत्वादिश्च न वृथोपचारत्वेनाङ्गीकार्यः ।

तथा च सामवेदे सौकरायणश्रुतिः–

'स्थाणुर्ह वै प्राजापत्यः । स प्रजापतिं पितरमेत्योवाच । मुमुक्षुभी राधुभिः (मुमुक्षुभिः साधुभिः) पूतपापैः किमु ह वै तारकं तारवाच्यम् । ध्यानं च तस्याऽप्ररुचेः कथं स्याद् ध्येयश्च कः पुरुषोऽलोमपाद इति । तं होवाच । एष वै विष्णुस्तारकोऽलोमपादो ध्यानं च तस्याऽप्र-रुचेर्वदामि । सोऽनन्तशीर्षो बहुवर्णः सुवर्णो ध्येयः स वै लोहितादित्य-वर्णः । श्यामोऽथ वा हृदये सोऽष्टबाहुरनन्तवीर्योऽनन्तबलः पुराणः' । इत्यादि ।

अरूपत्वादेस्तु गतिरुक्ता । पुरुषभेदश्च प्रश्नादौ प्रतीयते– 'त्वां पर्युपासते, ये चाप्यक्षरम्' इत्यादौ ॥ १ ॥

## तात्पर्यम्

साधननिर्णयोऽत्र ।

श्रिये जातः श्रिय आ निरियाय श्रियं वयो जरितृभ्यो दधाति । श्रियं वसाना अमृतत्वमायन् भवन्ति सत्या समिथा मितद्रौ' 'उपासिता मुक्तिदा सद्य एव ह्यस्येशाना जगतो विष्णुपत्नी । या श्रीर्लक्ष्मीरौपला चाम्बिकेति ह्रीश्चेत्युक्ता संविदग्र्या सुविद्या' इत्यादिश्रुतिभ्यः ।

**'श्रीः सुतुष्टा हरेस्तोषं गमयेत् क्षिप्रमेव तु ।**
**अतुष्टा तदतुष्टिं च तस्माद् ध्येयैव सा सदा ।**
**अव्यक्तं प्रकृतिं प्राहुः कूटस्थं चाक्षरं च ताम् ।**
**प्रधानमिति च प्राहुर्महापुरुष इत्यपि ।**
**तां ब्रह्म महदित्याहुः परं जीवं परां चितिम् ।**
**तस्यास्तु परमो विष्णुः यो ब्रह्म परमं महत्' ॥**

इति ब्रह्माण्डवचनाच्चाव्यक्तोपासनान्मोक्षाशङ्कया पृच्छति । 'कूटस्थोऽक्षर उच्यते' इत्युत्तरवचनात् 'कूटस्थमचलम्' इत्यत्राप्युक्तेरव्यक्तशब्दश्चित्प्रकृतिवाची । अन्यथा 'ये त्वां पर्युपासते, ये चाप्यक्षरम्, तेषां के योगवित्तमाः' इति भेदेन प्रश्नानुपपत्तिः । 'परं ब्रह्म परं धाम पवित्रं परमं भवान्' इति तेनैवोक्तत्वात् । ये तु 'ते मे युक्ततमा मताः' 'मय्येव मन आधत्स्व' इत्यादौ भगवतोक्तेऽप्यव्यक्तोपासकानामाधिक्यं वदन्ति ते त्वपलापकत्वादेवातिसाहसिका इति सुशोच्या एव ।।१।।

**श्रीभगवानुवाच**

**मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।**
**श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ।। २ ।।**

**ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।**
**सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ।। ३ ।।**

**सन्नियम्येन्द्रियग्रामं सर्वत्र समवुद्धयः ।**
**ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ।। ४ ।।**

**भाष्यम्**

भवन्तु त्वदुपासका एवोत्तमाः । इतरेषां तु किं फलमित्यत आह– **ये त्वित्यादि** । अनिर्देश्यत्वं चोक्तं भागवते मायायाः– 'अप्रतर्क्याद-निर्देश्यादिति केष्वपि निश्चयः' इति । ईश्वरस्तु दैवशब्दे– नोक्तः- 'दैवमन्येऽपरे' इत्यत्र । उक्तं च सामवेदे काषायणश्रुतौ 'नासदासीन्नो सदासीत् तदानीमिति । न महाभूतं नोपभूतं तदाऽऽसीत्' इत्यारभ्य

'तम आसीत् तमसा गूळ्हमग्र इति । तमो ह्यव्यक्तमजरमनिर्देश्यमेषा ह्येव प्रकृतिः' इति । सर्वगाचिन्त्यादिलक्षणा च सा ।

तथाहि मोक्षधर्मे– 'नारायणगुणाश्रयादजरादतीन्द्रियादग्राह्यादसम्भवत असत्यादहिंस्राल्ललामाद् द्वितीयप्रवृत्तिविशेषादवैरादक्षयादमरादक्षराद-मूर्तितः सर्वस्याः सर्वकर्तुः शाश्वततमसः' । इति ।

**'आसीदिदं तमोऽभूतमप्रज्ञातमलक्षणम् ।**
**अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः' ॥ इति च मानवे ।**

'कूटस्थोऽक्षर उच्यते' इति च वक्ष्यति । कूटे आकाशे स्थिता कूटस्था– 'आकाशसंस्थिता त्वेषा ततः कूटस्थिता मता' इति हि ऋग्वेदखिलेषु ।

'सा सर्वगा निश्चला लोकयोनिः सा चाक्षरा विश्वगा विरजस्का' इति च सामवेदे गौपवनशाखायाम् ॥ २-४ ॥

## तात्पर्यम्

**'अविष्णुज्ञैरतद्भक्तैस्तदुपासाविवर्जितैः ।**
**शपेदुपासिताऽप्येषा श्रीस्तांस्तद्धरितत्त्ववित् ।**
**तद्भक्तस्तमुपास्यैव श्रियं ध्यायीत नित्यदा ।**
**तेन तुष्टा तु साऽच्छिद्रं दद्याद् विष्णोरुपासनम् ।**
**ततस्तद्दर्शनान्मुक्तिं यात्यसौ नात्र संशयः ।**
**तथाऽपि सर्वपरमां सर्वदोषविवर्जिताम् ।**
**ज्ञात्वा श्रियं तत्परमं तत्पतिं पुरुषोत्तमम् ।**
**विज्ञायोपासते नित्यं ते हि युक्ततमा मताः ।**
**यतः क्लेशोऽधिकस्तेषां पृथक् श्रियमुपासताम् ।**

विष्णुना सहिता ध्याता साऽपि तुष्टिं परां व्रजेत् ।
अन्यथा तु पुनर्विष्णोः श्रीपतित्वेन चिन्तनम् ।
अच्छिद्रमेव कर्तव्यमिति मुक्तिश्चिराद् भवेत् ।
तस्मादक्लेशतो मुक्तिः क्षिप्रं विष्णुमुपासताम्' ।। इति परमश्रुतिः ।
युक्ततमाः साधकतमाः ।। २ ।।

'न चलेत् स्वात् पदाद् यस्मादचला श्रीस्ततो मता' । इत्याग्नेये ।

'सूक्ष्मत्वादप्रसिद्धत्वाद् गुणवाहुल्यतस्तथा ।
अनिर्देश्यौ तथाऽव्यक्तावचिन्त्यौ श्रीश्च माधवः' ।। इति नारदीये ।। ३ ।।

**क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।**
**अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ।। ५ ।।**

### भाष्यम्

कथं तर्हि त्वदुपासकानामुत्तमत्वमित्यत आह– **क्लेश इति** । अव्यक्ता गतिर्दुःखं ह्यवाप्यते । गतिर्मार्गः । अव्यक्तोपासनद्वारको मत्प्राप्तिमार्गो दुःखमाप्यत इत्यर्थः । अतिशयोपासनसर्वेन्द्रियातिनियमनसर्वसमबुद्धि-सर्वभूतहितकरत्वातिसुष्ठ्वाचारसम्यग्विष्णुभक्त्यादिसाधनसन्दर्भमृते नाव्यक्तापरोक्ष्यम् । तदृते च न विष्णुप्रसादः । सत्यपि तस्मिन् न सम्यग् भगवदुपासनमृते । नर्ते च तं मोक्षः । विनाऽप्यव्यक्तोपासनं भवत्येव भगवदुपासकानां मोक्ष इति क्लेशिष्टोऽयं मार्ग इति भावः । तथाऽप्यपरोक्षीकृताव्यक्तानां सुकरं भगवदुपासनमित्येतावत् प्रयोजनम् । तत्रापि योऽव्यक्ताऽपरोक्ष्ये प्रयासस्तावता प्रयासेन यदि भगवन्तमुपास्ते, ऊनेन वा, तदा भगवदापरोक्ष्यमेव भवतीति द्वितीयमधिकम् । इन्द्रिय-संयमनाद्यूनभावे सति उपासकस्यापि देवी नातिप्रसादमेति । देवस्तु

तानि साधनानि भक्तिमतः स्वयमेवाप्रयत्नेन ददातीति चातिसौकर्यमिति भक्तानां भगवदुपासने । इतरत्र च क्लेशोऽधिकतरः । तदेतत् सर्वं 'पर्युपासते' 'सन्नियम्य' 'अधिकतरः' इति परि सन् तरप्शब्दैः प्रतीयते । सामवेदे माधुच्छन्दसशाखायां चोक्तम्–

'भक्ताश्च येऽतीव विष्णावतीव जितेन्द्रियाः सम्यगाचारयुक्ताः । उपासते तां समबुद्धयश्च तेषां देवी दृश्यते नेतरेषाम् । दृष्टा च सा भक्तिमतीव विष्णौ दत्वोपास्तौ सर्वविघ्नांश्छिनत्ति । उपास्य तं वासुदेवं विदित्वा ततस्ततः शान्तिमत्यन्तमेति' ।। इति ।

उक्तं च सामवेदे आयास्यशाखायाम्–

**'प्रसन्नो भविता देवः सोऽव्यक्तेन सहैव तु ।**
**यावता तत्प्रसादो हि तावतैव न संशयः ।**
**न तत्प्रसादमात्रेण प्रीयते स महेश्वरः ।**
**तस्मिन् प्रीते तु सर्वस्य प्रीतिस्तु भवति ध्रुवम् ।**
**यद्यप्युपासनाधिक्यं तथाऽपि गुणदो हि सः ।**
**मुक्तिदश्च स एवैको नाव्यक्तादेस्तु कश्चन' ।। इति ।**

**'ममाऽत्मभावमिच्छन्तो यतन्ते परमात्म(ना)ने' ।। इति च मोक्षधर्मे श्रीवचनम् ।**

**'धर्मनित्ये महाबुद्धौ ब्रह्मण्ये सत्यवादिनि ।**
**प्रश्रिते दानशीले च सदैव निवसाम्यहम्' ।। इति च ।**

महतः परं तु ब्रह्मैव । तथाहि भगवता सयुक्तिकमभिहितम्– 'वदतीति चेन्न प्राज्ञो हि' 'त्रयाणामेव चैवमुपन्यासः प्रश्नश्च' इत्यादि । तमिति पुल्लिङ्गाच्चैतत्सिद्धिः । महत्परत्वं त्वव्यक्तपरस्य भवत्येव ।

तथाचाऽग्निवेश्यशाखायाम्– 'अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यत इति । परो हि देवः पुरुहूतो महत्तः इति' इति । नचाव्यक्तस्य रूपं भगवता निषिद्धम् । भारतादौ साधितत्वात् । 'शरीररूपकविन्यस्तगृहीतेः' इत्यादौ तु साङ्ख्यप्रसिद्धं प्रधानं निषिद्ध्य वैदिकमव्यक्तमेवोक्तम् ।

तथा च सौकरायणश्रुतिः–

'शरीररूपिका साऽशरीरस्य विष्णोर्यतः प्रिया सा जगतः प्रसूतिः' इति ।

सुव्रतानां क्षिप्रं महदैश्वर्यं देवी ददाति न देव इति च विशेषः–

'सुवर्णवर्णां पद्मकरां च देवीं सर्वेश्वरीं व्याप्तजडां च वुद्ध्वा ।
सैवेति वै सुव्रतानां तु मासान्महाभूतिं श्रीस्तु दद्यान्न देवः' ।।
इति ऋग्वेदखिलेषु ।। ५ ।।

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ।। ६ ।।

तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ।। ७ ।।

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ।। ८ ।।

अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ।। ९ ।।

**अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।**
**मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि ।। १० ।।**

**अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।**
**सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ।। ११ ।।**

### भाष्यम्

मदुपासकानां न कश्चित् क्लेश इति दर्शयति– ये त्वित्यादिना । उक्तं च सौकरायणश्रुतौ- 'उपासते ये पुरुषं वासुदेवमव्यक्तादेरीप्सितं किं नु तेषाम्' । इति ।

**'तेषामेकान्तिनः श्रेष्ठास्ते चैवानन्यदेवताः ।**
**अहमेव गतिस्तेषां निराशीः कर्मकारिणाम्' ।। इति च मोक्षधर्मे ।**
**।। ६-११ ।।**

**श्रेयो हि ज्ञानमभ्यासात् ज्ञानाद्ध्यानं विशिष्यते ।**
**ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ।। १२ ।।**

### भाष्यम्

अज्ञानपूर्वादभ्यासाज्ज्ञानमात्रमेव विशिष्यते । ज्ञानमात्रात् सज्ञानं ध्यानम् । तथा च सामवेदे आनभिम्लातशाखायाम्–

**'अधिकं केवलाभ्यासाज्ज्ञानं तत्सहितं ततः ।**
**ध्यानं ततश्चाऽपरोक्ष्यं ततः शान्तिर्भविष्यति' ।। इति ।**

'ध्यानात् कर्मफलत्यागः' इति तु स्तुतिः । अन्यथा कथम् 'असमर्थोऽसि' इत्युच्येत ? 'तयोस्तु कर्मसन्न्यसात् कर्मयोगो विशिष्यते' इति चोक्तम् ।

'सर्वाधिकं ध्यानमुदाहरन्ति ध्यानाधिके ज्ञानभक्ती परात्मन् ।
कर्माफलाकाङ्क्षमथो विरागस्त्यागश्च न ध्यानकलाफलार्हः' ।।
इति च काषायणशाखायाम् ।

वाक्यसाम्येऽप्यसमर्थविषयत्वोक्तेस्तात्पर्याभाव इतरत्र प्रतीयते । ध्यानादिप्राप्तिकारणत्वाच्च त्यागस्तुतिर्युक्ता । केवलाद् ध्यानात् फलत्यागयुक्तं ध्यानमधिकम् । ध्यानयुक्तस्त्याग एव चात्रोक्तः । अन्यथा कथम्– 'त्यागाच्छान्तिरनन्तरम्' इत्युच्येत ? कथं च ध्यानादाधिक्यम् ? तथा च गौपवनशाखायाम्– 'ध्यानात्तु केवलात् त्यागयुक्तं तदधिकं भवेत्' इति । न हि त्यागमात्रानन्तरमेव मुक्तिर्भवति । भवति च ध्यानयुक्तात् । केवलत्यागस्तुतिरेवमपि भवति । यथा 'अनेन युक्तो जेता, नान्यथा' इत्युक्ते ।। १२ ।।

## तात्पर्यम्

'विष्णोरन्यं न स्मरेद् यो विना तत्परिवारताम् ।
तदधीनतां वाऽनन्ययोगी स परिकीर्तितः' ।। इति च ।

'अन्तवत्तु फलं तेषाम्' इत्यादिनाऽन्यदेवोपासनायाः पूर्वमेव निन्दितत्वात् लक्ष्म्यास्त्वतिसामीप्याद् विशेषमाशङ्क्य तदुपासनाविषय एव प्रश्नः कृतः ।

'वैष्णवान्येव कर्माणि यः करोति सदा नरः ।
जपार्चामार्जनादीनि स्वाश्रमोक्तानि यानि च ।
स तत्कर्मेति विज्ञेयो योऽन्यदेवादिपूजनम् ।
कृत्वा हरावर्पयति स तु तद्योगमात्रवान् ।
तत्र पूर्वोविशिष्टः स्यादादिमध्यान्ततः स्मृतेः ।
अवान्तरे च नियमाद् विष्णोस्तद्दासताऽस्य यत् ।

मनसा वर्ततेऽन्योऽपि यथाशक्ति हरिस्मृतेः ।
पूर्वोक्तयोग्यो भवति यदि नित्यं तदिच्छति ।
असम्यग्ज्ञानिनो ध्यानाज्ज्ञानमेव विशिष्यते ।
ज्ञात्वा ध्यानं ततस्तस्मात् तत् फलेच्छाविवर्जितम् ।
तस्माज्ज्ञानाद् भवेन्मुक्तिस्त्यागाद्ध्यानयुतात् स्फुटम्'

इति च । शान्तिर्मुक्तिः ।। ४-१२ ।।

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहङ्कारः समदुःखसुखः क्षमी ।। १३ ।।

सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ।। १४ ।।

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ।। १५ ।।

अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ।। १६ ।।

यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः।। १७ ।।

समः शत्रौ च मित्रे च तथा मानापमानयोः ।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ।। १८ ।।

तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केनचित् ।
अनिकेतः स्थिरमतिर्भक्तिमान् मे प्रियो नरः ।। १९ ।।

### भाष्यम्

'सर्वारम्भपरित्यागी' 'शुभाशुभपरित्यागी' इत्यादेः सामान्यविशेष-व्याख्यानव्याख्येयभावेनापुनरुक्तिः । हर्षादिभिर्मुक्त इत्युक्ते कादाचित्क-मपि भवतीति **यो न हृष्यतीत्यादि** । उपचारपरिहारार्थं पूर्वम् । आधिक्यज्ञापनाय भक्त्यभ्यासः । 'ये तु सर्वाणि कर्माणि' इत्यादेः प्रपञ्च एषः ।। १६-१९ ।।

### तात्पर्यम्

अवैष्णवसर्वारम्भपरित्यागी । सर्वारम्भाभिमानत्यागेन फलत्यागेन भगवति समर्पणरूपेण च त्यागी । 'सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः' 'मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा' ।। इत्यादेः ।।

'भक्तिं ज्ञानं च वैराग्यमृते यो नेच्छति क्वचित् ।
शुभाशुभपरित्यागी विद्वद्भिः कीर्तितो हि सः' ।। इति च ।

'प्रायः सुखादिषु समः प्रायो हर्षादिवर्जितः ।
तथोच्यते यथाऽल्पस्वो निःस्व इत्युच्यते बुधैः ।
न हि मुख्यतया साम्यं कस्यचित् सुखदुःखयोः ।
न च हर्षादिसन्त्यागो यावन्मुक्तिः कुतश्चन' ।। इति च ।

'हृतिर्मदादधर्माय हर्षो नाम प्रकीर्तितः' । इति शब्दनिर्णये ।।१६-१९।।

**ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ।। २० ।।**

।। ओं तत्सदिति श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे भक्तियोगो नम द्वादशोऽध्यायः ।।

### भाष्यम्

पिण्डीकृत्योपसंहरति- **ये तु धर्म्यामृतमिति** । धर्मो विष्णुस्तद्विषयं च धर्म्यम्, मृत्यादिसंसारनाशकं चेति धर्म्यामृतम् । श्रत् आस्तिक्यम् । 'श्रन्नामाऽस्तिक्यमुच्यते' इति ह्यभिधानम् । तद् दधानाः श्रद्दधानाः । ।। २० ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीभगवद्गीताभाष्ये द्वादशोऽध्यायः ।।

### तात्पर्यम्

व्यस्तेन प्रियाः समस्तेनातीव प्रियाः । भक्तिस्तु व्यस्तेऽप्युक्तैव । यस्मान्नोद्विजते इत्यत्रापि स चेत्यनेन भक्तिरनुषज्यते । धर्मसाधनं धर्म्यं तदेवामृतसाधनममृतं धर्म्यामृतम् ।। २० ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीभगवद्गीतातात्पर्यनिर्णये द्वादशोऽध्यायः ।।

*****

# त्रयोदशोऽध्यायः

### भाष्यम्

पूर्वोक्तज्ञानज्ञेयक्षेत्रपुरुषान् पिण्डीकृत्य विविच्य दर्शयत्यनेनाध्यायेन ।

### तात्पर्यम्

सर्वार्थसंक्षेपोऽयम् ॥ १ ॥

### अर्जुन उवाच

प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च ।
एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयं च केशव ॥ १ ॥

### श्रीभगवानुवाच

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ २ ॥

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ ३ ॥

तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् ।
स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ ४ ॥

### भाष्यम्

'यद्विकारि' येन विकारेण युक्तम् । 'यतश्च यत्' यतो याति प्रवर्तते । स च प्रवर्तकः । यतश्च यदित्यस्मात् प्रवर्तते क्षेत्रमिति वचनम् । स च य इति स्वरूपमात्रम् ॥ १-४ ॥

## तात्पर्यम्

'हिंसाहेतुश्च जीवस्य परेण प्रेर्यते च यत् ।
अव्यक्तादि शरीरं तत् तत्क्षेत्रं क्षीयतेऽत्र यत् ।
इच्छा द्वेषः सुखं दुःखं देहो व्याप्तिश्च चेतसः ।
तद्विकारा इति ज्ञेयाश्चिद्रूपेच्छादिमिश्रिताः ।
विकारेच्छादिनिर्मुक्तश्चिन्मात्रेच्छादिसंयुतः ।
मुक्त इत्युच्यते जीवो मुक्तिश्च द्विविधा मता ।
चिन्मात्रद्वेषदुःखे च देहो मिथ्यादृगात्मकः ।
निषिद्धेच्छा च यत्र स्युर्नित्या सा मुक्तिरासुरी ।
चिन्मात्रा वैष्णवी भक्तिर्देहः सम्यग्दृगात्मकः ।
सुखमिच्छाऽनुकूला च धृतिर्दैवी तु सा मता' ।। इति नारायणश्रुतिः ।।२।।

'क्षेत्रज्ञो भगवान् विष्णुर्नह्यन्यः क्षेत्रमञ्जसा ।
वेत्त्यसौ भगवान् ज्ञेयो व्यक्ताव्यक्तविलक्षणः ।
स तु जीवेषु सर्वेषु वहिश्चैव व्यवस्थितः ।
विलक्षणश्च जीवेभ्यः सर्वेभ्योऽपि सदैव च ।
सर्वतः पाणिपादादिर्यतः पाण्यादिशक्तिमान् ।
केशादिष्वपि सर्वत्र कृष्णकेशो हि यादवः ।
अणोरणुतरै रूपैः पाणिपादादिसंयुतैः ।
सर्वत्र संस्थितत्वाद् वा सर्वतः पाणिपादवान् ।
सर्वेन्द्रियाणां विषयान् वेत्ति सोऽप्राकृतेन्द्रियः ।
यतोऽतोऽनिन्द्रियः प्रोक्तो यन्न भिन्नेन्द्रियोऽथवा ।
गुणैः सत्त्वादिभिर्हीनः सर्वकल्याणमूर्तिमान् ।
अन्यथाभावराहित्यादचरश्चर एव च ।

'चरणात् सर्वदेशेषु व्याप्तोऽणुर्मध्यमस्तथा ।
सर्वगत्वात् समीपे च दूरे चैवान्तरे च सः ।
अनन्ताव्ययशक्तित्वात् तदन्यत्र विरोधिनः ।
सन्ति सर्वे गुणास्तत्र न च तत्र विरोधिनः' ।। इति च ।

न च जीवस्य क्षेत्रज्ञनाम–

'क्षेत्रज्ञ एता मनसो विभूतीर्जीवस्य मायारचिता अनित्याः ।
आविर्हिताश्चापि तिरोहिताश्च शुद्धो विचष्टे ह्यविशुद्धकर्तुः' ।।

इति हि भागवते ।

अतः 'एतद् यो वेत्ति' इत्युक्ते जीवस्यापि किञ्चिज्ज्ञानात् तत्प्राप्ते-स्तन्निवारणार्थं 'क्षेत्रज्ञं चापि मां विद्धि' इत्याह । अन्यथा 'एतद् यो वेत्ति' इत्युक्तेनैव सिद्धत्वात् 'क्षेत्रज्ञं चापि' इति व्यर्थम् । भेदपक्षे तु नामनिरुक्त्यर्थं 'एतद् यो वेत्ति' इति । सर्वाभेदमपि केचिद् वदन्तीति क्षेत्रं च ज्ञश्चेति व्युत्पत्तिं निवारयति । क्षेत्रज्ञं मां सर्वक्षेत्रेषु स्थितत्वेन विद्धीत्यर्थः । तत्पक्षे तु 'यो वेत्ति' इत्युक्ते ईश्वरस्यापि क्षेत्रज्ञत्वं सिद्धमेव । सर्वाभेदविवक्षायां च सर्वं क्षेत्र(ज्ञ)मिति वक्तव्यम् । 'सर्वक्षेत्रेषु' इति व्यर्थम् । न च तत्पक्षे मामित्यस्य कश्चिद् विशेषः । किन्त्वेक एव क्षेत्रज्ञ (अहम्) इति वक्तव्यम् ।। ३ ।।

यतश्च यत् । यतः परमेश्वरानुमतेरिदं याति प्रवर्तते । स चानुमन्ता यः । अनुसारिणी मतिरनुमतिः प्रेरणारूपा ।

प्रेरणाऽनुमतिः प्रोक्ता क्वचित् संवाद उच्यते ।
प्रेरकत्वात्तु भगवाननुमन्ता प्रकीर्तितः ।। इति च ।

उपद्रष्टाऽनुमन्ता चेत्यनेनैवानुमतिरनुमन्ता चोक्तः । ज्ञेयं यत्तदित्यादिना 'यत्प्रभाव' इत्यपि ।। ४ ।।

**ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।**
**ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ।। ५ ।।**

महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ ६ ॥

### भाष्यम्

ब्रह्मसूत्राणि शारीरकसूत्राणि ॥ ५, ६ ॥

इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः ।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ७ ॥

### भाष्यम्

इच्छादयो विकाराः ॥ ७ ॥

### तात्पर्यम्

चेतना चित्तव्याप्तिः ।

'सङ्घातो देह उद्दिष्टश्चित्तव्याप्तिस्तु चेतना' । इति च ॥ ७ ॥

अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ८ ॥

इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ९ ॥

### भाष्यम्

स च यो यत्प्रभावश्चेति वक्तुं तज्ज्ञानसाधनान्याह– **अमानित्व-मित्यादिना** । आत्माल्पत्वं ज्ञात्वाऽपि महत्त्वप्रदर्शनं दम्भः ।

'ज्ञात्वाऽपि स्वात्मनोऽल्पत्वं डम्भो माहात्म्य(भावनम्)दर्शनम्' इति ह्यभिधानम् ।

आर्जवं मनोवाक्कायकर्मणामवैपरीत्यम् ।। ८, ९ ।।

**असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।**
**नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ।। १० ।।**

**मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।**
**विविक्तदेशसेवित्वमरतिर्जनसंसदि ।। ११ ।।**

### भाष्यम्

सक्तिः स्नेहः । स एवातिपक्वो(क्तो)ऽभिष्वङ्गः ।

'स्नेहः सक्तिः स एवातिपक्वो(क्तो)ऽभिष्वङ्ग उच्यते' इति ह्यभिधानम् । ।। १०, ११ ।।

**अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।**
**एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ।। १२ ।।**

### भाष्यम्

तत्त्वज्ञानार्थदर्शनम् अपरोक्षज्ञानार्थं शास्त्र(ज्ञानम्)दर्शनम् ।। १२ ।।

### तात्पर्यम्

तत्त्वज्ञानविषयस्य विष्णोः । अपरोक्षदर्शनं तत्त्वज्ञानार्थदर्शनम् । ज्ञायतेऽनेनेति ज्ञानम्, ज्ञप्तिर्ज्ञानमिति व्युत्पत्त्या 'एतज्ज्ञानम्' इति ज्ञानसाधनं ज्ञानं चोक्तम् ।। १२ ।।

ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते ।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ १३ ॥

सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १४ ॥

### भाष्यम्

परं ब्रह्मेति च 'स च यः' इति प्रतिज्ञातमुच्यते– अन्यद् 'यत्प्रभावः' इति । आदिमद्देहादिवर्जितमनादिमत् । अन्यथाऽनादीत्येव स्यात् । ॥ १३, १४ ॥

### तात्पर्यम्

अनादीत्युक्ते स्वयं कारणं न भवतीत्याशङ्का स्यादिति तन्निवृत्त्यर्थं 'अनादिमत्' इत्याह ।

'मुख्यतो गुणपूर्णत्वात् परं ब्रह्म जनार्दनः ।
मूर्तामूर्तव्यतीतत्वान्न सन्नैवासदुच्यते' ॥ इति च ।

'मूर्तं सदवगम्यत्वादज्ञेयत्वादसत् परम् ।
पुंसामर्थ्यादगम्यत्वात् सर्ववेदप्रसिद्धितः ।
विलक्षणः सदसतोर्भगवान् विष्णुरव्ययः' ॥ इति च ॥ १३ ॥

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितं ।
असक्तं सर्व(भृच्चैव)भुकूचैव निर्गुणं गुणभोक्तृ च॥१५॥

वहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥ १६ ॥

अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ।। १७ ।।

ज्योतिषामपि तज्जयोतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ।। १८ ।।

इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ।। १९ ।।

### भाष्यम्

सर्वेन्द्रियाणि गुणांश्चाऽभासयतीति सर्वेन्द्रियगुणाभासम् । इन्द्रियवर्जितत्वाद्यर्थ उक्तः पुरस्तात् । विकारान्तर्भावाज्ज्ञानसाधनं प्रथमत उक्तम् । बहुत्वात् साधनात्युपयोगात् प्रभावः ।। १५-१९ ।।

### तात्पर्यम्

ज्ञानेन मुक्तौ प्राप्यत्वाज्ज्ञानगम्यम् । 'स्वयमेवाऽत्मनाऽऽत्मानं वेत्थ' इति स्वज्ञेयत्वाज्ज्ञेयम् । अन्यज्ञेयत्वस्य 'ज्ञेयं यत् तत्' इति पूर्वमेव सिद्धत्वात् । कर्तृकर्मविरोधवादिमतं निराकरोत्युत्तरज्ञेयशब्देन ।

'स्ववेत्ता वेदनं च स्वं स्वेन वेद्यश्च केशवः ।
परस्य वेत्ता वित्तिश्च वेद्यश्च स्यात् परैः क्वचित् ।
तत्प्रसादं विना कश्चिन्नै(नं)वं वेत्तुं हि शक्नुयात् ।
स्ववेदनेऽन्यवित्तौ वा नासावन्यदपेक्षते ।
स्वप्रकाश इति प्रोक्तस्तेनैकः पुरुषोत्तमः ।
जीवानां स्वप्रकाशत्वं तत्प्रसादात् स्ववेदनम्' । इति च ।

मद्भावाय मयि भावाय ।। १५-१९ ।।

**प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ॥ २० ॥**

### भाष्यम्

यतश्च यदिति वक्तुं प्रकृतिविकारपुरुषान् सङ्क्षिप्याऽह– **प्रकृतिमिति** । गुणाः सत्त्वादयः । तेषामत्यल्पो विशेषो लयात् सर्गे इति विकाराः पृथगुक्ताः ।

'कार्याकार्या गुणास्तिस्रो यतस्त्वल्पोद्भवो जनौ' ।

इति हि माधुच्छन्दसशाखायाम् ॥ २० ॥

### तात्पर्यम्

'प्रकृतिं पुरुषं च' इत्यत्र पुरुषशब्देन जीवपरयोः प्रकृतिशब्देन चेतनाचेतनप्रकृत्योः स्वीकाराय **उभावपीति** । विकाराणां सत्वादीनां चोपादानत्वविवक्षया प्रकृतिसम्भवत्वम् । स्वातन्त्र्यं तु परमेश्वरस्यैव । 'उपद्रष्टाऽनुमन्ता च' इत्यादिवक्ष्यमाणत्वात् । गुणानां च विकारत्वेऽप्यधिकविकारत्वविवक्षयाऽन्येषां 'विकारांश्च गुणांश्च' इति पृथगुक्तिः ॥ २० ॥

**कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २१ ॥**

### भाष्यम्

कार्यं शरीरम् । 'शरीरं कार्यमुच्यते' इति ह्यभिधानम् । करणानि इन्द्रियाणि । भोगोऽनुभवः । स हि चिद्रूपत्वादनुभवति । प्रकृतिश्च जडत्वात् परिणामिनी ।

'कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः ।
भोक्तृत्वे सुखदुःखानां पुरुषं प्रकृतेः परम्' ।। इति हि भागवते ।। २१ ।।

## तात्पर्यम्

'स्वदेहेन्द्रियहेतुत्वं यज्जीवस्य स्वकर्मभिः ।
आवृत्य विष्णुतत्त्वं तद्धेतुश्चित्प्रकृतिर्मता ।
जीवस्य सुखदुःखानां भोगशक्तिप्रदः सदा ।
परमः पुरुषो विष्णुः सर्वकर्ताऽपि सन् सदा ।
विशेषकर्ता केषाञ्चिदुक्तो यद्वद् विकुण्ठपः ।
उच्यते सर्वपालोऽपि विशेषेण स कर्मणा' ।। इति च ।

परमेश्वरस्यैव सर्वकर्तृत्वेऽपि भोक्तृत्वदाने देव्या अल्पप्रवृत्तिरिति दर्शयितुं 'उच्यते' इति स्थानद्वयेऽप्युक्तम् । कर्तृत्वेऽपि स एव मुख्यहेतुः । तथाऽपि भोक्तृत्वापेक्षया तस्या अधिकप्रवृत्तिरिति 'कर्तृत्वे हेतुः प्रकृतिरुच्यते' इति, सर्वहेतुत्वेऽपि विष्णोः प्रकृतेर्जीवं प्रति भोक्तृत्वदानेऽल्पप्रवृत्तिरिति 'पुरुषो भोक्तृत्वे हेतुरुच्यते' इति विशेषहेतोरेवमुच्यत एव । मुख्यतस्तु सर्वहेतुत्वं विष्णोरेवेति भावः ।। २१ ।।

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ।। २२ ।।

उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ।। २३ ।।

## भाष्यम्

यतश्च यदित्याह - उपद्रष्टेति । अनुमन्ता अन्वनु विशेषतो निरूपकः ।
।। २३ ।।

## तात्पर्यम्

**'पुरुषः प्रकृतिस्थः'** इत्यत्र पुरुषशब्दो जीवे । उभयोरपि पुरुषशब्देन पूर्वं प्रस्तुतत्वात् । यथायोग्यमुपपत्तेः । कार्यकारणसम्बन्धं भोगं च मिथ्येति वदतां निवारणायाऽह । **'पुरुषः प्रकृतिस्थो हि'** इति । हीत्यनुभवविरोधं दर्शयति तेषाम् । न हि ज्ञाना-ज्ञानसुखदुःखादि-विषयस्याऽन्तरानुभवस्य भ्रान्तित्वं क्वचिद् दृष्टम् । नचास्य मिथ्यात्वे किञ्चिन्मानम् । शरीरमारभ्यैव ह्यपरोक्षभ्रमो दृष्टः । तत्रापि बल-वत्प्रमाणविरोधादेव भ्रान्तित्वं कल्प्यम् । साक्षिसिद्धस्यापि भ्रान्ति-त्वाङ्गीकारे येन सर्वस्य भ्रान्तित्वमभ्रान्तित्वं चाऽत्मनोऽवगतं तदपि प्रमाणमात्मैव । व्यवहारतोऽप्यस्तीत्यत्र प्रमाणाभावाद् भ्रान्तिरभ्रान्तिर्वा न किञ्चित् सिद्ध्यति ।

अनुभवो भ्रान्तिः इत्युक्ते भ्रान्तित्वे प्रमाणं तत्प्रामाण्यं च कुतः सिद्ध्येत् ? व्यवहारतः सर्वमङ्गीकुर्म इत्युक्ते व्यवहारो व्यवहर्ता च कुतः सिद्धः ? प्रतीतित इत्युक्ते सैव कुतः ? स्वत इत्युक्ते स्वस्य भ्रान्तित्वे प्रतीतिं विनैव प्रतीतिरस्तीति भ्रान्तिः स्यात् । स्वाभावोऽपि स्यात् । स्वयमस्तीति च भ्रमः स्यात् । निरालम्बनो भ्रमो नोपपद्यत इत्यस्यापि भ्रमत्वोपपत्तेः । तत्प्रमाणमप्यप्रमाणमेव । प्रमाणत्वभ्रम इति न किञ्चित् सिद्ध्यति ।

भ्रम इत्यस्यैव भ्रमत्वे अन्यस्याभ्रमत्वमेव भवति । सुखदुःखादिविषयं ज्ञानमात्मस्वरूपमेवेति तस्य भ्रमत्वे छद्मना विनैव शून्यवादो भवति । न हि वृत्तिज्ञानविषयमज्ञानादिकं तेषामपि । भ्रमस्य चाविद्याकार्यत्वाङ्गी-कारात् । आत्मस्वरूपस्याप्यविद्याकार्यत्वं स्यात् । दुर्घटत्वं भूषणमित्युक्ते

दुर्घटत्वं सुघटत्वं चोभयं भूषणमस्माकमित्युत्तरम् । न हि प्रमाणसिद्धस्य दुर्घटत्वे सुघटत्वे वाऽपवादो दृष्टः । दुर्घटत्वं भूषणमिति वदद्भिरा-त्मनोऽप्यविद्यात्वमङ्गीकृत्य तदयुक्तमित्युक्ते तत्रापि भूषणत्वं किमिति नाङ्गीक्रियते ? अतिसुकरत्वात् । न चाऽत्मनोऽप्यविद्यात्वं वदतां तेषामुत्तरम् । अतोऽनन्तदोषदुष्टत्वाद्धीति प्रसिद्धचैव भगवता निराकृताः ॥ २२ ॥

अस्य जीवस्य सदसद्योनिजन्मसु कारणं सत्त्वादिगुणसङ्गः । स्वतन्त्रकारणं तु परमेश्वर एवेत्याह– **उपद्रष्टाऽनुमन्तेति** ।

'सर्वेभ्य उपरि द्रष्टा यदुपद्रष्टृनामकः ।
स्वातन्त्र्यात् स्वानुकूल्येन मत्या प्रेरयति स्म यत् ।
अनुमन्तेति कथितः स्वयं प्रभुरजो हरिः ।
महाशक्तिर्यतो विष्णुर्महेश्वर इतीरितः ।
परमत्वाच्च तस्यैव ह्यनुमन्तृत्वमुच्यते ।
स एव सर्वदेहेषु देहिनोऽन्यो व्यवस्थितः' ॥ इति च ।

'मां विद्धि सर्वक्षेत्रेषु' इति देहेऽप्युक्तः । तेनाहमेव स इति दर्शयति ॥ २३ ॥

**य (एनं) एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥ २४ ॥**

### भाष्यम्

पुरुषः सुखदुःखानामिति जीव उक्तः । पुरुषं प्रकृतिं चेति जीवेश्वरौ सहैवोच्येते । अन्यत्र महातात्पर्यविरोधः । उत्कर्षे हि महातात्पर्यम् । तथाहि सौकरायणश्रुतिः–

'अवाच्योत्कर्षे महत्त्वात् सर्ववाचां सर्वन्यायानां च महत्तत्परत्वम् ।
विष्णोरनन्तस्य परात् परस्य तच्चापि ह्यस्त्येव न चात्र शङ्का ।
अतो विरुद्धं तु यदत्र मानं तदक्षजादावथवाऽपि युक्तिः ।
न तत् प्रमाणं कवयो वदन्ति न चापि युक्तिर्ह्यूनमतिर्हि दृष्टेः' ।।
इति ।

अतो युक्तिभिरप्येतदपलापो न युक्तः । अतो यया युक्त्याऽविद्यमानत्वादि कल्पयति साऽप्याभासरूपेति सदेव माहात्म्यं वेदैरुच्यत इति सिद्ध्यति । अवान्तरं च तात्पर्यं तत्रास्ति । उक्तं च तत्रैव–

'अवान्तरं तत्परत्वं च सत्त्वे महद् वाऽप्येकत्वात्तु तयोरनन्ते' । इति । श्यामत्वाद्यभिधानाच्च ।

युक्तं च पुरुषमतिकल्पितयुक्त्यादेराभासत्वम् । अज्ञानसम्भवात् । न तु स्वतःप्रमाणस्य वेदस्याऽभासत्वम् । अदर्शनं च सम्भवत्येव पुंसां बहूनामप्यज्ञानात् । तर्ह्यस्मदनधीतश्रुत्यादौ विपर्ययोऽपि स्यादिति च न वाच्यम् । यतस्तत्रैवाऽह–

'नैतद्विरुद्धा वाचो नैतद्विरुद्धा युक्तय इति ह प्रजापतिरुवाच प्रजापतिरुवाच' । इति ।

तद्विरुद्धं च जीवसाम्यम्– 'आभास एव च' इति चोक्तम् ।

'बहवः पुरुषा ब्रह्मन् उताहो एक एव तु ।
को ह्यत्र पुरुषश्रेष्ठस्तं भवान् वक्तुमर्हति ।

वैशम्पायन उवाच–

'नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ।
बहूनां पुरुषाणां हि यथैका योनिरुच्यते' ।। इति च मोक्षधर्मे ।

न चैतत् सर्वं स्वप्नेन्द्रजालादिवत् । 'वैधर्म्याच्च न स्वप्नादिवत्' इति हि भगवद्वचनम् । न च स्वप्नवदेकजीवकल्पितत्वे मानं पश्यामः । विपर्यये माश्चोक्ता द्वितीये । उक्तं चाऽऽयास्यशाखायाम्–

**'स्वप्नो ह वा अयं चञ्चलत्वान्न च स्वप्नो न हि विच्छेद एतदिति' ।** इति ।

नायं दोषः । नहीश्वरस्य जीवैक्यमुच्यते, जीवस्य हीश्वरैक्यमिति ध्येयम् । तदपि न निरुपाधिकम् । अतो न प्रतिबिम्बत्वविरोध्यैक्यम् । तथा च माधुच्छन्दसश्रुतिः–

**'ऐक्यं चापि प्रातिबिम्ब्येन विष्णोर्जीवस्यैतद्धि ऋषयो वदन्ति'** इति ।

अहङ्ग्रहोपासने च फलाधिक्यमाग्निवेश्यश्रुतिसिद्धम्– **'अहङ्ग्रहोपासकस्तस्य साम्यमभ्याशो ह वा अश्नुते नात्र शङ्का'** । इति ।

**'तदीयोऽहमिति ज्ञानमहङ्ग्रह इतीरितः'** । इति वामने ।

**'तद्वशत्वात्तु सोऽस्मीति भृत्यैरेव न तु स्वतः'** इति च ।

प्रातिबिम्ब्येन सोऽस्मि भृत्यश्चेति भावना । तथाह्यायास्यशाखायाम्-

**'भृत्यश्चाहं प्रातिबिम्ब्येन सोऽस्मीत्येवं ह्युपास्यः परमः पुमान् सः'** । इति । प्रातिबिम्ब्यं च सादृश्य(साम्य)मेव ।। २४ ।।

## तात्पर्यम्

**'द्विविधं पुरुषं चैव प्रकृतिं द्विविधामपि ।**
**सह तत्तद्गुणैः सम्यग् ज्ञात्वा पश्यति यः पुमान् ।**
**सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते'** ।। २४ ।।

ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये सांख्येन योगेन कर्मयोगेन चापरे ।। २५ ।।

अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ।। २६ ।।

## भाष्यम्

साङ्ख्येन वेदोक्तभगवत्स्वरूपज्ञानेन । कर्मिणामपि श्रुत्वा ज्ञात्वा ध्यात्वा दृष्टिः । श्रावकाणां च ज्ञात्वा ध्यात्वा । साङ्ख्यानां च ध्यात्वा । तथा च गौपवनश्रुतिः–

'कर्मकृच्चापि तं (तत्) श्रुत्वा ज्ञात्वा ध्यात्वाऽनुपश्यति ।
श्रावकोऽपि तथा ज्ञात्वा ध्यात्वा ज्ञान्यपि पश्यति' ।। इति ।

'अन्यथा तस्य दृष्टिर्हि कथञ्चिन्नोपजायते' । इति ।

'अन्ये' इत्यशक्तानामप्युपायदर्शनार्थम् ।। २५, २६ ।।

## तात्पर्यम्

'अनादियोग्यताभेदात् पुंसां दर्शनसाधनम् ।
नानैव तत्र विष्णोस्तु प्रसादाद् वैष्णवं वपुः ।
स्वयं विज्ञायते किञ्चित् श्रूयते किञ्चिदन्यतः ।
तथा ज्ञात्वा हरिं ध्यात्वा स्वान्तः पश्यन्ति केचन ।
ऋषयः केचिदृषयो नारदाद्या वहिस्त्वपि ।
देवा विष्णुप्रसादेन लब्धसत्प्रतिभावलात् ।
सर्वं क्रमेण विज्ञाय प्रतिभास्पष्टताक्रमात् ।
पश्यन्ति वहिरन्तश्च विष्णुं ध्यानमृतेऽपि तु ।
येषां ध्यानमृते दृष्टिस्तेषां ध्यानेऽपि दर्शनम् ।

स्यादेव साङ्ख्ययोगास्ते देवा ब्रह्माऽधिकोऽत्र च ।
केचित्तु क्षत्रियवरा अश्वमेधादिकर्मभिः ।
यजन्तो भक्तिमन्तश्च यज्ञभागार्थमागतम् ।
श्रवणप्रतिभाभ्यां च स्मरन्तः पुरुषोत्तमम् ।
पश्यन्त्यन्ये तथाऽन्येभ्यः सर्वं श्रुत्वाऽनुमत्य च ।
उपास्यैव तु पश्यन्ति नान्यथा तु कथञ्चन ।
ऋषीन् राज्ञस्तथाऽऽरभ्य प्रतिभाऽभ्यधिका क्रमात् ।
यावद् ब्रह्मा ब्रह्मणस्तु प्रायो नाप्रतिभासितम् ।
विष्णोः प्रीत्यर्थमेवास्य श्रोतव्यं प्रायशो हरेः ।
अन्येषां श्रवणाज्ज्ञानं क्रमशो मानुषोत्तरम् ।
अत्यल्पप्रतिभानत्वान्मानुषाः श्रुतवेदिनः ।
सर्वे ते दर्शनात् तस्मात् स्वयोग्यान्मुक्तिगामिनः' ।। इति च ।

अन्येषामपि किञ्चिच्छ्रवणे विद्यमानेऽपि मानुषाणामत्यल्पप्रतिभानत्वात् 'श्रुत्वाऽन्येभ्यः' इति विशेषणम् । मनुष्याणां प्रतिभामूलप्रमाणापेक्षा प्रायो न सम्यगुत्पद्यते अल्पा चेति 'श्रुतिपरायणाः' इति ।

'अश्रुतप्रतिभा यस्य श्रुतिस्मृत्यविरोधिनी ।
विश्रुता नृषु जातं च तं विद्याद् देवसत्तमम् ।
यश्च स्वमुखमानेन नवाधोदेहवान् पुमान् ।
अष्टमानवती स्त्री च षण्णवत्यङ्गुलौ पुनः ।
दशतालौ सप्तपादौ विद्यात् तौ च सुरोत्तमौ ।
यावत् पञ्चाङ्गुलोनं तद्देवमानं क्रमात् परम् ।
पादे त्वङ्गुलमात्रोनं तदूनं चतुरङ्गुलम् ।
यावद्देवोपदेवानां पादे चोनाङ्गुलं पुनः ।
तावन्मनुष्यमानं स्यात् ततोऽधस्त्वासुरं स्मृतम् ।
द्विचत्वार्यधिकं तस्मात् षण्णवत्यङ्गुलादधः ।

ज्ञेयमङ्गुलमानं तदुपदेवादिषु स्फुटम् ।
देवेष्ववरवज्ज्ञेयमृषीणां चक्रवर्तिनाम् ।
यावद् यावत् प्रियो विष्णोस्तावत् स्त्रीपुंस्वरूपिणः ।
हरेः सादृश्यमस्य स्यादनादिक्रमसुस्थिरम्' ।। इति च ।। २५-२६ ।।

यावत्सञ्जायते किंचित्सत्त्वं स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ।। २७ ।।

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति।। २८ ।।

समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिम्।। २९ ।।

## भाष्यम्

पुनश्च प्रकृतिपुरुषेश्वरस्वरूपं साम्यादिधर्मयुतमाह– यावदित्यादिना ।। २७-२९ ।।

## तात्पर्यम्

'क्षेत्रक्षेत्रज्ञसंयोगात्' इत्यत्र क्षेत्रं श्रीः– 'मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्' इति वक्ष्यमाणत्वात् ।

'अव्यक्तं च महद् ब्रह्म प्रधानं क्षेत्रमित्यपि ।
उच्यते श्रीः सदा विष्णोः प्रिया निर्दोषचिद्घना ।
सा हि न व्यज्यते विष्णुरत्र क्षेति महागुणा ।
जीवोत्तमा च तेनैतैः शब्दैरेकाऽभिधीयते ।
महान् ब्रह्मा जीवमहान् परात्मप्रेरिताः क्रियाः ।
अहं कर्तेति येनायं जीवो मंस्यत्यसौ शिवः ।

स्यादेव साङ्ख्ययोगास्ते देवा ब्रह्माऽधिकोऽत्र च ।
केचित्तु क्षत्रियवरा अश्वमेधादिकर्मभिः ।
यजन्तो भक्तिमन्तश्च यज्ञभागार्थमागतम् ।
श्रवणप्रतिभाभ्यां च स्मरन्तः पुरुषोत्तमम् ।
पश्यन्त्यन्ये तथाऽन्येभ्यः सर्वं श्रुत्वाऽनुमत्य च ।
उपास्यैव तु पश्यन्ति नान्यथा तु कथञ्चन ।
ऋषीन् राज्ञस्तथाऽऽरभ्य प्रतिभाऽभ्यधिका क्रमात् ।
यावद् ब्रह्मा ब्रह्मणस्तु प्रायो नाप्रतिभासितम् ।
विष्णोः प्रीत्यर्थमेवास्य श्रोतव्यं प्रायशो हरेः ।
अन्येषां श्रवणाज्ज्ञानं क्रमशो मानुषोत्तरम् ।
अत्यल्पप्रतिभानत्वान्मानुषाः श्रुतवेदिनः ।
सर्वे ते दर्शनात् तस्मात् स्वयोग्यान्मुक्तिगामिनः' ।। इति च ।

अन्येषामपि किञ्चिच्छ्रवणे विद्यमानेऽपि मानुषाणामत्यल्पप्रतिभानत्वात् 'श्रुत्वाऽन्येभ्यः' इति विशेषणम् । मनुष्याणां प्रतिभामूलप्रमाणापेक्षा प्रायो न सम्यगुत्पद्यते अल्पा चेति 'श्रुतिपरायणाः' इति ।

'अश्रुतप्रतिभा यस्य श्रुतिस्मृत्यविरोधिनी ।
विश्रुता नृषु जातं च तं विद्याद् देवसत्तमम् ।
यश्च स्वमुखमानेन नवाधोदेहवान् पुमान् ।
अष्टमानवती स्त्री च षण्णवत्यङ्गुलौ पुनः ।
दशताळौ सप्तपादौ विद्यात् तौ च सुरोत्तमौ ।
यावत् पञ्चाङ्गुलोनं तद्देवमानं क्रमात् परम् ।
पादे त्वङ्गुलमात्रोनं तदूनं चतुरङ्गुलम् ।
यावद्देवोपदेवानां पादे चोनाङ्गुलं पुनः ।
तावन्मनुष्यमानं स्यात् ततोऽधस्त्वासुरं स्मृतम् ।
द्विचत्वार्यधिकं तस्मात् षण्णवत्यङ्गुलादधः ।

ज्ञेयमङ्गुलमानं तदुपदेवादिषु स्फुटम् ।
देवेष्ववरवज्ज्ञेयमृषीणां चक्रवर्तिनाम् ।
यावद् यावत् प्रियो विष्णोस्तावत् स्त्रीपुंस्वरूपिणः ।
हरेः सादृश्यमस्य स्यादनादिक्रमसुस्थिरम्' ।। इति च ।। २५-२६ ।।

यावत्सञ्जायते किंचित्सत्त्वं स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ।। २७ ।।

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति।। २८ ।।

समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिम्।। २९ ।।

## भाष्यम्

पुनश्च प्रकृतिपुरुषेश्वरस्वरूपं साम्यादिधर्मयुतमाह– यावदित्यादिना ।। २७-२९ ।।

## तात्पर्यम्

'क्षेत्रक्षेत्रज्ञसंयोगात्' इत्यत्र क्षेत्रं श्रीः– 'मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्' इति वक्ष्यमाणत्वात् ।

'अव्यक्तं च महद् ब्रह्म प्रधानं क्षेत्रमित्यपि ।
उच्यते श्रीः सदा विष्णोः प्रिया निर्दोषचिद्घना ।
सा हि न व्यज्यते विष्णुरत्र क्षेति महागुणा ।
जीवोत्तमा च तेनैतैः शब्दैरेकाऽभिधीयते ।
महान् ब्रह्मा जीवमहान् परात्मप्रेरिताः क्रियाः ।
अहं कर्तेति येनायं जीवो मंस्यत्यसौ शिवः ।

सोऽहङ्कार इति प्रोक्तो जीवाहङ्कृतिकृद् यतः ।
उमा बुद्धिरिति ज्ञेया शब्दादिज्ञानदा यतः ।
मतिदो मन उद्दिष्ट इन्द्रः स्कन्दोऽपि तत्सुतः ।
श्रोत्रं तु श्रावयंश्चन्द्रः स्पर्शो वायुसुतो मरुत् ।
चक्षुः सूर्यश्चक्षयति जिह्वा वारिपतिर्हृतेः ।
अश्विनौ घ्राणमाघ्रातेर्वागग्निर्वचनादपि ।
हस्तौ वायुसुतौ ज्ञेयौ मरुतौ हानिलाभयोः ।
पादौ तु विष्णुनाऽविष्टौ यज्ञशम्भू शचीसुतौ ।
पदनादेव पायुश्च भुक्तस्यैवाप्ययाद् यमः ।
सन्तत्युपस्थितिकृतेरुपस्थः सशिवो मनुः ।
विनायकस्तथाऽऽकाशो निरावृत्या प्रकाशनात् ।
प्रधानवायुजो भूतवायुर्नाम्ना मरीचिकः ।
अग्निश्च पृथिवी चैव प्रसिद्धौ वरुणो जलम् ।
अदनात् प्रथनाज्जन्मजयहेतोस्तथाऽभिधाः ।
शब्दाद्याः पञ्च शिवजाः शब्दनात् स्पर्शनादपि ।
रूपणाद् रसनाचैव गन्धनाच्च तथाऽभिधाः ।
सुखं धृतिश्चेतना च सुखनाद् विधृतेरपि ।
चेतोनेतृत्वतश्चैव मुख्यवायुः सरस्वती ।
श्रीश्चेच्छा चैव सा वायोः पत्नी त्वे(वं)व धृतिर्मता ।
इच्छादानात्तु सैवेच्छा स्थानभेदात्तु देवताः ।
पृथक् पृथक् च कथ्यन्ते लक्ष्म्याद्या उदिता अपि ।
दुःखद्वेषौ कलिश्चैव द्वापरो ब्रह्मणः सुतौ ।
प्रवरावसुराणां तौ सङ्घातश्चेतनाः परे ।
एतैरभिमतं यच्च तत्तन्नाम्नाऽभिधीयते ।
चेतनाचेतनं त्वेतत् सर्वं क्षेत्रमितीरितम् ।
क्षितिरेतद् भगवतो यदतः क्षेत्रमीर्यते ।
क्षिणोति त्राति चैवैतत् सोऽतो वा क्षेत्रमुच्यते ।

क्षितिं कृत्वा त्राति चैतदतो वा क्षेत्रमीरितम् ।
एतस्मात् क्षीणमेतेन त्रातमित्यथवा पुनः ।
इच्छाद्यानां क्षेत्रनाम्नामपि नामान्तरं स्मृतम् ।
विकारा (विशेषा) इति यस्मात् ते विशेषविकृतिस्थिताः ।
विशेषात् क्रियते यस्माद् विकारं कार्यम(न्तिमम्)न्तगम् ।
विगतं करणं वाऽत्र पुनर्नाशमृते यतः ।
तत्सम्वन्धाद् विकाराख्या इच्छाद्या अभिमानिनः ।
एतत् सर्वं सर्वदैव निर्दोषेणैव चक्षुषा ।
प्रेरयन्नेव जानाति यत् क्षेत्रज्ञो हरिस्ततः' ।। इति च ।

'यस्याऽत्मा शरीरम्' इत्यादिश्रुतेश्चेतनस्यापि 'इदं शरीरं कौन्तेय' इति शरीरत्वोक्तिर्युज्यते ।

'सत्त्वं जीवः क्वचित् प्रोक्तः क्वचित् सत्त्वं जनार्दनः ।
सत्त्वं नाम गुणः क्वापि क्वचित् साधुत्वमुच्यते' ।। इति शव्दनिर्णये ।

'तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वम्' इति च पैङ्गिश्रुतिः । 'जनी प्रादुर्भावे' इति धातोर्जीवस्यापि शरीरे व्यक्त्यपेक्षया जनिर्युज्यते ।
।। २७ ।।

जीवेषु दुःखयोगादिरूपेण विनश्यत्स्वप्यतथाभूतम्–

'दुःखयोगादिरूपेण जीवेषु विनश्यत्स्वपि ।
दुःखयोगादिरहितः सर्वजीवेष्ववस्थितः ।
गुणैः सर्वैः समो नित्यं न हीनो हीनगोऽपि सन् ।
इति पश्यति यो विष्णुं स एव न तमो व्रजेत्' ।। इति पाद्मे ।। २८,२९ ।।

**प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।**
**यः पश्यति तथात्मानमकर्तारं स पश्यति ।। ३० ।।**

### भाष्यम्

आत्मानं चाकर्तारं पश्यति स पश्यति ।। ३० ।।

### तात्पर्यम्

प्रकृत्य स्वयमेव प्रारभ्य विष्णुना क्रियमाणानि । विष्णोर्नान्य पूर्वप्रेरक इति । 'पूर्वं तु बादरायणो हेतुव्यपदेशात्' इति भगवद्वचनात् ।

**'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।**
**यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया' ।। इति च ।**

**'स्वयं प्रकृत्य भगवान् करोति निखिलं जगत् ।**
**नैव कर्ता हरेः कश्चिदकर्ता तेन केशवः' ।। इति स्कान्दे ।**

तेनेति प्रस्तुतत्वादेव सिद्धम् । 'अहं सर्वस्य प्रभवः' 'स हि कर्ता' 'कर्तारमीशं पुरुषं ब्रह्मयोनिम्' 'जन्माद्यस्य यतः' 'मत्त एवेति तान् विद्धि' इत्यादिसकलप्रमाणविरोधश्चान्यथा । 'प्रकृत्यैव च' इति चशब्दाच्चैतेनैवेति सिद्ध्यति ।

**'प्रकृतेन क्रियायोगं चशब्दः क्वचिदीरयेत् ।**
**क्वचित् समुच्चयं ब्रूयात् क्वचिद् दौर्लभ्यवाचकः' ।। इति शब्दनिर्णये ।**

प्रकृतेः कर्तृत्वं 'रचनानुपपत्तेश्च नाऽनुमानम्' इत्यादिना च निरस्तम् । 'न ऋते त्वत् क्रियते किञ्चनाऽरे' इति च । केवलप्रकृतेः कर्तृत्वाङ्गीकारे चशब्दोऽपि व्यर्थः । 'तत एव च विस्तारम्' इति वाक्यशेषविरोधश्च । 'अहं बीजप्रदः पिता' इति वक्ष्यमाणमत्रापि 'क्षेत्रक्षेत्रज्ञसंयोगात्' इति प्रकृतमिति तेनापि विरोधः । अचेतनं करोतीति स्वोक्तिविरोधश्च । 'इच्छापूर्वक्रियादानं कर्तृत्वं मुख्यमीरितम्' इति हि पैङ्गिश्रुतिः ।

विकारलक्षणं कर्तृत्वं तु प्रकृतेरङ्गीकृतमेव । तथाऽपि लक्ष्मी-परमेश्वरमुक्तचेष्टासु तदभावात् 'सर्वशः' इत्यस्य सङ्कोचप्राप्तिः ।

'अचेतनाश्रितं कर्म विकारात्मकमीरितम् ।
यत्तु केवलचित्संस्थं प्रत्यभिज्ञाप्रमाणतः ।
अविकारात्मकं ज्ञेयं तन्न तत् प्राकृतं भवेत्' ।। इति च ।। ३० ।।

यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म सम्पद्यते तदा ।। ३१ ।।

## भाष्यम्

एकस्थम्, एकस्मिन्नेव विष्णौ स्थितम् । तत एव विष्णोर्विस्तारम् । ।। ३१ ।।

## तात्पर्यम्

'एकविष्ण्वा(श्रितानां)श्रयाणां तु जीवानां भेदमेव यः ।
ततः परस्परं चैव तारतम्येन पश्यति ।
विष्णोरेव च विस्तारं जगतः स विमुच्यते' ।। इति च ।। ३१ ।।

अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः ।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ।। ३२ ।।

यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथाऽऽत्मा नोपलिप्यते ।। ३३ ।।

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ।। ३४ ।।

### भाष्यम्

न च व्ययादिस्तस्येत्याह– **अनादित्वादिति** । सादि हि प्रायो व्ययि गुणात्मकं च । 'न करोति' इत्यादेरर्थ उक्तः पुरस्तात् । न लौकिकः । क्रियादिस्तस्य । अतो 'न प्रज्ञम्' इत्यादिवदिति ।। ३२-३४ ।।

### तात्पर्यम्

शरीरस्थो जीवः । 'स्वप्नेन शारीरमभिप्रहत्य असुप्तः सुप्तानभिचाकशीति' इति श्रुतेः ।

**'शरीरस्थस्तु संसारी शरीराभिमतेर्मतः ।**
**विष्णुः शरीरगोऽप्येव न शरीरस्थ उच्यते ।**
**शरीराभिमतिर्यस्मान्नैवास्यास्ति कदाचन ।**
**तद्गतानां तु दुःखानां भोगोऽभिमतिरुच्यते ।**
**तदभावान्नाभिमानी भगवान् पुरुषोत्तमः'** ।। इति च ।

अनादित्वान्निर्गुणत्वाच्च परमात्मा जीवोऽपि न । किमुत जडं न भवतीति ? शरीरोत्पत्तिलक्षणमप्यादिमत्त्वं परमस्य नास्तीति विशेषः । जीवस्य हि तदस्तीति । सत्त्वादिगुणसम्बन्धश्च । सर्वं करोति परमात्मा । तथाऽपि न लिप्यते । वादिसिद्धत्वादेव 'इष्टापूर्तं मन्यमाना वरिष्ठम्' इत्यादिवन्निषेधः ।

**'कुर्वाणोऽपि यतः सर्वं पुण्यपापैर्न लिप्यते ।**
**जन्ममृत्यादिरहितः सत्त्वादिगुणवर्जितः ।**
**विष्णुस्तद्विपरीतस्तु जीवोऽतस्तौ पृथक् सदा'** ।। इति च ।

**'स एष नेति नेति'** इत्यादि च ।। ३२-३४ ।।

क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ।। ३५ ।।

।। ओं तत्सदिति श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे क्षेत्रक्षेत्रज्ञयोगो नाम त्रयोदशोऽध्यायः ।।

### भाष्यम्

भूतेभ्यः प्रकृतेश्च मोक्षसाधनम्; अमानित्वादिकम् ।। ३५ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीभगवद्गीताभाष्ये त्रयोदशोऽध्यायः ।।

### तात्पर्यम्

जीवानामचेतनप्रकृतेर्मोक्षं भूतप्रकृतिमोक्षम् ।। ३५ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीभगवद्गीतातात्पर्यनिर्णये त्रयोदशोऽध्यायः ।।

*****

# चतुर्दशोऽध्यायः

### भाष्यम्

साधनं प्राधान्येनोत्तरैरध्यायैर्वक्ति–

### तात्पर्यम्

क्षेत्रक्षेत्रज्ञसंयोगस्पष्टीकरणपूर्वकं त्रैगुण्यं विविच्य दर्शयति ।

### श्रीभगवानुवाच

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ १ ॥

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ २ ॥

मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
सम्भवः सर्वभूतानां ततो भवति भारत ॥ ३ ॥

### भाष्यम्

महद् ब्रह्म प्रकृतिः । सा च श्रीर्भूर्दुर्गेति या भिन्ना । उमासरस्वत्याद्यास्तु तदंशयुतान्यजीवाः । तथा च काषायणश्रुतिः–

'श्रीर्भूमिर्दुर्गा महती तु माया सा लोकसूतिर्जगतो वन्धकी च ।
उमावागाद्या अन्यजीवास्तदंशास्तदात्मना सर्ववेदेषु गीताः' ॥ इति ।

'विष्णोर्योनिर्गर्भसन्धारणार्था महामाया सर्वदुःखैर्विहीना ।
तथाऽप्यात्मानं दुःखिवन्मोहनार्थं (प्रदर्शयन्ती) प्रकाशयन्ती सह विष्णुना सा' ।। इति ।

अतः सीतादुःखादिकं सर्वं मृषा(वृथा)प्रदर्शनमेव । तथा च कूर्मपुराणे । न चेयं भूः । तथा च सौकरायणश्रुतिः–

**'अन्या भूमिर्भूरियं तस्य छाया भूतावमा सा हि भूतैकयोनिः' इति ।**

'अवाप स्वेच्छया दास्यं जगतां प्रपितामही' इत्यनभिम्लातश्रुतेर्मात्स्यपुराणोक्तमपि स्वेच्छयैव । महद्ब्रह्मशब्दवाच्याऽपि प्रकृतिरेव- 'महती ब्रह्मणी द्वे तु प्रकृतिश्च महेश्वरः' इति तत्रैव ।। ३ ।।

## तात्पर्यम्

'योनिर्भार्या तथा स्थानं योनिः कारणमेव च' इति शब्दनिर्णये । अत्र योनिर्भार्या– 'तस्मिन् गर्भं दधाम्यहम्' इति वाक्यशेषात् ।। ३ ।।

**सर्वयोनिषु कौन्तेय मूर्तयः सम्भवन्ति याः ।**
**तासां ब्रह्म महद्योनिरहं वीजप्रदः पिता ।। ४ ।।**

**सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः ।**
**निवध्नन्ति महावाहो देहे देहिनमव्ययम् ।। ५ ।।**

**तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।**
**सुखसङ्गेन वध्नाति ज्ञानसङ्गेन चानघ ।। ६ ।।**

## भाष्यम्

बन्धप्रकारं दर्शयति साधनानुष्ठानाय - **सत्त्वमित्यादिना** ।। ५, ६ ।।

रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ ७ ॥

भाष्यम्

रज इति तृष्णासङ्गयोः समुद्भवम् । तयोः कारणम् ॥ ७ ॥

तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८ ॥

भाष्यम्

अज्ञानं जायते यतस्तदज्ञानजम् । 'प्रमादमोहौ तमसः' इति वाक्यशेषात् । ॥ ८ ॥

सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत ।
ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥ ९ ॥

रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १० ॥

सर्वद्वारेषु देहेऽस्मिन्प्रकाश उपजायते ।
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥ ११ ॥

लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १२ ॥

अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १३ ॥

यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान् प्रतिपद्यते ॥ १४ ॥

रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५ ॥

कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६ ॥

सत्त्वात्सञ्जायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ १७ ॥

ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥ १८ ॥

### भाष्यम्

रजसस्तु फलं दुःखमित्यल्पसुखं दुःखम् । तथाहि शार्कराक्ष्यशाखायाम्-

'रजसो ह्येव जायते मात्रया सुखं दुःखं तस्मात् तान् सुखिनो दुःखिन इत्याचक्षते' । इति ।

अन्यथा दुःखस्यातिकष्टत्वात् तमोऽधिकत्वं रजसो न स्यात् ।
॥ ९-१८ ॥

नाऽन्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति ।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १९ ॥

गुणानेतानतीत्य त्रीन्देही देहसमुद्भवान् ।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २० ॥

अर्जुन उवाच

कैर्लिङ्गैस्त्रीन् गुणानेतानतीतो भवति प्रभो ।
किमाचारः कथं चैतांस्त्रीन् गुणानतिवर्तते ॥ २१ ॥

### भाष्यम्

परिणामिकर्तारं गुणेभ्योऽन्यं न पश्यति । अन्यथा 'यदा पश्यः पश्यते रुग्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्' इति श्रुतिविरोधः ।

'नाहं कर्ता न कर्ता त्वं कर्ता यस्तु सदा प्रभुः' इति मोक्षधर्मे ।

॥ १९-२१ ॥

### तात्पर्यम्

एतेभ्यः सत्त्वादिगुणेभ्योऽन्यं कर्तारमीशं यदा पश्यति तदैवायं ना पुरुषः । अन्यथा पशुसमः । न केवलमन्यत्वेन पश्यन् ना तं कर्तारं विष्णुम् किन्तु गुणेभ्य उत्तमत्वेन च । कथं स एव ना ? यस्मात् 'मद्भावं सोऽधिगच्छति' ।

'महालक्ष्मीरिति परा भार्या नारायणस्य या ।
प्रकृतिर्नाम सा ज्ञेया प्रकर्षेण करोति यत् ।
तस्यास्तु त्रीणि रूपाणि सत्त्वं नाम रजस्तमः ।
सृष्टिकाले विभज्यन्ते सत्त्वं श्रीः सद्गुणप्र(भा)दा ।
रजो रञ्जनकर्तृत्वाद् भूः सा सृष्टिकरी यतः ।
यदावेशादियं पृथ्वी भूमिरित्येव कथ्यते ।

जीवानां ग्लपनाद् दुर्गा तम इत्येव कीर्तिता ।
एताभिस्तिसृभिर्जीवाः सर्वे वद्धा अमुक्तिगाः ।
सर्वान् वध्नन्ति सर्वांश्च तथाऽपि तु विशेषतः ।
श्रीर्देववन्धिका नृणां भूर्दैत्यानामथापरा ।
एताभ्योऽन्यं परं चैव विष्णुं ज्ञात्वा विमुच्यते ।
सामर्थ्यातिशयादासां नैताभ्यो विद्यते परः ।
इति यावद् विजानाति तावत् तं नृपशुं विदुः ।
तस्मादाभ्योऽधिकगुणो विष्णुर्ज्ञेयः सदैव च' ।। इति महाविष्णुपुराणे ।

'रजसस्तु फलं दुःखम्' इत्यत्र दुःखमिति दुःखमिश्रं सुखम्–
'दुखं दुरिति सम्प्रोक्तं खं नाम सुखमुच्यते' । इति शब्दनिर्णये ।

'कर्मणो राजसस्योक्तं दुःखमिश्रं सुखं फलम् ।
अज्ञानजं तामसस्य नित्यदुःखं फलं विदुः' । इति स्कान्दे
।। १६-२१ ।।

### श्रीभगवानुवाच

प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ।। २२ ।।

उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ।। २३ ।।

### भाष्यम्

प्रायो न द्वेष्टि न काङ्क्षति । तथाहि सामवेदे भाल्लवेयशाखायाम्–

'रजस्तमःसत्त्वगुणान् प्रवृत्तान् प्रायो न च द्वेष्टि न चापि काङ्क्षते ।
तथाऽपि सूक्ष्मं सत्त्वगुणं च काङ्क्षेद् यदि प्रविष्टं सुतमश्च जह्यात्' ।। इति।

'न हि देवा ऋषयश्च सत्त्वस्था नृपसत्तम ।
हीनाः सूक्ष्मेण सत्त्वेन ततो वैकारिकाः स्मृताः ।
कथं वैकारिको गच्छेत् पुरुषः पुरुषोत्तमम्' ।। इति हि मोक्षधर्मे ।
'सात्त्विकः पुरुषव्याघ्र भवेन्मोक्षार्थनिश्चितः' । इति च ।। २२, २३ ।।

## तात्पर्यम्

'लोकस्थितान् प्रकाशादीन् प्रायो न द्वेष्टि नेच्छति ।
स्वयम्प्रकाशी मोहोज्झस्तथाऽपि पुनरिच्छति ।
विष्णौ प्रकाशं तं चैव नित्यभक्त्याऽभिसेवते ।
सुखदुःखादिभावेऽपि विष्णुभक्तौ समः सदा ।
अर्थार्थं वा प्रियार्थं वा निन्दादीनां भयादपि ।
न विष्णुभक्तिह्रासोऽस्य किन्तु साम्यमथोन्नतिः ।
अवैष्णवारम्भवर्जी विष्णुं याति न संशयः' ।। इति च ।। २२ ।।

उदासीनवदित्युक्तेश्च न केवलोदासीनत्वम् । नेङ्गते इत्युदासीनप्रवृत्ति-निषेधः । सर्वारम्भपरित्यागीति विशेषप्रयोजनापेक्षयाऽपि न अवैष्णवा-रम्भः इति । 'इङ्गनं क्षणिकं कर्म दीर्घमारम्भ उच्यते' इति शब्दनिर्णये ।। २३ ।।

**समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ।**
**तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ।। २४ ।।**

**मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।**
**सर्वारम्भपरित्यागी गुणातीतः स उच्यते ।। २५ ।।**

## भाष्यम्

तुल्यत्वार्थ उक्तः पुरस्तात् ।। २४, २५ ।।

मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्यैतान् व्रह्मभूयाय कल्पते ।। २६ ।।

### भाष्यम्

ब्रह्मवत् प्रकृतिवत् भगवत्प्रियत्वं ब्रह्मभूयम् । न तु तावत्प्रियत्वम् । किन्तु प्रियत्वमात्रम् ।

'वद्धा वाऽपि तु मुक्ता वा न रमावत् प्रिया हरेः' । इति पाद्मे ।

भूयाय भावाय ।। २६ ।।

### तात्पर्यम्

'लक्ष्म्यादिभिः कृतो वन्धो योऽनादिः पुरुषस्य तु ।
तमत्येतीह यो विद्वान् स विज्ञेयो गुणात्ययी' ।। इति च प्रवृत्ते ।

तत्कृतबन्धात्ययात् तदधिकविष्णुप्राप्तेश्च तदत्ययीत्युच्यते । यथा द्वारपालमतीत्य राजानं गच्छतीति । ब्रह्मणि भूयं ब्रह्मभूयम् । ब्रह्मेति प्रकृता महालक्ष्मीः–

'अतीत्य त्रीणि रूपाणि महालक्ष्मीं प्रपद्यते ।
तया त्वनुगृहीतोऽसौ वैष्णवो विष्णुगो भवेत्' ।। इति च ।। २६ ।।

व्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ।। २७ ।।

।। ओं तत्सदिति श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे प्रकृतिगुणत्रयविभागयोगो नाम चतुर्दशोऽध्यायः ।।

## भाष्यम्

ब्रह्मणो मायायाः ॥ २७ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीभगवद्गीताभाष्ये चतुर्दशोध्यायः ॥

## तात्पर्यम्

ब्रह्म प्राप्तो मत्प्राप्त (इव) एव भवतीत्याह- **ब्रह्मणो हीति** । मदवियोगात् तस्या अपि मत्स्थ एव भवतीत्यर्थः । तथापि प्राप्तिक्रमविवक्षया तदुक्तिः । एकान्तिकस्य सुखस्य मोक्षस्य ॥ २७ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीभगवद्गीतातात्पर्यनिर्णये चतुर्दशोऽध्यायः ॥

*****

# पञ्चदशोऽध्यायः

## भाष्यम्

संसारस्वरूपतदत्ययोपायविज्ञानान्यस्मिन्नध्याये दर्शयति–

## तात्पर्यम्

त्रयोदशोक्तं विविच्य दर्शयति–

**श्री भगवानुवाच**

**ऊर्ध्वमूलमधःशाखं अश्वत्थं प्राहुरव्ययम् ।**
**छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ।। १ ।।**

## भाष्यम्

ऊर्ध्वो विष्णुः ।

**'ऊर्ध्वपवित्रो वाजिनीवस्वमृतमस्मि द्रविणꣳसवर्चसम्'** । इति हि श्रुतिः. । ऊर्ध्वः उत्तमः सर्वतः । अधो निकृष्टम् । शाखा भूतानि । श्वोऽप्येकप्रकारेण न तिष्ठतीत्यश्वत्थः । तथाऽपि न प्रवाहव्ययः । पूर्वब्रह्मकाले यथा स्थितिस्तथा सर्वत्रापीत्यव्ययता । फलकारणत्वाच्छन्दसां पर्णत्वम् । न हि कदाचिदप्यजाते पर्णे फलोत्पत्तिः ।। १ ।।

## तात्पर्यम्

**'पृथङ् मूलं हरिस्त्वस्य जगद्वृक्षस्य भूमिवत् ।**
**सत्त्वादियुक्ते चिदचित्प्रकृती मूलभागवत् ।**
**अत्रापि चिदचिद्योगो वृक्षवत् सम्प्रकीर्तितः ।**
**पृथिवीदेवतावत् तद्धरिर्मृद्वदचेतना ।**

उत्तमत्वात्तु मूलानामूर्ध्वमूलस्त्वयं स्मृतः ।
नीचास्ततो महदहम्बुद्धयो भूतसंयुताः ।
शाखाश्छन्दांसि पर्णानि काममोक्षफले ह्यतः' ।। १ ।।

अधश्चोर्ध्वं प्रसृतास्तस्य शाखा
गुणप्रवृद्धा विषयप्रवालाः ।
अधश्च मूलान्यनुसन्ततानि
कर्मानुबन्धीनि मनुष्यलोके ।। २ ।।

### भाष्यम्

अव्यक्तेऽपि सूक्ष्मरूपेण सन्ति शरीरादौ च भूतानीत्यधश्चोर्ध्वं च प्रसृताः । गुणैः सत्त्वादिभिः । प्रतीतिमात्रसुखत्वात् प्रवाला विषयाः । मूलानि भगवद्रूपादीनि । भगवानपि कर्मानुबन्धेन हि फलं ददाति । तथाहि भाल्लवेयशाखायाम्-

'ब्रह्म वा अस्य पृथङ्मूलं प्रकृतिः समूलं सत्त्वादयोऽर्वाचीनमूलम् । भूतानि शाखाश्छन्दांसि पत्राणि देवनृतिर्यञ्चश्च शाखाः । पत्रेभ्यो हि फलं जायते । मात्राः शिफाः । मुक्तिः फलममुक्तिः फलम् । मोक्षो रसः अमोक्षो रसोऽव्यक्ते च शाखाः व्यक्ते च शाखा अव्यक्ते च मूलं व्यक्ते च मूलम् एषोऽश्वत्थो गुणालोलपत्रो न स्थीयते । न न स्थीयते न ह्येष कदाचनान्यथा जायते नान्यथा जायते' ।। इति । ।। २ ।।

### तात्पर्यम्

कारणेषु स्थितं कार्यं व्याप्तं कार्येषु कारणम् ।
अन्योन्यसंयुताः शाखाः मूलानि च सदैव तु ।
विषयाः दर्शनीयत्वात् प्रवालसदृशाः मताः ।। २ ।।

न रूपमस्येह तथोपलभ्यते
नान्तो न चादिर्न च सम्प्रतिष्ठा ।
अश्वत्थमेनं सुविरूढमूल-
मसङ्गशस्त्रेण दृढेन छित्त्वा ।। ३ ।।

ततः परं तत्परिमार्गितव्यं
यस्मिन् गता न निवर्तन्ति भूयः ।
तमेव चाद्यं पुरुषं प्रपद्ये
यतः प्रवृत्तिः प्रसृता पुराणी ।। ४ ।।

### भाष्यम्

यथा स्थितिस्तथा नोपलभ्यते । अन्तादिर्विष्णुः ।

'त्वमादिरन्तो जगतोऽस्य मध्यम्' इति भागवते ।

'अनाद्य(न)न्तं परं ब्रह्म न देवा ऋषयो विदुः' इति च मोक्षधर्मे ।

असङ्गशस्त्रेण सङ्गराहित्यसहितेन ज्ञानेन । 'ज्ञानासिनोपासनया शितेन' इति हि भागवते । छेदश्च विमर्श एव । ततश्च तस्यैवाबन्धकं भवति । तथाहि मूलस्थं ब्रह्म प्रतीयते । तच्चोक्तं च तच्छ्रुतावेव–

'विमर्शो हि च्छेदः स तं न बध्नाति बध्नाति चान्यान्' इति ।

तदर्थं च तमेव प्रपद्येत । तच्चोक्तं तत्रैव–

'तं वै प्रपद्येत यं वै प्रपद्य न शोचति न हृष्यति न जायते न म्रियते तद्ब्रह्म मूलं तच्छित्सुः' इति ।

'नारायणेन दृष्टश्च प्रतिबुद्धो भवेत् पुमान्' । इति च मोक्षधर्मे ।

छेदनोपायो ह्यत्राऽकाङ्क्षितः । न च भगवतोऽन्यः शरण्योऽस्ति ।

।। ३, ४ ।।

### तात्पर्यम्

जगद्वृक्षोऽयमश्वत्थो ह्यश्ववच्चश्चलात्मकः ।
अव्ययोऽयं प्रवाहेण स्वस(क्ति)क्तज्ञानहेतिना ।
विष्णोः सम्यक् पृथग्दृष्टिनामच्छेदनभाक् सदा ।
अव्यक्तादिसमस्तं तु नेति नेत्यादिवाक्यतः ।
वोधेनैव पृथग् विष्णोः कृत्वा मृग्यः स केशवः ।
तमेवाऽद्यं प्रपद्येत यदंशाभासको ह्ययम् ।
जीवराशिः समस्तोऽपि व्रह्मरुद्रेन्द्रपूर्वकः ।। ३-४ ।।

निर्मानमोहा जितसङ्गदोषा
अध्यात्मनित्या विनिवृत्तकामाः ।
द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञै-
र्गच्छन्त्यमूढाः पदमव्ययं तत् ।। ५ ।।

### भाष्यम्

साधनान्तरमाह– निर्मानेति ।। ५ ।।

न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ।। ६ ।।

ममैवांशो जीवलोके जीवभूतः सनातनः ।
मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ।। ७ ।।

### भाष्यम्

स्वरूपं कथयति- न तदित्यादिना ।। ६, ७ ।।

### तात्पर्यम्

किञ्चित् सादृश्यमात्रेण भिन्नोऽप्यंश इवोच्यते ।
ईश्वरस्तु यदा त्वस्य शरीरं विशति प्रभुः ।
मनःपष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ।।
शब्दादीन् प्रति ......... ।। ७ ।।

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ।। ८ ।।

### भाष्यम्

कर्षतीत्युक्ते जीवस्य स्वातन्त्र्यं प्रतीतम् । तन्निवारयति-**शरीरमित्यादिना** । यत् यदा शरीरमाप्नोति उत्क्रामति च जीवः, तदेश्वर एतानि गृहीत्वा संयाति ।

'यत्र यत्र च संयुक्तो धाता गर्भं पुनः पुनः ।
तत्र तत्रैव वसति न यत्र स्वयमिच्छति' इति हि मोक्षधर्मे ।

'भावाभावावविजानन् गरीयो जानामि श्रेयो न तु तत् करोमि ।
आशासु हर्म्यासु हृदासु कुर्वन् यथा नियुक्तोऽस्मि तथा वहामि' ।।
इति च ।

'हत्वा जित्वा च मघवन् यः कश्चित् पुरुषायते ।
अकर्ता त्वेव भवति कर्ता त्वेव करोति तत्' ।। इति च ।

'तद्यथाऽनः सुसमाहितमुत्सर्जद् यायादेवमेवायं श(शा)रीर आत्मा प्राज्ञेनाऽत्मनाऽन्वारूढ उत्सर्जद् याति' इति च श्रुतिः । 'वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्' ।। इति च ।

गन्धानिव सूक्ष्माणि । भोगोऽस्यापि साधितः पुरस्तात् ।। ८ ।।

### तात्पर्यम्

....... अथ यदा जीवमादाय यात्यतः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाऽशयात् ।। ८ ।।

**श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।**
**अधिष्ठाय मनश्चायं विषयानुपसेवते ।। ९ ।।**

### भाष्यम्

इन्द्रियद्वारा हि सोऽपि भुङ्क्ते । **'यद् (तद्) य इमे वीणायां गायन्ति'** इति च श्रुतिः । गुणान्वितमेव भुङ्क्ते । **'न ह वै देवान् पापं गच्छति'** इति श्रुतेः ।। ९ ।।

**उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम् ।**
**विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ।। १० ।।**

### भाष्यम्

तर्हि किमिति न दृश्यत इत्यत आह - **उत्क्रामन्तमित्यादि** ।। १० ।।

**यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।**
**यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ।। ११ ।।**

### भाष्यम्

यतन्तो ज्ञानं प्राप्य । अकृतात्मानः अशुद्धबुद्धयः ।। ११ ।।

**यदादित्यगतं तेजो जगद् भासयतेऽखिलम् ।**
**यच्चन्द्रमासि यच्चाग्नौ तत्तेजो विद्धि मामकम् ।। १२ ।।**

### भाष्यम्

पूर्वोक्तमेव ज्ञानं प्रपञ्चयति– **यदादित्यगतमित्यादिना** ।। १२ ।।

### तात्पर्यम्

भुङ्क्ते हरिः शुभान् भोगानिन्द्रियेषु व्यवस्थितः ।
पूर्णानन्दोऽपि भगवान् क्रीडया भुङ्क्त एव तु ।। ९-१२ ।।

**गामाविश्य च भूतानि धारयाम्यहमोजसा ।**
**पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः।।१३।।**

### भाष्यम्

गां भूमिम् ।। १३ ।।

**अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।**
**प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ।। १४ ।।**

**सर्वस्य चाहं हृदि संनिविष्टो**
**मत्तः स्मृतिर्ज्ञानमपोहनं च ।**
**वेदैश्च सर्वैरहमेव वेद्यो**
**वेदान्तकृद्वेदविदेव चाहम् ।। १५ ।।**

### भाष्यम्

वेदनिर्णयात्मिका मीमांसा वेदान्तः । तथाहि सामवेदे प्राचीन-शाल(ला)श्रुतिः–

'स वेदान्तकृत् स कालक इति ।
स ह्येव युक्तिसूत्रकृत् स कालक इति' इति ।। १५ ।।

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६ ॥

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य विभर्त्यव्यय ईश्वरः ॥ १७ ॥

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १८ ॥

यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥ १९ ॥

इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।
एतद्बुद्ध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारत ॥ २० ॥

॥ ओं तत्सदिति श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे पुराणपुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः ॥

## भाष्यम्

क्षरभूतानि ब्रह्मादीनि । कूटस्थः प्रकृतिः । तथा च शार्कराक्ष्यश्रुतिः-

'प्रजापतिप्रमुखाः सर्वजीवाः क्षरोऽक्षरः पुरुषो वै प्रधानम् ।
तदुत्तमं चान्यमुदाहरन्ति जालाजालं मातरिश्वानमेकम्' ॥ इति
॥ १६-२० ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीभगवद्गीताभाष्ये पञ्चदशोऽध्यायः ॥

## तात्पर्यम्

सौम्यत्वात् सोमनामाऽसौ सोममण्डलगः सदा ।
स एवाग्निस्थितो विष्णुः नाम्ना वैश्वानरः सदा ।
सर्वेषां स नराणां यदुपजीव्यः सदैव च ।
स एव व्यासरूपेण वेदान्तकृदुदाहृतः ।
ब्रह्मरुद्रादयः सर्वे शरीरक्षरणात् क्षराः ।
श्रीरक्षरात्मेत्युदिता नित्यचिद्देहका यतः ।
चेतनाचेतनस्यास्य राशेः संस्थापकत्वतः ।
कूटस्थ आत्मा सा ज्ञेया परमात्मा हरिः स्वयम् ।

'क्षराक्षरात्मनोर्यस्मादुत्तमः स सदाऽनयोः ।
पुरुषोत्तमनाम्नाऽतः प्रसिद्धो लोकवेदयोः' ।। इति नारायणश्रुतिः ।
।। १३-२० ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभगवद्गीतातात्पर्यनिर्णये पञ्चदशोऽध्यायः ।।

*****

# षोडशोऽध्यायः

**भाष्यम्**

पुमर्थसाधनविरोधीनि अनेनाध्यायेन दर्शयति-

**श्रीभगवानुवाच**

**अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः।**
**दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ।। १ ।।**

**भाष्यम्**

तपो ब्रह्मचर्यादि । 'ब्रह्मचर्यादिकं तपः' इति ह्यभिधानम् ।। १ ।।

**अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ।**
**दया भूतेष्वलोलुत्वं मार्दवं ह्रीरचापलम् ।। २ ।।**

**भाष्यम्**

पैशुनं परोपद्रवनिमित्तदोषाणां राजादेः कथनम्-

'परोपद्रवहेतूनां दोषाणां पैशुनं वचः ।
राजादेस्तु मदाद् भीतेरदृष्टिर्दर्प उच्यते' ।। इति ह्यभिधानम् ।

लौल्यं रागः- 'रागो लौल्यं तथा रक्तिः' इत्यभिधानात् ।

अचापलं स्थैर्यम्- 'चपलश्चञ्चलोऽस्थिरः' इत्यभिधानात् ।। २ ।।

**तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।**
**भवन्ति सम्पदं दैवीमभिजातस्य भारत ।। ३ ।।**

भाष्यम्

क्षमा तु क्रोधाभावेन सहापकर्तुरनपकृतिः ।

'अक्रोधोऽदोषकृच्छत्रोः क्षमावान् स निगद्यते' । इत्यभिधानात् ।।३।।

दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।
अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम् ।। ४ ।।

दैवी सम्पद्विमोक्षाय निवन्धायासुरी मता ।
मा शुचः सम्पदं दैवीमभिजातोऽसि पाण्डव ।। ५ ।।

भाष्यम्

दैवीं सम्पदमभिजातः प्रतिजातः ।। ५ ।।

द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च ।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ।। ६ ।।

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ।। ७ ।।

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसम्भूतं किमन्यत्कामहैतुकम् ।। ८ ।।

भाष्यम्

जगतः सत्यं प्रतिष्ठा ईश्वरश्च विष्णुः । तद्वैपरीत्येनाऽहुः ।

'तस्योपनिषत् सत्यस्य सत्यमिति । प्राणा वै सत्यं तेषामेष सत्यम्' ।
इति हि श्रुतिः ।

'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च स्थितं च यच्च सच्च त्यत् च' इति च ।

'तस्योपनिषत् सत्यस्य सत्यमिति । एष ह्येवैतत् सादयति यामयति चेति' इति च प्राचीनशाल(ला)श्रुतिः ।

परस्परसम्भवो ह्युक्तः– 'अन्नाद् भवन्ति' इत्यादिना ।। ८ ।।

एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ।। ९ ।।

काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।
मोहाद्गृहीत्वाऽसद्ग्राहान्प्रवर्तन्तेऽशुचिव्रताः ।। १० ।।

### भाष्यम्

दुष्पूरो हि कामः ।

'पाताल इव दुष्पूरो मां हि क्लेशयते सदा' । इति हि मोक्षधर्मे ।। १० ।।

चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।
कामोपभोगपरमा एतावदिति निश्चिताः ।। ११ ।।

आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।
ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् ।। १२ ।।

इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ।। १३ ।।

असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं वलवान् सुखी ।। १४ ।।

आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ।। १५ ।।

अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ।। १६ ।।

आत्मसम्भाविताः स्तब्धा धनमानमदान्विताः ।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ।। १७ ।।

अहङ्कारं वलं दर्पं कामं क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ।। १८ ।।

**भाष्यम्**

मामात्मपरदेहेष्विति । न कस्यचिद् विष्णुः कारयिता, यदि स्या(न्मामपी)न्ममापीदानीं कारयत्वित्यादि ।

'ईश्वरो यदि सर्वस्य कारकः कारयीत माम् ।
अयेति वादिनं ब्रूयात् सदाऽधो यास्यसीति तु' ।।

इति हि सामवेदे यास्कश्रुतिः ।। १८ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीभगवद्गीताभाष्ये षोडशोऽध्यायः ।।

तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ।। १९ ।।

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्।। २० ।।

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्।। २१ ।।

एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ।। २२ ।।

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम्।। २३ ।।

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ।। २४ ।।

।। ओं तत्सदिति श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे दैवासुरसम्पद्विभागयोगो नाम षोडशोऽध्यायः ।।

## तात्पर्यम्

देवासुरलक्षणम्–

'येऽतिमानेन मन्यन्ते परमेशोऽहमित्यपि
मिथ्या जगदिदं सर्वं भ्रमजत्वान्न तिष्ठति ।
मिथ्यात्वान्नेश्वरोऽस्यास्ति परेभ्यो न च जायते ।
स्वस्मिन्नपि तथाऽन्यस्मिन् नियन्ताऽन्य इतीरिते ।
प्रद्विषन्त्यसुरास्ते तु सर्वे यान्त्यधरं तमः ।
अयोग्येशत्वकामत्वात् लोभाच्चाऽत्मसमर्पणे ।
तत्त्व(वेदेषु)वादिषु कोपाच्च तत(तम)स्तेषां न दुर्लभम् ।

अक्षानुमागमानां च स्वोक्तेरपि विरोधिनः ।
यस्मात् तेऽतोऽसुरा ज्ञेया एवमन्येऽपि तादृशाः ।
ये तु विष्णुं परं ज्ञात्वा यजन्तेऽनन्यदेवताः ।
प्रत्यक्षाद्यविसंवादिज्ञानादेव विमुक्तिगाः' ।। इति ब्रह्मवैवर्ते ।

'निवन्धाय' नीचस्थानेऽन्धे तमसि वन्धाय ।

'सर्गाणां सुवहुत्वेऽपि शुभाशुभपथाधिकौ ।
देवासुराख्यौ द्वावेव गन्धर्वाद्यास्तदन्तराः ।
मुक्तिगा एव विज्ञेया देवा एव विमुक्तिगाः' ।। इति च ।

'विमोक्षाय' इत्यत्र वीत्युपसर्गादेव च मोक्षनानात्वं ज्ञायते ।

'देवासुरनरत्वाद्या जीवानां तु निसर्गतः ।
निसर्गो नान्यथैतेषां केनचित् क्वचिदेव वा ।
देवाः शापवलादेव प्रह्लादादित्वमागताः ।
अतः पुनश्च देवत्वं ते यान्ति निजमेव तु ।
हेतुतः सोऽन्यथाभावो रक्तता स्फटिके यथा ।
ततो नित्यश्च नाप्येष स्वभाव विनिवर्तकः ।
किञ्चाऽक्रम्यैव तं तिष्ठेद् देवसर्गस्ततो हि यः ।
अशोच्य एव विज्ञेयो मोक्षयोग्यो हरेः प्रियः' ।। इति च ।। १-२४ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभगवद्गीतातात्पर्यनिर्णये षोडशोऽध्यायः ।।

*****

# सप्तदशोऽध्यायः

### भाष्यम्

गुणभेदान् प्रपञ्चयत्यनेनाध्यायेन ।

### तात्पर्यम्

सदसत्कर्मविवेकः ।

### अर्जुन उवाच

ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः ।
तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ।। १ ।।

### भाष्यम्

शास्त्रविधिमुत्सृज्य अज्ञात्वैव ।

'वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना' ।
इति विधिरुत्सृष्टो हि तैः ।

'ये वै वेदं न पठन्ते न चार्थं वेदोज्झितांस्तान् विद्धि सानूनबुद्धीन्' ।
इति च माधुच्छन्दसश्रुतिः ।

अन्यथा तु तामसा इत्येवोच्येत । न तु विभज्य । यदि सात्त्विकास्तर्हि नोत्सृष्टशास्त्राः । न हि वेदविरुद्धो धर्मः ।

'वेदोऽखिलो धर्ममूलम् स्मृतिशीले च तद्विदाम्' । इति हि स्मृतिः ।

'वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः' इति भागवते ।। १ ।।

### श्रीभगवानुवाच

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्त्विकी राजसी चैव तामसी चेति तां शृणु ।। २ ।।

### भाष्यम्

अतो विभज्याऽह- त्रिविधेत्यादिना ।। २ ।।

सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ।। ३ ।।

### भाष्यम्

सत्त्वानुरूपा चित्तानुरूपा । यो यच्छ्रद्धः स एव सः सात्त्विकश्रद्धः सात्त्विक इत्यादि ।। ३ ।।

### तात्पर्यम्

सत्त्वानुरूपा जीवानुरूपा अतो ये सात्त्विकश्रद्धास्ते सात्त्विका इति (ज्ञेयाः) ज्ञायन्तेऽन्येऽन्य इति । श्रद्धामयः श्रद्धास्वरूपः ।

'श्रद्धा स्वरूपं जीवस्य तस्माच्छ्रद्धाविभेदतः ।
उत्तमाधममध्यास्तु जीवा ज्ञेयाः पृथक् पृथक् ।
स्वरूपभूता श्रद्धैव तमोगानां च मोक्षिणाम् ।
शिष्यते संसृतिस्थानां श्रद्धारूपं मनोऽपरम् ।
तत्र स्वरूपश्रद्धैव व्यज्यते प्रायशः क्वचित् ।
सात्त्विकस्य तमोरूपा श्रद्धाऽन्तःकरणात्मिका ।
सात्त्विकी तामसस्यापि भूयस्त्वात् तद् विविच्यते ।
श्रद्धेत्यास्तिक्यनिष्ठोक्ता सा येषां देवतोत्तमे ।

विष्णौ तद्भक्तवुद्ध्यैव रमाब्रह्मादिकेषु तु ।
ते सात्त्विका इति ज्ञेयास्तैरिष्टं विष्णुरेव तु ।
श्रीश्च साऽध्यक्षविद्याख्या ब्रह्मेन्द्राद्याश्च देवताः ।
विवुधत्वात्तु मन्वाख्या भुञ्जते प्रीतिपूर्वकम् ।
व्यामिश्रयाजिनो ये तु विष्ण्वाधिक्ये ससंशयाः ।
स्वरूपमात्रे देवानां श्रद्धायुक्ताश्च सर्वदा ।
राजसास्ते तु विज्ञेयास्तैरिष्टं यक्षराक्षसाः ।
दीनत्वाद् देवनामानो ब्रह्मेन्द्रादिसनामकाः ।
गृह्णन्ति ये हरिं त्वन्यदेवादिसममेव वा ।
नीचं ब्रह्माद्यनन्यं वा मन्यन्ते नेति चाखिलम् ।
तत्तच्छ्रद्धायुतास्ते तु तामसाः परिकीर्तिताः ।
भूतप्रेतास्तु तैरिष्टं शिवस्कन्दादिनामकाः ।
साक्षाच्छिवपरीवारा भुञ्जते ह्यतितामसाः ।
मोक्षः साङ्कल्पिकः स्वर्गो भूतादित्वं फलं क्रमात् ।
त्यक्त्वाऽपि शास्त्रविहितं मिथ्याज्ञानविवर्जिताः ।
भक्त्या विष्णुं यजन्तो ये निषिद्धाचरणोज्झिताः ।
तेऽपि यान्ति हरिं शास्त्रविधानस्थाः कुतः पुनः' ।। ३ ।।

यजन्ते सात्त्विका देवान्यक्षरक्षांसि राजसाः ।
प्रेतान्भूतगणांश्चान्ये यजन्ते तामसा जनाः ।। ४ ।।

अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।
दम्भाहङ्कारसंयुक्ताः कामरागवलान्विताः ।। ५ ।।

## भाष्यम्

कः सात्त्विकश्रद्ध इत्यादि विभज्याऽह - यजन्त इत्यादिना ।।४।।

कर्शयन्तः शरीरस्थं भूतग्राममचेतसः ।
मां चैवान्तः शरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥ ६ ॥

आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७ ॥

## भाष्यम्

भगवत्कर्शनं नामाल्पत्वदृष्टिरेव ।

'यो वै महान्तं परमं पुमांसं नैवं द्रष्टा कर्शकः सोऽतिपापी' ।
इति ह्यनभिम्लातश्रुतिः ।

आसुरो निश्चयो येषां त आसुरनिश्चयाः ।

'देवास्तु सात्त्विकाः प्रोक्ताः दैत्या राजसतामसाः' ।
इति ह्याग्निवेश्यश्रुतिः ॥ ६, ७ ॥

## तात्पर्यम्

अशास्त्रविहितं घोरं तप्यन्ते ये तपोधनाः (तपो जनाः) ।
डम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः ।
अकृशानपि लक्ष्म्यादीन् देवान् विष्णुपरायणान् ।
विष्णुं च सर्वदेहस्थान् कृशत्वेन विजानते ।
तेषामल्पगुणत्वेन कल्पनात् ते तमो ध्रुवम् ।
यान्ति ज्ञेयाश्च ते दैत्याः पिशाचा वाऽथ राक्षसाः ॥
अन्नैश्चैवाथ यज्ञाद्यैः प्रायो ज्ञेया इमे नराः ।
सात्त्विका सात्त्विकान् कुर्युर्यस्मादन्ये तथेतरान् ॥

'ओंतत्सदिति यद् विष्णोर्नामत्रयमुदाहृतम् ।
प्रसिद्धं वैदिकं तस्मात् कर्म सद्विषयं हि सत् ।
तत्राश्रद्धाकृतं तस्मादसदित्येव कीर्त्यते ।
विप्रा वेदाश्च यज्ञाश्च यस्मादोताः परस्परम् ।
विहिता विष्णुना तेन विष्णुरोमिति कीर्तितः ।
ओतमस्मिन्निदं सर्वमिति चोक्तः स ओमिति ।
तस्मादोमिति यज्ञादीन् प्रवर्तन्ते हि वैदिकाः ।
अनोङ्कृतं ह्यासुरं स्याद् यत् तस्मादोङ्कृतं त्वपि ।
ओङ्कारार्थहरेः सम्यगज्ञानादासुरं भवेत् ।
फलं त्वनभिसन्धाय तद् ब्रह्म स्यान्ममाऽस्पदम् ।
इति यत् क्रियते कर्म तन्नामाऽतो जनार्दनः ।
अभिसन्धितं हि तत् प्रोक्तं ततं वा स्वगुणैः सदा' ।। इत्यादि च ।

'मयः(मयं) प्रधानमुद्दिष्टं स्वरूपं कार्यमेव च' इति शब्दनिर्णये ।

शास्त्रविहितमपि भगवच्छ्रद्धाहीनमसदेवेति वक्ष्यति- **'अश्रद्धया हुतम्'** इति । भगवच्छ्रद्धारहितत्वादेव चाशास्त्रविहितं भवति । 'विष्णुभक्ति-विधानार्थं सर्वं शास्त्रं प्रवर्तते' ।। इति पैङ्गिश्रुतिः ।। ४-७ ।।

आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ।।८।।

### भाष्यम्

प्रीतिरानन्तरिका । हृद्यत्वं दर्शने । स्थिराश्च न तदैव पक्वा भवन्ति । तथा ह्याज्यादयः ।। ८ ।।

### तात्पर्यम्

स्थिराः स्थिरगुणाः घृतादयः । कट्वादीनामप्यारोग्यरसाद्यर्थत्वेन सात्त्विकत्वमेव । रस्यादीनामपि राजसत्वमनारोग्यादिहेतुत्वे ।

**'दुःखशोकामयप्रदाः'** इत्युक्तेः । सत्त्वं साधुभावः । भवति हि सोऽपि शुच्यन्नात् ।

'हृद्यं पश्चान्मनोहारि प्रियं तत्कालसौख्यदम् ।
सुखदं दीर्घसुखदं रस्यमभ्यास सौख्यदम्' ।। इति शब्दनिर्णये ।। ८ ।।

**कट्वाम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।**
**आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ।। ९ ।।**

### तात्पर्यम्

रूक्षं नीरसम् । तीक्ष्णं सर्षपादि ।। ९ ।।

**यातयामं गतरसं पूति पर्युषितं च यत् ।**
**उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ।। १० ।।**

### तात्पर्यम्

'यामान्तरितपाकं तु यातयाममुदीर्यते ।
कचिच गतसारं स्यान्नियम्यं यातमस्य यत्' ।। इति च ।

पूर्वं स्वादु पश्चादन्यथाजातं गतरसम्–

'शुद्धभागवतानां तु स्वभावापेक्षयैव तु ।
स्वादुत्वादि विजानीयात् पदार्थानां न चान्यथा' ।। इति सूदशास्त्रे ।
।। १० ।।

अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥ ११ ॥

अभिसन्धाय तु फलं दम्भार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ १२ ॥

विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४ ॥

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १५ ॥

## तात्पर्यम्

'यागात्तु राजसात् स्वर्गः साङ्कल्पिक उदाहृतः ।
लोकः स दीनदेवानां सनाम्नां वासवादिभिः ।
विष्णावश्रद्धयाऽयोग्यकामाच्चैषां पुनर्भवेत् ।
नरकं च विना यज्ञं राजसा नरलोकगाः ।
निषिद्धकर्म कुर्युश्चेदीयुस्ते नरकं ध्रुवम् ।

'कदाचित् सात्त्विकाः कुर्युः कर्म राजसतामसम् ।
अन्येऽन्यच्च तथाऽप्येषां स्थितिः स्वाभावि(की)के पुनः ।
स्वं स्वं कर्म तु सर्वेषां सदैव स्यान्महत्फलम् ।
अन्यदल्पफलं चैव बाहुल्यं तेषु लक्षणम्' ॥ इति पाद्मे ॥ १२-१५ ॥

मनः प्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ।। १६ ।।

### भाष्यम्

सौम्यत्वमक्रौर्यम् । 'अक्रूरः सौम्य उच्यते' इति ह्यभिधानम् ।

मौनं मननशीलत्वम्–

'वाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः' इति हि श्रुतिः ।

'एतेन हीदं सर्वं मतम् । यदनेनेदं सर्वं मतं तस्मान्मुनिस्तस्मान्मुनिरित्याचक्षते' । इति हि भाल्लवेयश्रुतिः ।

कथमन्यथा मानसं तपः स्यात् ? ।। १६ ।।

### तात्पर्यम्

मौनं मननम् ।। १६ ।।

श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः ।
अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ।। १७ ।।

सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ।। १८ ।।

मूढग्राहेणात्मनो यत्पीडया क्रियते तपः ।
परस्योत्सादानर्थं वा तत्तामसमुदाहृतम् ।। १९ ।।

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम्।। २० ।।

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ।। २१ ।।

अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ।। २२ ।।

### तात्पर्यम्

युक्तैः भगवदर्पणादियोगयुक्तैः । युक्तैरिति दानादिषु सर्वत्र समम्
।। १७-२२ ।।

ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ।। २३ ।।

तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ।। २४ ।।

### भाष्यम्

पुनश्च कर्मादीतिकर्तव्यताविधानार्थमर्थवादमाह– **ओं तदित्यादिना** । परस्य ब्रह्मणो ह्येतानि नामानि–

'ओतं जगद् यत्र स्वयं च पूर्णो वेदोक्तरूपोऽनुपचारतश्च ।
सर्वैः शुभैश्चाभियुतो नचान्यैः ओं तत्सदित्येनमतो वदन्ति' ।।
इति हि ऋग्वेदखिलेषु ।

द्वितीयपादस्तच्छब्दार्थः । **'सदेव सोम्येदमग्र आसीत्'** इति च । **'ओमिति ब्रह्म'** इति च । तेन ब्रह्मणा । आत्मपूजार्थम् । वेदविधिर्व्यञ्जनम् । मा तूक्ता पुरस्तात् ।। २३, २४ ।।

तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः ।
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ।। २५ ।।

### भाष्यम्

तत् फलं मे स्यादित्यनभिसन्धाय ।। २५ ।।

सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ।। २६ ।।

यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ।। २७ ।।

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ।। २८ ।।

।। ओं तत्सदिति श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्यायः ।।

### भाष्यम्

सद्भावशब्देन प्रजननं सूचितम् । ओमित्युक्त्वाऽनभिसन्धाय फलं यज्ञदानतपआदिकृतामतिप्रीतेर्नामसाम्याद् ब्रह्मैव निष्पादितं भवतीत्याशयः । तथा च ऋग्वेदखिलेषु–

'ओं यज्ञाद्या निष्फलं कर्म तत् स्यात् सद् वै तदर्थं कर्म वदन्ति वेदाः । तच्छब्दानां सन्निधेर्ब्रह्मप्रीतेस्तद्रूपत्वाज्जनितं ब्रह्म तस्य' ।।
इति ।। २६-२८ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीभगवद्गीताभाष्ये सप्तदशोऽध्यायः ।।

## तात्पर्यम्

तत्सम्बन्धित्वादेव कर्मादि सत् । ओं तत्सदिति नाम्नां विष्णौ प्रसिद्धत्वात् । ''स्रवत्यनोङ्कृतं ब्रह्म परस्ताच्च विशीर्यते । अनोङ्कृतं आसुरं कर्म'' इति श्रुतेः अनोङ्कृतस्य आसुरत्वप्रसिद्धेः ।

**''अनर्थज्ञोदितो मन्त्रो निरर्थस्त्वाति मानतः ।**
**यन्मन्त्रस्तेन कथितो मन्त्रार्थो ज्ञेय एव तत्''** ।।

इति पैङ्गिश्रुतेश्च ।

तदर्थत्वेन फलानभिसन्धिपूर्वककर्मणः एव सात्त्विकत्वाच्च । तद्भक्त्या तत्स्मरणपूर्वकमेव कर्म सत् अन्यदसदेवेति भावः । राजसस्यापि असदन्तर्भाव एव । विष्णुश्रद्धारहितत्वात् ।।

**'सात्त्विकं मोक्षदं कर्म राजसं सृतिदुःखदम् ।**
**तामसं पातदं ज्ञेयं तत् कुर्यात् कर्म वैष्णवम्'** ।। इत्याग्नेये।।२३-२८।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभगवद्गीतातात्पर्यनिर्णये सप्तदशोऽध्यायः ।।

*****

# अष्टादशोऽध्यायः

### भाष्यम्

पूर्वोक्तं साधनं सर्वं सङ्क्षिप्योपसंहरति अनेनाध्यायेन-

### तात्पर्यम्

सर्वाध्यायोक्तधर्मस्य समासतो निर्णयात्मकोऽनुक्तत्रैगुण्यवादी चायम् ।

### अर्जुन उवाच

**संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ।**
**त्यागस्य च हृषीकेश पृथक्केशिनिषूदन ॥ १ ॥**

### श्रीभगवानुवाच

**काम्यानां कर्मणां न्यासं सन्यासं कवयो विदुः ।**
**सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ २ ॥**

### भाष्यम्

फलानिच्छयाऽकरणेन वा काम्यकर्मन्यासः संन्यासः । त्यागस्तु फलत्याग एव । तथाहि प्राचीनशालश्रुतिः-

**'अनिच्छयाऽकर्मणा वाऽपि काम्यकर्मन्यासो न्यासः फलत्यागस्तु त्यागः'** इति ॥ १, २ ॥

**त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।**
**यज्ञदानतपः कर्म न त्याज्यमिति चापरे ॥ ३ ॥**

### भाष्यम्

'मनीषिणः' इति (उक्तत्वात्) विशेषणात् पूर्वपक्षोऽपि ग्राह्य एव । फलत्यागेन त्यागो विवक्षितो यज्ञादेस्तत्पक्षे । **'यस्तु कर्मफलत्यागी'** इति च वक्ष्यति । अत एक एवायं पक्षः ॥ ३ ॥

### तात्पर्यम्

**'मनीषिणः'** इत्युक्तत्वात् तेऽप्यनिन्द्याः । अतः **'त्याज्यं दोषवत्'** इत्यस्यार्थः **'सङ्गं त्यक्त्वा फलं च'** इति ॥ ३ ॥

**निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।**
**त्यागो हि पुरुषव्याघ्र त्रिविधः सम्प्रकीर्तितः ॥ ४ ॥**

### भाष्यम्

तत्प्रकारं चाऽह– **निश्चयमित्यादिना** ॥ ४ ॥

**यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत् ।**
**यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५ ॥**

**एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।**
**कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६ ॥**

### भाष्यम्

यज्ञभेद उक्तो **'द्रव्ययज्ञाः'** इत्यादिना । दाने त्वभयदानमन्तर्भवति । एतेषां मध्ये यत्किञ्चिद् यज्ञादिकं कर्तव्यमेवेत्यर्थः । अन्यथा

'ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तथा ।
यदीच्छेन्मोक्षमास्थातुं उत्तमाश्रममाश्रयेत्' ॥ इत्यादिव्यासस्मृतिविरोधः ।

ज्ञानयज्ञविद्याभयदानब्रह्मचर्यादितपसो हि ते । अतो यद् वचोऽन्यथा प्रतीयते, अधिकारभेदेन तद् योज्यम् । अन्यथेतरेषां गत्यभावात् । ॥ ५, ६ ॥

## तात्पर्यम्

द्रव्ययज्ञादीनां मध्ये स्वोचितो यज्ञो विद्यादानादिषु स्वोचितं दानं स्वोचितं तपश्च सर्वैर्वर्णाश्रमिभिरन्यैश्च कार्यमेवेत्यर्थः । विष्णुनामस्वाध्यायोऽन्त्यानां सत्योपवासादितपश्च ॥ ५,६ ॥

**नियतस्य तु संन्यासः कर्मणो नोपपद्यते ।**
**मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥ ७ ॥**

## तात्पर्यम्

सङ्गफलत्यागमृते स्वरूपत्यागः कार्य इति मिथ्याज्ञानाख्यमोहात् । 'स्वयज्ञादीन् परित्यज्य निरयं यात्यसंशयम्' । इति पाद्मे ॥ ७ ॥

**दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ।**
**स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ ८ ॥**

**कार्यमित्येव यत् कर्म नियतं क्रियतेऽर्जुन ।**
**सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः॥९॥**

## तात्पर्यम्

मोहं विना दृष्टदुःखमित्येव । दुःखशब्देन केवलमानसम् । कायक्लेशस्य पृथगुक्तेः ।

'दुःखं तु मानसं ज्ञेयमायासो वाह्य उच्यते ।
विशेषस्य विवक्षायामन्यथा सर्वमेव तु' ।। इति शव्दनिर्णये ।। ८,९ ।।

न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते ।
त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ।। १० ।।

न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ।। ११ ।।

### भाष्यम्

अन्यः त्यागार्थो न युक्त इत्याह- न हीति ।। ११ ।।

### तात्पर्यम्

'न द्वेष्ट्यकुशलं कर्म केवलं दृष्टदुःखदम् ।
जन्मान्तरकृते पुण्ये न सज्जेत् सात्त्विकश्चले ।
यः सम्यक् तत्त्वविद् विष्णोस्तदर्पणधियैव तु ।
फलेच्छावर्जितस्तस्य कर्मवन्धाय नो भवेत् ।
वहुलं चेदल्पदोषं यावदेवापरोक्षदृक्' ।। इति च ।। १०,११ ।।

अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित्।। १२ ।।

### भाष्यम्

त्यागं स्तौति- अनिष्टमिति ।। १२ ।।

### तात्पर्यम्

अन्येषामिष्टम् । अस्य तु त्यागित्वादेव नेष्टम् ।

'ज्ञानादेर्मोक्षभोग्याच्च नान्यत् स्यात् कर्मणः फलम् ।।
त्यागिनस्तत्त्वसंवेत्तुरन्येषां तदृते फलम्' ।। इति च ।

केवलकाम्यकर्मणां फलानपेक्षयाऽप्यकरणमित्येतावांस्त्यागात् संन्यासस्य विशेष इत्यत्यागिनां प्रतियोगित्वेन न्यासिन उक्ताः । त्यागित्वं तेषामपि ह्यस्ति ।

'परेच्छयाऽपि ये काम्यं कर्म कुर्युर्न तु क्वचित् ।
न्यासिनो नाम तेऽन्येभ्यः फलत्यागिभ्य उत्तमाः' ।। इति च ।। १२ ।।

पञ्चैतानि महाबाहो कारणानि निबोध मे ।
सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम्।। १३ ।।

### भाष्यम्

पुनः संन्यासं प्रपञ्चयितुं कर्मकारणान्याह - पञ्चेत्यादिना । साङ्ख्यकृतान्ते ज्ञानसिद्धान्ते ।। १३ ।।

### तात्पर्यम्

'कथितं परमं साङ्ख्यं कपिलाख्येन विष्णुना ।
सेश्वरं वैदिकं साक्षाज्ज्ञेयमन्यदवैदिकम्' ।। इति च ।। १३ ।।

अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ।। १४ ।।

शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः ।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ।। १५ ।।

### भाष्यम्

अधिष्ठानं देहादिः । कर्ता विष्णुः । स हि सर्वकर्तेत्युक्तम् । जीवस्य चाकर्तृत्वे प्रमाणमुक्तम् । करणमिन्द्रियादि च । चेष्टाः क्रियाः । हस्तादिक्रियाभिर्हि होमादिकर्माणि जायन्ते । ध्यानादेरपि मानसी चेष्टा कारणम् । पूर्वतनचेष्टाऽपि संस्कारकारणत्वेन भवति । दैवमदृष्टम् । तथाचायास्यश्रुतिः–

'देहो ब्रह्माथेन्द्रियाद्याः क्रियाश्च तथाऽदृष्टं पञ्चमं कर्महेतुः' । इति ।

।। १४, १५ ।।

### तात्पर्यम्

अधिष्ठानं शरीरादि ।। १४, १५ ।।

**तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।**
**पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ।। १६ ।।**

### भाष्यम्

केवलं निष्क्रियम् ।

'एनं केवलमात्मानं निष्क्रियत्वाद् वदन्ति हि' । इति तत्रैव ।। १६ ।।

**यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।**
**हत्वापि स इमाँल्लोकान्न हन्ति न निबध्यते ।। १७ ।।**

### भाष्यम्

तज्ज्ञानं स्तौति- **यस्येति** । यस्त्वीषद् बद्ध्यते स ईषदहङ्कारी च ।

।। १७ ।।

## तात्पर्यम्

'स्वातन्त्र्यमीश्वरे वेत्ति नैवाऽत्मनि कदाचन ।
ईश्वराधीनमेवाऽत्मन् स्वातन्त्र्यं तु जडान् प्रति ।
तारतम्येन लक्ष्म्यादेर्जीवान् प्रति च सर्वशः ।
यस्तदर्थं समुत्पन्नो यथा रुद्रो यथा यमः ।
हत्वाऽपि स इमान् लोकान् न हन्ति न निवद्ध्यते ।
अज्ञस्तदर्थं जातोऽपि व(ब)द्ध्यते दैत्यवद् ध्रुवम् ।
अपरोक्षदृङ् न जातो यस्तदर्थं मुक्तिगं सुखम् ।
ह्रसेत् तस्य परोक्षज्ञः किञ्चिद् दोषेण लिप्यते' ।। इति च ।

अस्वातन्त्र्यज्ञानात् हन्मीति भावोऽप्यस्य नास्तीति न हन्ति । अन्यस्य भावोऽस्तीति विशेषः । **'बुद्धिर्यस्य न लिप्यते'** इति । रागान्न हन्ति, किन्तु धर्मबुद्ध्या ।

'स्वातन्त्र्यं मन्यमानस्य रागाद् धर्मं च कुर्वतः ।
तन्निमित्तस्तु दोषः स्याद् गुणश्च स्यात् सुकर्मजः' ।। इति च ।। १७ ।।

**ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।**
**करणं कर्म कर्तेति त्रिविधः कर्मसङ्ग्रहः ।। १८ ।।**

## भाष्यम्

एवं तर्हि न पुरुषमपेक्ष्य विधिः, अकर्तृत्वादित्यत आह- **ज्ञानमिति** । त्रिविधा कर्मचोदना । एतत् त्रिविधमपेक्ष्य कर्मविधिरिति त्रिविधेत्युच्यते । कारणानि सङ्क्षिप्याऽह– **करणमिति** । कर्मसङ्ग्रहः कर्मकारणसङ्क्षेपः । अधिष्ठानादि करण एवान्तर्भूतम् । तथाह्युग्वेदखिलेषु-

'ज्ञानं ज्ञेयं ज्ञानिनं चाप्यपेक्ष्य विधिरुत्थितः ।
करणं चैव कर्ता च कर्मकारणसङ्ग्रहः' ।। इति ।

अकर्तृत्वेऽपि विधिद्वारेश्वरप्रसादादिच्छोत्पत्त्या उक्तकारणैः कर्मद्वारा पुरुषार्थो भवतीति । ईश्वराधीनत्वेऽपि विधिद्वारा नियतस्तेनैव । यदि चेच्छादिर्जायते तर्हि कारितमेवेश्वरेण । फलं च नियतम् । वस्तुतोऽकर्तृत्वेऽप्याभिमानिकं कर्तृत्वं तस्यैव । स्वातन्त्र्यं च जडमपेक्ष्येति न प्रवृत्तिविधिवैयर्थ्यम् । सर्वं चैतदनुभवोक्तप्रमाणसिद्धमिति न पृथक् प्रमाणमुच्यते ।। १८ ।।

## तात्पर्यम्

'सम्प्रेरयितुरीशस्य कर्मस्वखिलचेतनान् ।
ज्ञातृज्ञेयज्ञानरूपा प्रेरणा सा स एव यत् ।
स्वरूपेणैव नित्या सा विशेषात्मतया भवेत् ।
विशेषोऽपि स्वरूपेण नित्यश्च स्याद् विशेषतः ।
स्वनिर्वाहकता यस्मान्नानवस्था विशिष्टवत् ।
विशेष्यस्य विशिष्टस्याप्यभेदे(प्य)ऽपि विवादिनि ।
विशेषोऽस्त्येव नात्रापि ह्यनवस्था कदाचन ।
ज्ञातुरन्योऽहमिति तु कस्याप्यनुभवो न हि ।
अस्मि ज्ञातैवाहमिति भेदस्तस्मात् तयोः कुतः ।
पश्यामीति विशेषोऽयमिदानीं मे समुत्थितः ।
इत्याद्यनुभवाद् भेदो न विशेष्यविशिष्टयोः ।
विशेषणं तु द्विविधं विशेषाख्यं तथेतरत् ।
विशेषमणयेद् येन प्रोक्तं तेन विशेषणम् ।
विशेषोऽपि विशेषस्य स्वस्यैव गमको भवेत्' ।। इत्यादि तत्त्वविवेके ।

सङ्ग्रहः पञ्चकारणानां सङ्क्षेपः । अधिष्ठानस्य करणेऽन्तर्भावात् । दैवशब्दोदितेश्वरस्यैव मुख्यकर्तृत्वात् स्वतन्त्रकर्त्रोः कर्तृशब्देनैवोक्तेः त्रैविध्यम् । कर्म चेष्टा ।। १८ ।।

**ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ।**
**प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि ॥ १९ ॥**

### भाष्यम्

पुनः साधनप्रथनाय गुणभेदानाह– **ज्ञानमित्यादिना** । गुणसङ्ख्याने गुणगणनप्रकरणे ॥ १९ ॥

### तात्पर्यम्

एवं गुणसङ्ख्याने परमसाङ्ख्यशास्त्रे ॥ १९ ॥

**सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।**
**अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम्॥ २० ॥**

### भाष्यम्

एकं भावं विष्णुम् ॥ २० ॥

### तात्पर्यम्

'अस्तित्वाद् भूतनामभ्यः सर्वजीवेभ्य एव यत् ।
मुक्तेभ्योऽपि पृथक्त्वेन विष्णोः सर्वत्रगस्य च ।
ऐक्येन च स्वरूपाणां प्रादुर्भावादिकात्मनाम् ।
तारतम्येन जीवानां भेदेनैव परस्परम् ।
जडेभ्यश्चैव जीवानां जडानां च परस्परम् ।
तेभ्यो विष्णोश्च सम्यक् तल्लक्षणज्ञानपूर्वकम् ।
ज्ञानं सात्त्विकमुद्दिष्टं यत् साक्षान्मुक्तिकारणम्' ॥ २० ॥

**पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान् ।**
**वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥ २१ ॥**

यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् ।
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥ २२ ॥

## तात्पर्यम्

'विष्णोरन्यस्य याथार्थ्यज्ञानं राजसमुच्यते ।
यदि विष्णुं न जानाति यदि वा मिश्रतत्त्ववित् ।
अन्यथाकरणीयत्वात् कार्याख्यं जीवमेव यः ।
अकार्यं ब्रह्म जानाति स एवाखिलमित्यपि ।
एकजीवपरिज्ञानात् कृत्स्नज्ञोऽस्मीति मन्यते ।
युक्तिभिर्ज्ञान(युक्तिविज्ञान)राहित्यात् स्वपक्षस्याल्पयुक्तितः ।
अयुक्ततामेव गुणं मन्यते चाल्पदर्शनः ।
अतत्त्वार्थं जगद् ब्रूते तत्त्वार्थज्ञानवर्जनात् ।
स मुख्यतामसज्ञानी ह्येकैकेनापि किं पुनः ।
सर्वैरेतैर्विशेषैश्च युक्तः पापतमाधिकः' ।। इति पाद्मे ।

'पृथक्त्वेन तु यज्ज्ञानम्' इत्यस्य व्याख्यानम्- **'नानाभावान्'** इत्यादि । सर्वगतमेकमीश्वरं न जानातीत्येतावतैव राजसत्वम् । एकस्य कृत्स्नवज्ज्ञानमेव तामसम् । मुक्तत्वादिरूपेण अन्यथा करणीयत्वात् पराधीनत्वेनाल्पस्य जीवस्य स्वातन्त्र्यादिगुणपूर्णत्वात् कृत्स्नेन ब्रह्मणैक्य-ज्ञानं च महातामसम् । किं पुनस्तावन्मात्रं सर्वमिति ज्ञानम् । किं पुनस्तत्राप्येकजीवादन्यत् किमपि नास्तीति अहैतुकं ज्ञानं सर्वमपि तामसम् । किमु तदेवोक्तलक्षणम् । अतत्त्वार्थवत् सदसद्वैलक्षण्या-द्यन्यथार्थकल्पनायुक्तमेव तामसम् । किमु तदेवोक्तविशेषणैर्युक्तम् । प्रायोऽल्पज्ञानमपि तामसम् । अज्ञानबहुलत्वात् किमु तदेवोक्तमिथ्या-ज्ञानबहुलमित्यपुनरुक्तिः । एकस्मिन् सर्ववज्ज्ञानं कार्ये जीवे पूर्णब्रह्मेति

सक्तं ज्ञानं निर्युक्तिकं चातत्त्वार्थकल्पनायुक्तमल्पज्ञानं च पृथक्पृथगपि तामसानीति च । मायावादे त्वेतानि समस्तानि । अन्यत्रापि त्वहैतुकत्वादिकं विरुद्धवादिषु समं सर्वेषु ॥ २१,२२ ॥

**नियतं सङ्गरहितमरागद्वेषतः कृतम् ।**
**अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥ २३ ॥**

**यत्तु कामेप्सुना कर्म साहङ्कारेण वा पुनः ।**
**क्रियते वहुलायासं तद्राजसमुदाहृतम् ॥ २४ ॥**

**अनुवन्धं क्षयं हिंसामनवेक्ष्य च पौरुषम् ।**
**मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥ २५ ॥**

## तात्पर्यम्

**'मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा'** इत्युक्त्वा **'ये मे मतम्' 'ये त्वेतत्'** इति च तस्य मोक्षसाधनत्वस्याकरणे प्रत्यवायस्य चोक्तेर्भगवदर्पितत्वेन सर्वकर्मकरणं तस्य विष्णोः सर्वपरमत्वज्ञानं च नियतमेवेति ज्ञायते । **'अध्यात्मचेतसा'** इत्युक्तत्वात् तत्स्व(तत्व)-रूपयाथार्थ्यज्ञानादि । **'ये तु सर्वाणि'** इत्यस्मिन् श्लोकेऽध्यात्म-चेतस्त्वस्य **'मत्पराः अनन्येनैव योगेन मां ध्यायन्तः'** इति व्याख्यातत्वात् । एवं सर्वमपि भगवद्भक्तियुक्तमेव सात्त्विकम् ।
॥ २३-२५ ॥

**मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।**
**सिद्ध्यसिद्ध्योः निर्विकारः कर्ता सात्विक उच्यते॥२६॥**

### तात्पर्यम्

सर्वस्य भगवदधीनत्वनिश्चयादेवानहंवादी ।। २६ ।।

रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ।। २७ ।।

अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः ।
विषादी दीर्घसूत्री च कर्ता तामस उच्यते ।। २८ ।।

### भाष्यम्

परकृतं दोषं दीर्घकालकृतमप्यनुचितं यः सूचयति स दीर्घसूत्री-

'परेण यः कृतो दोषो दीर्घकालकृतोऽपि वा ।
यस्तस्य सूचको दोषाद् दीर्घसूत्री स उच्यते' ।। इत्यभिधानात् ।। २८ ।।

बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।
प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय ।। २९ ।।

### तात्पर्यम्

'भगवद्भक्तिसामर्थ्यात् प्रकृष्टो न कृतो हि यः ।
स प्राकृतो दीर्घसूत्री कुर्यां पश्चादिति स्मरन्' ।। इति शब्दतत्त्वे ।

प्राप्तकालस्य कर्मणो दीर्घकालेनैव कृतिं सूचयन् दीर्घसूत्रीत्यर्थः ।

'अलसो दीर्घसूत्री च सत्त्वयुक् तामसो मतः ।
अयुक्तो राजसः स्तब्धः प्राकृतो नैकृतिः शठः ।
एकैकेनैव दोषेण प्रोक्तस्तामसतामसः ।
दुर्नरत्वं च तिर्यक्त्वं तमश्चैतत्फलं क्रमात्' ।। इति च ।। २८-२९ ।।

प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।
वन्धं मोक्षं च या वेत्ति वुद्धिः सा पार्थ सत्त्विकी ।। ३० ।।

यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।
अयथावत्प्रजानाति वुद्धिः सा पार्थ राजसी ।। ३१ ।।

### भाष्यम्

यथार्थत्वनियमाभा(वे)वो राजस्याः । अन्यथा तामस्याः भेदाभावात् ।
।। ३१ ।।

अधर्मं धर्ममिति या मन्यते तमसाऽवृता ।
सर्वार्थान्विपरीतांश्च वुद्धिः सा पार्थ तामसी ।। ३२ ।।

### तात्पर्यम्

'किञ्चिद् यथावद् धर्मादीनयथावच्च पश्यति ।
यया वुद्ध्या राजसी सा मिथ्यादृक्त्वेव तामसी' ।। इति च ।।३१,३२।।

धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी।। ३३ ।।

यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन ।
प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ।। ३४ ।।

### तात्पर्यम्

'वैष्णवो भक्तियोगो यस्त(दुक्ता)द्युक्ता सात्त्विकी धृतिः' । इति च ।
विहितविषयैवेत्यव्यभिचारिणी ।। ३३,३४ ।।

### तात्पर्यम्

सर्वस्य भगवदधीनत्वनिश्चयादेवानहंवादी ।। २६ ।।

रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ।। २७ ।।

अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः ।
विषादी दीर्घसूत्री च कर्ता तामस उच्यते ।। २८ ।।

### भाष्यम्

परकृतं दोषं दीर्घकालकृतमप्यनुचितं यः सूचयति स दीर्घसूत्री-

'परेण यः कृतो दोषो दीर्घकालकृतोऽपि वा ।
यस्तस्य सूचको दोषाद् दीर्घसूत्री स उच्यते' ।। इत्यभिधानात् ।। २८ ।।

बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।
प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय ।। २९ ।।

### तात्पर्यम्

'भगवद्भक्तिसामर्थ्यात् प्रकृष्टो न कृतो हि यः ।
स प्राकृतो दीर्घसूत्री कुर्यां पश्चादिति स्मरन्' ।। इति शब्दतत्त्वे ।

प्राप्तकालस्य कर्मणो दीर्घकालेनैव कृतिं सूचयन् दीर्घसूत्रीत्यर्थः ।

'अलसो दीर्घसूत्री च सत्त्वयुक् तामसो मतः ।
अयुक्तो राजसः स्तब्धः प्राकृतो नैकृतिः शठः ।
एकैकेनैव दोषेण प्रोक्तस्तामसतामसः ।
दुर्नरत्वं च तिर्यक्त्वं तमश्चैतत्फलं क्रमात्' ।। इति च ।। २८-२९ ।।

प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।
वन्धं मोक्षं च या वेत्ति वुद्धिः सा पार्थ सत्त्विकी ।। ३० ।।

यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।
अयथावत्प्रजानाति वुद्धिः सा पार्थ राजसी ।। ३१ ।।

### भाष्यम्

यथार्थत्वनियमाभा(वे)वो राजस्याः । अन्यथा तामस्याः भेदाभावात् ।
।। ३१ ।।

अधर्मं धर्ममिति या मन्यते तमसाऽवृता ।
सर्वार्थान्विपरीतांश्च वुद्धिः सा पार्थ तामसी ।। ३२ ।।

### तात्पर्यम्

'किञ्चिद् यथावद् धर्मादीनयथावच्च पश्यति ।
यया वुद्ध्या राजसी सा मिथ्यादृक्त्वेव तामसी' ।। इति च ।।३१,३२।।

धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी।। ३३ ।।

यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन ।
प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ।। ३४ ।।

### तात्पर्यम्

'वैष्णवो भक्तियोगो यस्त(दुक्ता)द्युक्ता सात्त्विकी धृतिः' । इति च ।
विहितविषयैवेत्यव्यभिचारिणी ।। ३३,३४ ।।

यया स्वप्नं भयं शोकं विषादं मदमेव च ।
न विमुञ्चति दुर्मेधा धृतिः सा पार्थ तामसी ।। ३५ ।।

सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ।
अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ।। ३६ ।।

## तात्पर्यम्

'स्वप्नं भयम्' इत्यादि सर्वनिषिद्धोपलक्षणम् ।

'तत्तत् सात्त्विकमेव स्याद् यद्यद् वृद्धाः प्रचक्षते ।
निन्दन्ति तामसं तत्तद् राजसं तदुपेक्षितम्' ।। इति हि भागवते ।

'महात्मानस्तु मां पार्थ' 'अभयं सत्त्वसंशुद्धिः' इत्यादिना वृद्धाश्चोक्ताः
।। ३५, ३६ ।।

यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।
तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ।। ३७ ।।

## तात्पर्यम्

'विष्णोः प्रसादात् स्वमनःप्रसादात् सात्त्विकं सुखम्' इति पाद्मे ।
।। ३७ ।।

विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत्सुखं राजसं स्मृतम् ।। ३८ ।।

यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ।। ३९ ।।

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ।। ४० ।।

ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ।। ४१ ।।

## तात्पर्यम्

सत्त्वं जीवजातम् । मुक्तानां गुणातीतत्वात् 'पृथिव्यां दिवि देवेषु वा' इति विशेषः ।

'यथेष्टं सञ्चरन्तोऽपि मुक्ता भूम्यादिगा न तु ।
ग्रामस्था अपि न ग्राम्या वैलक्षण्याद्धि सज्जनाः ।
नराधमास्तामसेषु सात्त्विकास्तत्र राजसाः ।
दैत्यभृत्या महादैत्या मुख्यतामसतामसाः ।
राजसास्तु नरास्तत्र विप्रा राजससात्त्विकाः ।
तत्रस्थशुद्धसत्त्वास्तु परहंसाः प्रकीर्तिताः ।
हंसो वहूदः कुटिको वनस्थो नैष्ठिको गृही ।
क्रमाद् रजोधिका वाह्यं कर्मैषामधिकं यतः ।
धर्माः परमहंसानां ब्राह्मा एव शमादिकाः ।
देवादेः कर्मवाहुल्यं न लिङ्गं रजसः क्वचित् ।
न हि विष्णोश्चलेत् तेषां मनः कर्मकृतावपि ।
अन्येषां चलचित्तत्वात् प्रायः स्यात् कर्म राजसम् ।
यदि तत् स्मारकं विष्णोर्विद्यात् सात्त्विकमेव तत् ।
धर्मार्थहिंसनाऽग्निश्च विशेषो ब्रह्मचारिण; ।
पैतृकं चापि यतितो दारास्तु गृहिणस्ततः ।
असर्गो (असङ्गो) ग्राम्यसन्त्यागः पश्वहिंसा गृहस्थतः ।
वनस्थस्य विशेषोऽयं सर्वेषामितरत् समम्' ।। इति च ।

'सात्त्विकाः स्वल्परजसः क्षत्रियाः सत्त्वराजसाः ।
वैश्याः शूद्रा अतिस्वल्पसत्त्वाधिक्येन तामसाः ।
ये तु भागवता वर्णास्तेषां भेदोऽयमीरितः ।
सत्त्वाधिकः पुल्कसोऽपि यस्तु भागवतः सदा ।
त्रैविद्यमात्रा विष्णोर्ये सर्वाधिक्ये ससंशयाः ।
अन्याधिक्यं न मन्यन्ते श्रीशाद् राजसराजसाः ।
अज्ञा विष्णौ द्वेषहीनाः सर्वे राजसतामसाः ।
पितृगन्धर्वपूर्वाश्च मुनयो देवता इति ।
सात्त्विकास्त्रिविधास्तत्र श्रेष्ठा एवोत्तरोत्तराः ।
देवा इन्द्रो विरिञ्चाद्या इति त्रेधैव देवताः ।
क्रमोत्तराः शिवो वाणी ब्रह्मा चैवोत्तरोत्तराः ।
सत्त्वसत्त्वमहासत्त्वसूक्ष्मसत्त्वश्चतुर्मुखः ।
तस्माद् यावद् विमुक्तिः स्यान्मुक्तावेवं सुखक्रमः' ।। इति च ।

विष्णौ किञ्चिदप्रीतियुक्तास्तामसमध्ये सात्त्विका नराधमा इत्यर्थः । राजसानां मध्ये सात्त्विका एव भागवतविप्रादयः ।

राजसस्थसात्त्विकेष्वेव शुद्धसात्त्विकाः किञ्चिद्रजोयुक्तसात्त्विकाः समरजोयुक्तसात्त्विकाः सत्त्वात् किञ्चिदूनतमोयुक्तसात्त्विका इति वर्णभेदः । सत्त्वप्रधानत्वादेव तानारभ्योत्तरोत्तरं सर्वेऽपि मोक्षयोग्याः । 'सत्त्वात् सञ्जायते ज्ञानम्' इत्यादेः ।

'सत्त्वाधिको मोक्षयोग्यो योग्योऽन्धतमसस्तथा ।
तम उत्तरो रजो भूयान् समो वा सृतिपात्रकः' ।। इति च ।। ४०,४१ ।।

शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ।। ४२ ।।

### तात्पर्यम्

'शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म (विप्रकर्म) स्वभावजम् ।
एते गुणाः किञ्चिदूना विप्रात् क्षत्रिय एव च ।
अधिका वा ब्राह्मणेभ्यः केषुचिच्चक्रवर्तिषु ।
ऋषयस्त्वेव विज्ञेयाः कार्तवीर्यादयो नृपाः ।। ४२ ।।

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ।। ४३ ।।

### तात्पर्यम्

'शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षत्रियेऽ(भ्यो)न्ये गुणा अपि ।। ४३ ।।

कृषिगोरक्षवाणिज्यं वैश्यकर्म स्वभावजम् ।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ।। ४४ ।।

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ।। ४५ ।।

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ।। ४६ ।।

श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ।। ४७ ।।

सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ।
सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ।। ४८ ।।

## तात्पर्यम्

'क्षत्रियोनब्रह्मगुणो वैश्यः कृष्यादिजीवनः ।
तत ऊनः शमाद्यैर्यः शुश्रूषुः शूद्र उच्यते ।
अधिकाश्चेद् गुणाः शूद्रे ब्राह्मणादिः स उच्यते ।
ब्राह्मणोऽप्यल्पगुणकः शूद्र एवेति कीर्तितः ।
नरोऽपि यो देवगुणो ज्ञेयो देवो नृतां गतः' ।। इति च ।

**'स्वकर्मणा तमभ्यर्च्य'** इति वचनाच्च क्षत्रियादिष्वपि शमाद्यनुवृत्तिर्ज्ञायते । न हि शमादिकं विना तस्याभितोऽर्चनं भवति । सम्यक् शमादिभिरर्चनं ह्यभ्यर्चनम् । न च शमादीन् विना सिद्धिं विन्दति । **'यज्ञदानतपः कर्म न त्याज्यम्'** इत्युक्तत्वाच्च । **'शमो मन्निष्ठता बुद्धेर्दम इन्द्रियनिग्रहः'** इति हि भागवते । न च क्षत्रियादिभिरपि शौचतपःक्षमा(शमा)दिभिर्हीनैर्भाव्यमिति तत्तद्धर्मेषूच्यते । युक्ता ह्येतैः सर्वैर्गुणैर्जनकतुलाधारादयः । अतो युद्धेऽपलायनमैश्वर्यं च क्षत्रियस्य विशेषगुणौ । तौ, च कृष्यादयः, जीवनार्थं शुश्रूषा, याजनं, जीवनार्थं प्रतिग्रहश्चेत्येत एवान्येषां परधर्माः ।

'शौर्यं तेजो धृतिर्दाक्ष्यं दानं च क्षत्रियेऽधिकाः ।
तद्धीना ब्राह्मणे तस्माद् वैश्ये शूद्रे ततोऽल्पकाः ।
अध्यापनं च शुश्रूषा जीवनार्थमृते सदा (सताम्) ।
विप्रादिषु क्रमात् ज्ञेयाः शूद्रस्याध्यापनं विना ।
तस्माच्छूद्रोऽल्पशुश्रूषुः स्वभावाज्जीवनं विना ।
एते नैसर्गिका भावाः स्याद् भावोऽन्योऽपि कुत्रचित् ।
वलाद् विरुद्धभावस्तु हेयः स्वाभाविकोऽपि यः ।
अनिसर्गोऽपि हि शुभो वर्धनीयः प्रयत्नतः ।
याजनैश्वर्यपूर्वास्तु नान्यैः कार्याः शुभा अपि ।
अपलायनं च शूद्राणां ब्रह्मक्षत्रार्थमिष्यते' ।। इति च ।

'प्रसह्य वित्ताहरणं शारीरो दण्ड एव च ।
अशिष्याणां शासनं च तथैवार्थविनाशनम् ।
एष ईश्वरभावः स्यान्न कार्यः क्षत्रियेतरैः ।
सर्वे विधर्मिणः शास्याः क्षत्रियैर्यत्नतः सदा ।
अङ्गाद्यहानिकृद् दण्डः शिष्येषु ब्राह्मणादिभिः ।
कार्यो देहेऽपि शिष्यश्च स्वामिना स्वेन वाऽर्पितः ।
पुत्रानुजादयः सर्वे शिष्या एव निसर्गतः ।
गुरवश्चैव मित्राणि सखिसब्रह्मचारिणः ।
सम्वन्धिनश्च सर्वेऽपि तत्तद्योग्यतयाऽखिलैः ।
शिक्षणीयेषु भावेषु शिक्षणीयाः प्रयत्नतः ।
उन्मादे वन्धानाद्यैर्वा ताडनं न गुरोः क्वचित् ।
पापं चरन्तस्त्वन्येऽपि सर्वैर्दृष्टिपथं गताः ।
शक्तितो वारणीयाः स्युर्देशकालानुसारतः ।
तदुत्तमविरोद्धारः सन्त्याज्या गुरवोऽपि तु ।
यथाशक्त्यनुशास्यैव कालतोऽपि न चेच्छुभाः ।
विष्णौ परमभक्तस्तु न त्याज्यः शास्य एव च ।
शिक्षयंश्च गुरून् शिष्यो गुरुवन्नैव शिक्षयेत् ।
महान्तो नानुशास्याश्च विरुद्धाचरिता अपि ।
यदि च स्वोत्तमानां ते विरोधं नैव कुर्वते' ।। इत्यादि च ।

'आपत्सु विप्रः क्षात्रं तु विशां वा धर्ममाचरेत् ।
क्षात्रासिद्धौ न शूद्रस्तु विप्रक्षत्रिययोः क्वचित् ।
क्षत्रियो ब्राह्ममापत्सु तदापत्सु विशामपि ।
क्षत्रियो विप्रधर्माऽपि नैव भैक्ष्यप्रतिग्रही ।
वैश्य आपत्सु शौद्रं तु धर्ममेकं न चापरम् ।
शूद्र आपत्सु विड्धर्मा तदापत्सु च कारुकः ।
शूद्रस्तु वैश्यधर्माऽपि नैव वेदाक्षरो भवेत् ।

अत्यापदि क्षत्रियोऽपि पादशुश्रूषणं विना ।
शौद्रधर्मं चरन् विप्रक्षत्रियेषु न दुष्यति ।
येषु कर्मसु याच्यः स्यात् स्वामिनाऽपि न याचिता ।
शौद्राण्यपि स्वधर्मत्वे क्षत्रियस्याऽपदो यदि ।
आत्मनश्चेद् वलाधिक्यं सानुवन्धादपि प्रभोः ।
धर्मार्थं सेवतोऽर्थार्थं विप्रधर्माधिकाद् वरः ।
प्रभुणा याच्यवृत्तिस्तु विशेषेणापि धर्मभाक् ।
वाह्वोर्वलेऽधिको यः स्यात् क्षत्रियो विधयाऽधिकः ।
विप्रो भागवतौ चैतौ सेशा लोकास्तयोरिमे' ।। इति व्यासस्मृतौ ।
।। ४४-४८ ।।

असक्तवुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।
नैष्कर्म्यसिद्धिं परमां सन्न्यासेनाधिगच्छति ।। ४९ ।।

### भाष्यम्

नैष्कर्म्यसिद्धिं नैष्कर्म्यफलां योगसिद्धिम् ।। ४९ ।।

### तात्पर्यम्

**'नैष्कर्म्यसिद्धिम्'** अनिष्टसर्वकर्मनाशाख्यसिद्धिम् ।। ४९ ।।

सिद्धिं प्राप्तो यथा व्रह्म तथाऽप्नोति निवोध मे ।
समासेनैव कौन्तेव निष्ठा ज्ञानस्य या परा ।। ५० ।।

### भाष्यम्

यथा येनोपायेन सिद्धिं प्राप्तो ब्रह्म प्राप्नोति तथा निबोध । या सिद्धिर्ज्ञानस्य परा निष्ठा ।। ५० ।।

वुद्ध्या विशुद्धया युक्तो धृत्याऽत्मानं नियम्य च ।
शव्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ।। ५१ ।।

विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ।। ५२ ।।

### तात्पर्यम्

वक्ष्यमाणप्रकारेण वर्तमानस्तदनन्तरं नैष्कर्म्यसिद्धिं प्राप्तो भूत्वा ब्रह्माख्यायाः महालक्ष्म्याः सकाशं यथाऽऽप्नोति तथा निबोध । **'मम योनिर्महद् ब्रह्म' 'ब्रह्मणो हि प्रतिष्ठाऽहम्'** इत्युक्तत्वात् । **'ब्रह्मभूतः प्रसन्नात्मा'** इत्युक्त्वा **'मद्भक्तिं लभते पराम्'** इति वक्ष्यमाणत्वाच्च ।

'सर्वपापक्षयाद् देहं त्यक्त्वा देवान् क्रमाद् व्रजन् ।
प्राप्य लक्ष्मीं तत्प्रसादात् पुनः स्वृद्धा हरौ यदा ।
भक्तिस्तया पुनर्ज्ञाने स्वृद्धे विष्णुं प्रपद्यते ।
अपरोक्षदृशो विष्णोः शरीरेऽपि सतः पुरा ।
त्यक्तदेहादिकस्यापि यावद् विष्णुं प्रपद्यते ।
तावद् गुणा विवर्धन्ते स्थिताः स्युः प्राप्य केशवम्' ।। इति महावराहे
।। ५०-५२ ।।

अहङ्कारं वलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ।। ५३ ।।

### भाष्यम्

ब्रह्मभूयाय कल्पते । ब्रह्मणि भावो ब्रह्मभूयम् । ब्रह्मणि स्थितिः सर्वदा तन्मनस्कतेत्यर्थः ।। ५३ ।।

### तात्पर्यम्

'**विमुच्य निर्ममः शान्तः**' नैष्कर्म्यसिद्धिं प्राप्तो भूत्वा ब्रह्मणि भूयाय भवतीत्यर्थः ।। ५३ ।।

ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ।। ५४ ।।

भक्त्या मां अभिजानाति यावान्यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ।। ५५ ।।

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ।। ५६ ।।

### भाष्यम्

पुनरन्तरङ्गसाधनान्युक्त्वोपसंहरति– **सर्वकर्माणीत्यादिना** ।। ५६ ।।

### तात्पर्यम्

विहितानि सर्वकर्माण्यपि मद्व्यपाश्रयो भूत्वा सदा कुर्वाणः । न हि यथेष्टाचरणे तात्पर्यमत्र । तथा सति विहिताकरणेऽपि समत्वात् '**मामनुस्मर युद्ध्य च**' '**ततः स्वधर्मं किर्तिं च**' इत्यादिप्रस्तुत-विरोधः । अपिशब्दस्त्वेकमपि कर्मातदाश्रयेण न कार्यमित्यर्थे ।। ५६ ।।

चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ।
वुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ।। ५७ ।।

## तात्पर्यम्

भगवत्संश्रितस्य त्रैविद्यस्य च चेतसैव विशेष इत्याह- **चेतसा सर्व-कर्माणीति** । स एव सर्वस्मात् परम इति भावोऽस्येति तत्परः । तत्र चित्तवृत्तिनिरोधोऽपि यो बुद्धियोगः प्रत्याहारादिः ।। ५७ ।।

**मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।**
**अथ चेत्त्वमहङ्कारान्न श्रोष्यसि विनङ्क्ष्यसि ।। ५८ ।।**

**यदहङ्कारमाश्रित्य न योत्स्य इति मन्यसे ।**
**मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ।। ५९ ।।**

**स्वभावजेन कौन्तेय निवद्धः स्वेन कर्मणा ।**
**कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ।। ६० ।।**

## तात्पर्यम्

प्रकृतिरीश्वरेच्छा । **'प्रकृतिर्वासनेत्येवं तवेच्छानन्त कथ्यते'** इत्यादि-वचनात् । एषा तु **'प्रकृत्यैव च कर्माणि'** इत्यादिष्वपि युज्यते । तस्या एव हि मुख्यतो नियोक्तृत्वं स्वभावकर्मादिभिर्बद्ध्वा ।। ५९,६० ।।

**ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।**
**भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ।। ६१ ।।**

**तमेव शरणं गच्छ सर्वभावेन भारत ।**
**तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ।।६२।।**

**इति ते ज्ञानमाख्यातं गुह्यात् गुह्यतरं मया ।**
**विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ।। ६३ ।।**

सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम्।। ६४ ।।

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ।। ६५ ।।

### भाष्यम्

परोक्षवचनं तु द्रोणं प्रति भीमवचनवत् ।। ६१-६२ ।।

### तात्पर्यम्

तदेवाऽह– ईश्वरः सर्वभूतानामिति ।

'निश्चितार्थः स तु ज्ञेयो यत्राऽत्मैव परोक्षतः ।
उच्यते विष्णुना यद्वत् तद् ब्रह्मेत्यादि कथ्यते' ।। इति शब्दनिर्णये ।

'मन्मनाः' इत्युपसंहाराच्च ।। ६१ ।।

शाश्वतं स्थानं वैकुण्ठादि-

'श्रीरेव लोकरूपेण विष्णोस्तिष्ठति सर्वदा ।
अतो हि वैष्णवा लोका नित्यास्ते चेतना अपि' ।। इत्याग्नेये ।

'न वर्तते यत्र रजस्तमस्तयोः सत्त्वं च' इत्याद्युक्तं च ।। ६२ ।।

तत्त्वसारकथनं 'द्वाविमौ पुरुषौ' इत्यत्रैवोपसंहृतम् । तत्त्वप्रशंसार्थमेव तद्बुद्धिप्रशंसा कृता । अत्र तु साधनसारोपसंहारः सर्वगुह्यतममिति । 'मन्मनाः' इत्यादेः पूर्वमेवोक्तत्वात् भूय इति । अर्थतस्त्वत्रापि विष्ण्वाधिक्यमेवोक्तं भवति ।। ६४,६५ ।।

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः।। ६६ ।।

## भाष्यम्

धर्मत्यागः फलत्यागः । कथमन्यथा युद्धविधिः ? 'यस्तु कर्मफल-त्यागी स त्यागीत्यभिधीयते' इति चोक्तम् ।। ६६ ।।

'यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
वट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुः
मध्वो यत्तु तृतीयकं कृतमिदं भाष्यं हि तेन प्रभौ ।।

पूर्णादोषमहाविष्णोर्गीतामाश्रित्य लेशतः ।
निरूपणं कृतं तेन प्रीयतां मे सदा विभुः ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीभगवद्गीताभाष्ये अष्टादशोऽध्यायः ।।

## तात्पर्यम्

अन्यसर्वधर्मान् परित्यज्येत्युक्तशेषत्वेनैव **सर्वधर्मानिति** वचनम् । 'मामेकं शरणं व्रज' इत्यपि 'मन्मना' इत्याद्युक्तनिगमनात्मना तद्व्याख्यानम् ।

'सर्वोत्तमत्वविज्ञानपूर्वं तत्र मनः सदा ।
सर्वाधिकप्रेमयुक्तं सर्वस्यात्र समर्पणम् ।
अखण्डा त्रिविधा पूजा तद्रत्यैव स्वभावतः ।
रक्षतीत्येव विश्वासस्तदीयोऽहमिति स्मृतिः ।
शरणागतिरेपा स्याद् विष्णौ मोक्षफलप्रदा' । इति महाविष्णुपुराणे ।

अनादिजन्मकृतसर्वपापेभ्यः । अत्र प्राप्त्यभावात् । धर्मपरित्यागे पापपरित्यागस्य कैमुत्येनैव सिद्धत्वात् ।। ६६ ।।

**इदं ते नातपस्काय नाभक्ताय कदाचन ।**
**न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति।। ६७ ।।**

## तात्पर्यम्

अतपस्कायैव न वाच्यम् । अशुश्रूषवे पुनश्चेति दोषाधिक्यम-शुश्रूषोर्दर्शयितुं चशब्दः । एवमभक्ताय कदाऽपि न वाच्यम् । कदाचिदल्पतपसोऽल्पशुश्रूषोरपि भक्त्याधिक्ये वाच्यं भवतीति कदाचनेति विशेषः । अभक्ताच्च न वाच्यमसूयोरिति तत्रापि चशब्दः ।

'समुच्चये तथाऽऽधिक्ये न्यूनत्वे चः प्रयुज्यते' । इति शब्दनिर्णये ।

'अभक्तादपि पापः स्यादसूयुर्दोषदृग् यतः' इति च पाद्मे ।। ६७ ।।

य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ।। ६८ ।।

न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ।। ६९ ।।

अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ।। ७० ।।

श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।
सोऽपि मुक्तः शुभान् लोकान् प्राप्नुयात्पुण्यकर्मणाम् ।
।। ७१ ।।

कच्चिदेतत् श्रुतं पार्थ त्वयैकाग्रेण चेतसा ।
कच्चिदज्ञानसंमोहः प्रनष्टस्ते धनञ्जय ।। ७२ ।।

**अर्जुन उवाच**

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत ।
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ।। ७३ ।।

**सञ्जय उवाच**

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ।। ७४ ।।

व्यासप्रसादात् श्रुतवानेतद्गुह्यमहं परम् ।
योगं योगेश्वरात्कृष्णात्साक्षात् कथयतः स्वयम्।। ७५ ।।

राजन् संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ।। ७६ ।।

तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।
विस्मयो मे महान् राजन् हृष्यामि च पुनः पुनः ।। ७७ ।।

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ।। ७८ ।।

।। ओं तत्सदिति श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे मोक्षसन्न्यासयोगो नाम अष्टादशोऽध्यायः ।।

## तात्पर्यम्

'सोऽपि मुक्तः' 'न च तस्मान्मनुष्येषु' इत्युक्तेश्च मुक्तानां महत् तारतम्यं ज्ञायते । 'मनुष्येषु' इति विशेषणात् तत्रापि देवानामाधिक्यं च ।

'मुक्तिर्ज्ञात्वाऽपि विष्णुं स्याच्छास्त्रं श्रुत्वा ततोऽधिकम् ।
मुक्तौ सुखं तत्पठतस्ततोऽप्यधिकमिष्यते ।
व्याख्यातुस्तु समं मुक्तौ सुखं नान्यस्य कस्यचित् ।
ततोऽधिकं तु देवानां मुख्यव्याख्याकृतो यतः' ।। इति ।। ६८-७२ ।।

'यथेच्छसि तथा कुरु' इत्याक्षेपपरिहाराय 'करिष्ये वचनं तव' इत्यनुसरति भगवन्तम् ।। ७३-७८ ।।

नमस्ते वासुदेवाय प्रेयसां मे प्रियोत्तम ।
समस्तगुणसम्पूर्णनिर्दोषानन्ददायिने ।।

यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
वट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुः
मध्वो यत्तु तृतीयमेव हि कृतो ग्रन्थोऽमुना केशवे ।।

निःशेषदोषरहित कल्याणाखिलसद्गुण ।
भूतिस्वयम्भुशर्वादिवन्द्यं त्वां नौमि मे प्रियम् ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीभगवद्गीतातात्पर्यनिर्णये अष्टादशोऽध्यायः ।।
गीताप्रस्थानं समाप्तम्
श्रीकृष्णार्पणमस्तु

*****

श्रुतिप्रस्थानम्
श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# ऋग्भाष्यम्

।। श्रीमद्धनुमद्भीमभध्वान्तर्गतरामकृष्णवेदव्यासात्मक-
श्रीलक्ष्मीहयग्रीवाय नमः ।।

## प्रथमोऽध्यायः

**नारायणं निखिलपूर्णगुणार्णमुच्चसूर्यामितद्युतिमशेषनिरस्तदोषम् ।**
**सर्वेश्वरं गुरुमजेश(नतं)नुतं प्रणम्य वक्ष्याम्यृगर्थमतितुष्टिकरं तदस्य ।। १ ।।**

**ओमशेषगुणाधार इति नारायणोऽप्यसौ ।**
**पूर्णो भूतिवरोऽनन्तसुखो यद् व्याहृतीरितः ।। २ ।।**

**गुणैस्ततः प्रसविता वरणीयो गुणोन्नतेः ।**
**भारतिज्ञानरूपत्वाद् भर्गो ध्येयोऽखिलैर्जनैः ।**
**प्रेरकोऽशेषबुद्धीनां स गायत्र्यर्थ ईरितः ।। ३ ।।**

**स पूर्णत्वात् पुमान् नाम पौरुषे सूक्त ईरितः ।**
**स एवा(सर्वशब्दार्थः)खिलवेदार्थः सर्वशास्त्रार्थ एव च ।। ४ ।।**

**'स एव सर्वशब्दार्थः' इत्याहोपनिषत् परा ।**
**ता वा एता ऋच इति विशेषेणाप्यृगर्थताम् ।। ५ ।।**

यो देवानामिति श्रुत्या देवनाम्नां विशेषतः ।
स्पष्टत्वात् तद्गतत्वेन .................. ।

## सूक्तम् - १

(अग्निं नव, ऋषिः मधुच्छन्दाः वैश्वामित्रः । छन्दः गायत्री । देवता अग्निः ।)

(१) ॐ ।। अ॒ग्निमी॑ळे पु॒रोहि॑तं य॒ज्ञस्य॑ दे॒वमृ॒त्विज॑म् ।
होता॑रं रत्न॒धात॑मम् ।। १ ।।

.................. तत्राऽहाग्रेऽग्निनामकम् ।। ६ ।।

अग्रणीत्वं यदग्नित्वमित्यग्रे नाम तद्भवेत् ।
एवमेवाह भगवान् निरुक्तिं बादरायणः ।। ७ ।।

'यथैवाग्न्यादयः शब्दाः प्रवर्तन्ते जनार्दने ।
तथा निरुक्तिं वक्ष्यामो ज्ञानिनां ज्ञानसिद्धये' ।। ८ ।।

इति तेन अग्निशब्दोऽयमग्र एवाभिपूज्यताम् ।
अग्र्यत्वमग्रनेतृत्वमत्तिमङ्गागनेतृताम् ।। ९ ।।

आह तं स्तौम्यशेषस्य पूर्वमेव हितं प्रभुम् ।
ऋत्विङ्नियामकत्वेन यज्ञानामृत्विजं सदा ।। १० ।।

द्योतनाद् विजयात् कान्त्या स्तुत्या व्यवहृतेरपि ।
गत्या रत्या च देवाख्यं होतृसंस्थं विशेषतः ।। ११ ।।

अग्निसंस्थेन रूपेण यतोऽग्निर्होतृदेवता ।
इन्द्रियाग्निषु चार्थानां यद्धोता होतृनामकः ।
रतिधारकोत्तमत्वात् स रत्नधातम ईरितः ।। १२ ।।

(२) अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत ।।
स देवाँ एह वक्षति ।। २ ।।

**स पूर्वैर्नूतनैरेष्यैर्विज्ञानादृषिनामकैः ।**
**ईड्यो देवादिभिस्सर्वैः स च देवानिहानयेत् ।। १३ ।।**

(३) अग्निना रयिमश्नवत्पोषमेव दिवेदिवे ।
यशसं वीरवत्तमम् ।। ३ ।।

**तेनैव रयिमाप्नोति वित्तं विद्याधनात्मकम् ।**
**दिवसे दिवसे नित्यं पुष्टिमेव न हीनताम् ।**
**यशश्च पुत्रसंयुक्तं वीर्यवत्तममेव वा ।। १४ ।।**

(४) अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि ।
स इद्देवेषु गच्छति ।। ४ ।।

**यं यज्ञं परितो भूत्वा रक्षसि त्वं सदैव च ।**
**विधिमार्गस्थितं देवान्स एवाप्नोत्यसंशयम् ।। १५ ।।**

(५) अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः ।
देवो देवेभिरा गमत् ।। ५ ।।

**सोऽखिलग्रहणप्रज्ञः सद्गुणैः सन्ततोऽखिलम् ।**
**यमयत्यग्रकीर्तीनामुत्तमो विबुधैः सह ।**
**आगन्ताऽखिलभक्तानां पूजास्वीकारतत्परः ।। १६ ।।**

(६) यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि ।
तवेत्तत्सत्यमङ्गिरः ।। ६ ।।

यजमानाय यद्भद्रं कर्तुमिच्छसि सत्प्रिय ।
त्वच्चेष्टयैव कर्माणि वर्तयित्वा तदीहनम् ॥ १७ ॥

तवैव सत्यमङ्गानां रस यद् वह्निगो हरिः ।
अङ्गिरा अङ्गिरःपुत्रो यतोऽग्निरभवत् क्वचित् ॥ १८ ॥

(७) उप॑ त्वाग्ने दि॒वेदि॑वे॒ दोषा॑वस्तर्धि॒या व॒यम् ।
नमो॒ भर॑न्त॒ एम॑सि ॥ ७ ॥

वस्तर्दिनमहोरात्रमभीष्ट प्राणिनां सदा ।
अल्पा अपि वयं बुद्ध्या त्वामुच्चगुणमीश्वरम् ।
उपयाम मनःकर्मवाग्भिस्त्वन्नमसम्भराः ॥ १९ ॥

(८) राज॑न्तमध्व॒राणां॑ गो॒पामृ॒तस्य॒ दीदि॑विम् ।
वर्ध॑मान॒ं स्वे दमे॑ ॥ ८ ॥

देदीप्यमानं स्वे सद्मन्यध्वरेशं सदावृधम् ।
यथार्थज्ञानगोपं त्वामुपेमसि ....... ।

(९) स न॑ः पि॒तेव॑ सू॒नवेऽग्ने॑ सू॒पाय॒नो भ॑व ।
सच॑स्वा नः स्व॒स्तये॑ ॥ ९ ॥

.............................. पितेव नः ॥ २० ॥

सूपाश्रयो भव त्वं च यद्वदौरससूनवे ।
रक्ष सन्ततसौख्याय सम्यक् सत्त्वाय वा सदा ॥ २१ ॥

मुनिस्तु सर्वविद्यानां भगवान् पुरुषोत्तमः ।
विशेषतश्च वेदानां यो ब्रह्मार्णमिति श्रुतिः ।
ऋग्वेदादिकमस्यैव श्वसितं प्राह चापरा ॥ २२ ॥

वाचो बभूवुरुशतीर्हयग्रीवादिति स्फुटम् ।
वचो भागवतेऽप्यस्ति ब्रह्माण्डे(च)ऽपि तथाऽपरम् ॥ २३ ॥

'हयग्रीवादिमा विद्याः श्वसितत्वेन निःसृताः ।
ब्रह्मणा स्वीकृतास्ताश्च रुद्रशेषविपा अपि ॥ २४ ॥

दक्षाद्याः सनकाद्याश्च शक्राद्या मनवस्तथा ।
जगृहुस्ते च विश्वस्मिंश्चक्रुर्व्याप्तास्ततोऽखिलाः' ॥ २५ ॥

उक्तं प(पा)द्मपुराणे च 'कपिलो भगवानजः ।
प्रोवाच ब्रह्मणे विद्याः' 'हृदिस्थो बादरायणः ॥ २६ ॥

ओङ्कारपूर्विका विद्याः प्रेरयत्यखिलेष्वपि ।
सदैव ब्रह्मणे पूर्वम्' इति सात्त्वतसंहिता ॥ २७ ॥

सकृन्निगदमात्रेण गृहीतं ब्रह्मणाऽखिलम् ।
अन्तर्गतस्य व्यासस्य प्रसादान्नित्यशक्तितः ॥ २८ ॥

तेन चानन्तशक्तित्वाद् युगपत् समुदीरितम् ।
प्रथमप्रतिपत्तृत्वान्मुनिर्ब्रह्माऽखिलस्य च ॥ २९ ॥

सुपर्णोऽखिलवेदानां पञ्चरात्रस्य नागराट् ।
द्वितीयप्रति(वक्तृत्वात्)पत्तृत्वान्मुनित्वे सम्प्रकार्तितौ ॥ ३० ॥

यः पश्यति स्वयं वाक्यं स ऋषिस्तस्य कीर्तितः।
अर्वाक् तु द्वादशावृत्तेरधीत्याऽप्यृषिरेव सः ॥ ३१ ॥

यत्स्वयं प्रतिभातस्य संश(निश्च)यार्थं गुरोर्वचः ।
सुपर्णादिर्विरिञ्चस्य केवलं धर्मकारणम् ॥ ३२ ॥

ऋचामृषिस्ततः शक्रो यजुषां सूर्य एव च ।
सोमः साम्नां तृतीयास्ते प्रतिपत्तार ईरिताः ॥ ३३ ॥

अथर्वाङ्गिरसामग्निरेकर्षिश्चाप्यथर्वणाम् ।
इत्युक्ताः समुदायस्य सन्त्यन्ये च पृथक्पृथक् ॥ ३४ ॥

एतज्ज्ञानाददृष्टस्य फलस्याप्तिः स्फुटं भवेत् ।
द्रष्टॄणां च चतुर्थानां ज्ञानादप्यैहिकं भवेत् ॥ ३५ ॥

ते चैकस्यापि बहवः स्युः सूक्तस्यर्च एव (च)वा ।
तस्यां तस्यामवस्थायां तत्तत्प्राप्तिविशेषतः ॥ ३६ ॥

तेषां वाक्यस्वरूपेण प्रार्थनादिषु पश्यति ।
विष्णुर्ब्रह्मा सुपर्णो वा तत्तद्योग्यार्थभेदतः ॥ ३७ ॥

सर्ववेदाभिमानित्वाच्छ्रीर्ब्रह्माणी च भारती ।
द्रष्ट्र्यश्च सर्व(वेदानां)विद्यानां व्याख्यातो ब्रह्मणा मरुत्॥ ३८ ॥

स्वभर्त्रनन्तरं द्रष्ट्र्यस्तेभ्यस्तन्नोदिता हिरुक् ।
ताः स्तुवन्ति हरिं नित्यं विद्याभिस्ते च सर्वशः ॥ ३९ ॥

छन्दस्त्वेन मुनित्वेन तासां स्मृतिरुदीरिता ।
स्मर्तव्यास्ते च सर्वेऽपि मुनित्वेन पृथक्पृथक् ॥ ४० ॥

गायत्री वृहती चैव ताः सर्वा गरुडस्तथा ।
ब्रह्माण्यनुष्टुबिन्द्राणी त्रिष्टुप् स्वाहेति चोच्यते ॥ ४१ ॥

गायत्री जगती चैव वारुणी रोहिणी तथा ।
अनुष्टुब् वृहती चैव तारा पङ्क्तिः शची तथा ॥ ४२ ॥

उष्णिक् सौरी जगत्यश्च सर्वदेवस्त्रियो मताः ।
विराण्मित्रावरुणयोर्भार्ये इति च कीर्तिते ॥ ४३ ॥

अतिछन्दांसि सर्वाणि सर्वदेव्यः प्रकीर्तिताः ।
विरा(ळिति)डिति च नामाऽसां तास्ता ऊनाधि(दिके)केष्वपि ।
॥ ४४ ॥

निचृद्भूरिग्विराट्सञ्ज्ञाः प्रस्तारेत्यादि नाम च ।
बह्वीनामेकमानेन त्वेकं नाम च युज्यते ।
सर्वाभिमानिता चैव तिसृणां (च)तु यथाक्रमम् ॥ ४५ ॥

देवता सर्वविद्यानां स्वयं नारायणः प्रभुः ।
ऋते तत्र प्रसिद्धाश्च देवता श्रीस्तथाऽत्र च ॥ ४६ ॥

ऋते प्रसिद्धा ब्रह्मैव ततस्तेन क्रमेण च ।
पूर्वप्रसिद्धवर्जं तु शक्रान्ता देवता मताः ॥ ४७ ॥

ब्रह्मवायू गिरौ वीन्द्रशेषरुद्राश्च तत्स्त्रियः ।
शक्रकामौ कामपुत्रमनुदक्षाङ्गिरः सुताः ॥ ४८ ॥

तद्वच्छची रतिः सूर्यसोमधर्मादितित्स्त्रियः ।
प्रधानमरुतो वारिपतिरग्निश्च मारुताः ॥ ४९ ॥

निर्ऋतिः स्त्रियश्च सूर्यादिरश्विनावितरे तथा ।
अनन्तकोटिशतकदशार्धांशतः क्रमात् ॥ ५० ॥

ज्ञानभक्तिबलैश्वर्यपूर्वाखिलगुणैरपि ।
मुक्तावपि क्रमो ह्येष देवता उदिता इमाः ॥ ५१ ॥

इन्द्रावरा विशेषेण लिङ्गैनैव पृथक्पृथक् ।
देवतास्तत्र तत्र स्युरेष एव परो विधिः ॥ ५२ ॥

वेदादिवर्णपर्यन्तैर्मूर्तयः केशवस्य तु ।
समासव्यासयोगेन वाच्यास्तात्पर्यतः पृथक् ।
यथायोगं यथान्यायमन्यासामपि मूर्तयः ॥ ५३ ॥

ऋक्संहितायां स्वाध्याये निरुक्ते व्यासनिर्मिते ।
प्रवृत्ते चैतदखिलमुक्तं हि प्रभुणा स्वयम् ॥ ५४ ॥

'सर्वे वेदा'श्च 'नामानि', 'ता वा एता ऋच'स्तथा ।
'इन्द्रं मित्रं च वरुणम्' इत्याद्यत्र प्रमा परा ॥ ५५ ॥

'देवतातारतम्यं च सर्वोत्कृष्टं च केशवम् ।
ज्ञात्वैव मुच्यते ह्यस्मान्नान्यथा तु कथञ्चन' ॥ ५६ ॥

इति पैङ्गिश्रुतिश्चाह दृश्य(न्ते)तेऽत्र च सर्वशः ।
न तेमहित्वमित्यादिनैश्वरानेव केवलान् ।
गुणान् विष्णोः श्रुतिर्ह्याह नैव दोषान् कथञ्चन ॥ ५७ ॥

जाता परि वभूवेति मर्यादां ब्रह्मणोऽपि हि ।
नैव रेमेऽविभेद् ब्रह्मा नासीदित्यादिकानपि ॥ ५८ ॥

दोषान् रुद्रे(रूद्रेऽपि) च तानेव न मिनन्तीति पूर्वकान् ।
यं कामये तं तमुग्रं रुद्राय धनुरित्यपि ॥ ५९ ॥

अस्य देवस्य मा शिश्नदेवा अपि गुरित्यपि ।
घ्नञ्छिश्नदेवानित्याद्या दोषा वहव ईरिताः ॥ ६० ॥

ततो वितिष्ठे योनिः स एतावत्यहमित्यपि ।
अन्याश्रयत्वं देव्याश्च कथितं बहुशोऽपि हि ।
तदाश्रयत्वमन्येषामपि तत्रैव निश्चयात् ॥ ६१ ॥

ब्रह्मैवाग्र इति ह्युक्त्वा रुद्रादीनां ततो जनिः ।
उक्ता जातानि विश्वानि स पर्यभवदित्यपि ।
यस्य छायाऽमृतं मृत्युरिति चादरतोऽब्रवीत् ॥ ६२ ॥

'अनन्तादवरेशाना तस्याः प्राणस्ततश्च वाक् ।
तस्या रुद्र उमा तस्मादिन्द्रस्तस्यास्ततोऽपरे' ।
सौपर्णश्रुतिरित्याह 'सप्ताक्षितय' इत्यपि ॥ ६३ ॥

'वायुरस्मा उपामन्थत्' 'विश्वदेवाय वायवे' ।
विश्वैर्देवैः स इत्याद्याः प्रमा अत्रापरा अपि ॥ ६४ ॥

'नारायणोऽदितिर्वायुर्वाणी रुद्र उमा विभुः ।
इतरे च क्रमाद्धीनाः शतांशाद्यायुतोऽवराः' ॥ ६५ ॥

इति बर्कश्रुतिश्चाह शक्रात् सप्ताक्षितिश्रुतिः ।
अयं त एमि तन्वेतिपूर्वा अन्या अपि स्फुटम् ।
वायोराधिक्यमप्याहुः 'इन्द्रं सोमं हुताशनम् ॥ ६६ ॥

सूर्यं रुद्रमिमान् पञ्च देवानेको महात्मनः ।
सृजत्यत्ति महान् प्राण' इति चाह तुरश्रुतिः ॥ ६७ ॥

'वि हि सोतोरसृक्षत नेन्द्रं देवममंसत ।'
(यत्रामदद् वृषाकपिरर्यः पुष्टेषु मत्सखा ।)
'न यस्येन्द्र' इति ह्याह विष्णोरिन्द्रस्य हीनताम् ॥ ६८ ॥

वेधा अजिन्वदित्यादिवचनं विष्णु(शब्दतः)नामतः ।
आनन्दश्रुतिरप्यस्य जीवतामेव दर्शयेत् ॥ ६९ ॥

आह सूर्यादपीन्द्रस्य वायोर्विष्णोरपीशताम् ।
यः सूर्यं य उषसं म्रियन्ते पञ्च देवताः ॥ ७० ॥

चक्षुषा द्यौश्चादित्यश्च चक्षोः सूर्यो अजायत ।
यमादित्यो न वेदेतिपूर्वा श्रुतिरथापराः ॥ ७१ ॥

'विष्णोर्वातो अजनिष्ट वातादिन्द्रस्ततो रविः ।
सोमश्चेति लयेऽप्येवं पूर्वे पूर्वे गुणाधिकाः' ॥ ७२ ॥

'विष्णोः प्राणो अजनिष्ट प्राणादिन्द्रो रविर्विधुः ।
लयोऽप्येतादृशस्तेषां पूर्वः पूर्वो गुणाधिकः' ॥ ७३ ॥

तुरश्रुतिश्च सौपर्णी पिङ्गश्रुतिरपीदृशी ।
अतः सर्वाधिको विष्णुर्निर्णीतः श्रुतिसञ्चयात् ॥ ७४ ॥

अतो दोषवचो यत्र तद् वाक्यमवरं वदेत् ।
निर्दोषतैव विष्णोस्तु क्रमान्मध्यगतेष्वपि ॥ ७५ ॥

'त्रयोऽर्थाः सर्ववेदेषु दशार्थाः सर्वभारते ।
विष्णोः सहस्रनामापि निरन्तरशतार्थकम्' ॥ ७६ ॥

इति स्कान्दवचो यस्मादर्थभेदव्यपेक्षया ।
निर्दोषत्वं हरेर्वक्ति दोषमन्येष्वपि क्रमात् ॥ ७७ ॥

तारतम्यस्य विज्ञप्त्यै वचो दोषस्य चार्थवत् ।
'गुणाः श्रुताः' इति ह्याह गुणैकनियतिं हरौ ॥ ७८ ॥

'निर्दोषो गुणपूर्णश्च विष्णुरेको न चापरः ।
अपूर्णा दोषरहिता मायैका तद्वशैव च ॥ ७९ ॥

अदोषः प्रायशो ब्रह्मा दोषवन्तः क्रमात् परे' ।
इति मान्यश्रुतिश्चाह भेदोऽर्थानां ततो मतः ॥ ८० ॥

'रूढिमेव समाश्रित्य विभज्यार्थान् यथाक्रमम् ।
विदोष(निर्दोष)गुणपूर्त्यर्थं विष्णौ योगार्थमानयेत् ॥ ८१ ॥

पश्चादेव यथायोगमितरेष्वपि सन्नयेत् ।
ऋग्वेदसंहितायां च प्रभुणैवं समीरितम् ॥ ८२ ॥

पृथग् रूपाणि विष्णोस्तु देवतान्तरगाणि च ।
अग्न्यादिसूक्तवाच्यानि नाम्ना सूक्तभिदा भवेत् ॥ ८३ ॥

नकिर्माकिः स्मसीत्यादि प्रोक्ताधिक्य(व्यपेक्षया)विवक्षया ।
आधिक्येऽधिकमित्येव हरिणा सूत्रमीरितम् ॥ ८४ ॥

कृत्वी हत्वीतिपूर्वाश्च तृतीयोऽतिशये यतः ।
विश्लि(विशि)ष्टार्थे च विश्लिष्टमूनार्थे चोनमिष्यते ।
व्यत्ययोऽभेदकरणस्वातन्त्र्येषु समीरितः ॥ ८५ ॥

अभेदो हरिरूपाणां गुणानां च क्रियासु च ।
तस्यैवावयवानां च भेदः श्रीब्रह्मपूर्वकैः ॥ ८६ ॥

मुक्तैरपि जडैर्भेदः कैमुत्यादेव दृश्यते ।
ऋग्वेदसंहितायां (हि)च प्रोक्तमेतत् समस्तशः ॥ ८७ ॥

'अभेदः स्वगुणाद्यैश्च मुक्तानामपि सर्वशः ।
भेदाभेदस्त्वभेदश्च गुणैः संसारिणामपि ।
जडानामंशतोऽभेदः समुदायेन चोभयम् ॥ ८८ ॥

'मनुष्यगन्धर्वपितृगणकार्मिकतात्त्विकाः ।
देवाः शक्रः शिवो ब्रह्मा मुक्तौ सौख्यादिभिर्गुणैः ॥ ८९ ॥

शतायुतोत्तरा नित्यमन्योन्यप्रीतिसंयुताः' ।
इति सिद्धान्तगं वाक्यं स्वयं भगवतेरितम् ॥ ९० ॥

'स्वाध्यायस्तत्त्वविज्ञानं विष्णु(हरि)भक्तिर्विरागिता ।
निषिद्धकर्मसन्त्यागो विहितस्य सदा क्रिया ॥ ९१ ॥

सदा विष्णुस्मृतिश्चैव केवलं मोक्षसाधनम् ।
एतैर्विना न मोक्षः स्याद् भवेदेतैरपि ध्रुवम्' ॥ ९२ ॥

'ऋषिच्छन्दोदैवतानि ज्ञात्वार्थं चैव भक्तितः ।
स्वाध्यायेनैव मोक्षः स्याद् विरक्तस्य हरिस्मृतेः' ॥ ९३ ॥

'जप्येनैव तु संसिद्ध्येद् ब्रह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते' ॥ ९४ ॥

'तस्मान्नित्यं हरिं ध्यायेत् कुर्यात् स्वाध्यायमञ्जसा ।
ऐहिकामुष्मिका भोगा रक्तस्यान्यस्तु मुच्यते' ।
इति स्वाध्यायवचनं स्वयं भगवतोदितम् ॥ ९५ ॥

'स्वाध्यायात्तु प्रवचने सहस्रगुणितं फलम् ।
अर्थद्रष्टुः कोटिगुणं ततोऽनन्तं नियामके ॥ ९६ ॥

तर्कागमाभ्यां नियतिं यः करोत्यधिकं ततः ।
पूर्णं वेदाखिलद्रष्टुर्ब्रह्मणः फलमुच्यते' ॥ ९७ ॥

दाढर्यमेवानुदात्तार्थ उदात्तस्योच्चता(तथा)र्थता ।
नीचता स्वरितस्यार्थः प्रचयस्य यथास्थितिः ।
समाहारेऽखिला अर्थाः स्वरार्थानामियं स्थितिः ॥ ९८ ॥

स्तुत्यधर्मस्य भेदेन पदाद्यादिस्वरे भिदा ।
साधारणो विधिस्त्वेष विशेषो यत्र यत्र च ॥ ९९ ॥

क्रमादेव तदन्येषामृष्यादीनां स्वयोग्यतः ।
विपर्ययार्थकथने विपरीतं तथा तमः ॥ १०० ॥

यावत् प्रयोजको ज्ञाने तावत्तावच्छुभाधिकः ।
तथैव विपरीतोऽपि स्मृतौ ज्ञाने च तत् समम् ॥ १०१ ॥

तमोनिरयमानुष्यस्वर्गमोक्षातिरेकतः ।
योग्यतातारतम्येन फलं सर्वेषु चोच्यते' ।
इति प्रवृत्तवचनं विवेकेऽप्येतदीरितम् ॥ १०२ ॥

'यादृशो योग्यतां यायात् स ज्ञेयोऽर्थस्त(या)था स्फुटम् ।
अनन्तनियमैर्युक्ता अनन्तार्थविशेषिणः ।
वेदा इति समासेन नियमोऽयं समीरितः' ॥ १०३ ॥

ऋक्संहितागतं वाक्यमिति चान्यन्नियामकम् ।
तस्माद् वन्द्याश्च पूज्याश्च ब्रह्माद्या ज्ञानयोजकाः ।
गुरुत्वेन क्रमादेव विशेषेणैव केशवः ॥ १०४ ॥

आरभ्य (सुगुरून्)स्वगुरुं यावद् विष्णुरेवोत्तरोत्तराः ।
क्रमान्निष्फलताऽन्यत्र गुरु(त्वेन)तत्त्वे समीरि(ताः)ता ॥१०५॥

एवं स्थितेऽग्निगं विष्णुमग्निनामानमेव च ।
मधुच्छन्दा ऋक्शतेन वाय्वादिगतमेव च ।
साम्यादिं स्तौति सद्भक्त्या तत्तन्नामानमेव च ॥ १०६ ॥

## सूक्तम् - २

(वायो नव, ऋषिः मधुच्छन्दाः वैश्वामित्रः । छन्दः गायत्री । देवता १-३ वायुः, ४-६ इन्द्रवायू, ७-९ मित्रावरुणौ ।)

(१०) वायवा याहि दर्शतेमे सोमा अरंकृताः ।
तेषां पाहि श्रुधी हवम् ॥ १ ॥

वलत्वादयनाच्चैव वायुरित्यभिधीयते ।
वात्यायुरिति वा ज्ञानाद् वरणादाश्रयत्वतः ॥ १०७ ॥

वय वन्धन इत्यस्मात् संसारादेर्व्ययादपि ।
व्येत्यस्मिन्निति वा वायुर्वय श्रेष्ठत्व इत्यपि ॥ १०८ ॥

मुख्यतो वासुदेवे ते गुणाः सन्त्येव सर्वशः ।
अनिषिद्धास्तदन्येषु यथायोग्यतया मताः ॥ १०९ ॥

दर्शतस्ततदृष्टित्वात् सर्वज्ञोऽसौ यतो विभुः ।
भक्त्याद्यलङ्कृताः सोमा मनांस्यन्ये हिरण्यतः ।
हिरण्यालङ्कृता यस्मा(त्सूयन्ते)द्धूयन्ते वायवे सुताः ॥ ११० ॥

तान् पाहि श्रुधि चाऽह्वानं स्वातन्त्र्ये व्यत्ययोऽप्ययम् ।
मनोऽपि भोग्यमीशस्य प्रीतिमात्रेण केवलम् ॥ १११ ॥

गुणाधिक्यं येन भवेद् वेदस्यार्थः स एव हि ।
प्रयोजकत्वान्नान्यस्य फलाभावात् तदर्थता ॥ ११२ ॥

उपक्रमादयो यत्र तात्पर्यार्थः स एव हि ॥

(११) वाय उक्थेभिर्जरन्ते त्वामच्छा जरितारः ।
सुतसोमा अहर्विदः ॥ २ ॥

स्तुवन्ति शस्त्रैः स्तोतारो यथावद् यज्ञवेदिनः ॥ ११३ ॥

(१२) वायोतवप्रपृञ्चतीधेनाजिगातिदाशुषे ।
उरूचीसोमपीतये ॥ ३ ॥

वाक् त्वत्सम्पर्किणी यज्ञकृते प्रापयतीप्सितम् ।
सोमपायातिमहती महार्थत्वात् त्वदर्थतः ॥ ११४ ॥

(१३) इन्द्रवायू इमे सुता उप प्रयोभिरा गतम् ।
इन्दवो वामुशन्ति हि ॥ ४ ॥

इन्द्रः स परमैश्वर्यादिदमुद्दिश्य च द्रुतेः ।
ददर्शेदं दीप्तिमत्त्वादिदं रातीति वा भवेत् ॥ ११५ ॥

सोमाभिमानिनो देवा वामिच्छन्ति हि सोमगाः ।
प्रियैरुपागतं तेनोपेन्द्रः सङ्कर्षणो हरिः ॥ ११६ ॥

द्विरूपत्वात् बहुत्वं च विशेषादेव केवलम् ।
एकस्यैव हरेर्नात्र भेदः शङ्क्यः कथञ्चन ॥ ११७ ॥

'एकमेवाद्वितीयं' 'नेह नानाऽस्ति किञ्चन' ।
'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' ॥ ११८ ॥

'यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।
एवं धर्मान् पृथक् पश्यंस्तानेवानु विधावति' ॥ ११९ ॥

उक्त्वा धर्मान् पृथक्त्वस्य निषेधादेवमेव हि ।
विशेषो ज्ञायते श्रुत्या भेदादन्यश्च साक्षितः ॥ १२० ॥

(१४) वायविन्द्रश्च चेतथः सुतानां वाजिनीवसू ।
तावा यातमुप द्रवत् ॥ ५ ॥

विजानतः सुतानन्नपतौ सूर्ये सदा स्थितौ ।
द्रवद् द्रुतं सुतात्पर्यद्योतकोऽभ्यास इष्यते ॥ १२१ ॥

(१५) वायविन्द्रश्च सुन्वत आ यातमुप निष्कृतम् ।
मक्षि्व १ त्था धिया नरा ॥ ६ ॥

यजन् सु(न्वन्)न्वान् कृतस्यानुसारि कर्मैव निष्कृतम् ।
तदर्थं क्षिप्रमायातं धियेत्थम्भूतयाऽचलौ ॥ १२२ ॥

नरौ तावविनाशित्वादुपचारः क्वचिद् भवेत् ।
अमरत्ववद् यतो मोक्षो देवतानां सु(वि)निश्चितः ॥ १२३ ॥

(१६) मित्रं हुवे पूतदक्षं वरुणं च रिशादसम् ।
धियं घृताचीं साधन्ता ॥ ७ ॥

मित्वा त्रातीति मित्रोऽयं मितमह्ना करोति वा ।
मितं रातीति वा नित्यं मितं रमयतीति वा ॥ १२४ ॥

आवृणोतीति वरुणस्तमसाऽज्ञानतोऽपि वा ।
वरमुन्नयतीत्यस्माद् वरानन्दत्वतोऽपि वा ॥ १२५ ॥

पूता दक्षा अनेनेति पूतदक्ष इतीरितः ।
तमाह्वयामि सुखिनं शमदन् रमते यतः ।
अनूनसुखभोक्तृत्वाद् रिशादा इति कीर्तितः ॥ १२६ ॥

हरिर्घृतः सुशुद्धत्वाद् घृताची च तदञ्चनात् ।
स्वधीतिसाधको विष्णुर्भक्तानां च यथार्थतः ॥ १२७ ॥

(१७) ऋतेन॑ मित्रावरुणावृतावृधावृतस्पृशा ।
क्रतु॑ं बृहन्त॑माशाथे ॥ ८ ॥

नित्यवृद्धः स भगवानृतेनानुपचारतः ।
ऋतस्पृग् वेदवाच्यत्वादन्यौ चेद् भगवानृतः ।
ऋ गतावित्यतः सर्ववस्तुष्वनुगतत्वतः ॥ १२८ ॥

तेन वृद्धौ तत्स्पृशौ च सर्वदा मित्रवारिपौ ।
संहितायां तु दैर्घ्यादिरुक्ताधिक्ये पदेऽन्यथा ।
अनन्यार्थत्वविज्ञप्त्या ईशाथे च महाक्रतुम् ॥ १२९ ॥

महत् सुखं वा .................... ।

(१८) क॒वी नो॑ मित्रावरु॑णा तुविजा॒ता उ॑रु॒क्षया॑ ।
दक्ष॑ं दधाते अ॒पस॑म् ॥ ९ ॥ (४)

.............. तुविजौ ब्रह्मजातौ तथाविधौ ।
हरिस्तथैव भूतत्वात् स्थानं क्षय इहोच्यते ॥ १३० ॥

**कर्मापसं च कर्तारं दक्षं कर्तारमेव वा ।**
**अस्मदर्थे दधाते तौ नित्यं बुद्धौ गतागतौ ॥ १३१ ॥**

## सूक्तम् - ३

(अश्विना द्वादश, ऋषिः मधुच्छन्दाः वैश्वामित्रः । छन्दः गायत्री । देवता १-३ अश्विनौ, ४-६ इन्द्रः, ७-९ विश्वेदेवाः, १०-१२ सरस्वती ।)

(१९) अश्विना यज्वरीरिषो द्रवत्पाणी शुभस्पती ।
पुरुभुजा चनस्यतम् ॥ १ ॥

**अन्नानि यज्ञयो(भो)ग्यानि क्षिप्रहस्तौ शुभाधिपौ ।**
**वहुगोपौ वहुभुजौ नो योजयतमश्विनौ ।**
**यज्ञे वृत्तान् स्वभागान् वा संयोजयतमाशु वै ॥ १३२ ॥**

**आशु वानाद् गतेरश्वी क्षिप्रावगतितोऽ(पिवा)थवा ।**
**अश्नुतेऽखिलमित्येवाप्यश्वजत्वात् तथाऽश्विनौ ॥ १३३ ॥**

(२०) अश्विना पुरुदंससा नरा शवीरया धिया ।
धिष्ण्या वनतं गिरः ॥ २ ॥

**वहुकर्मकृतौ सौख्यवीर्यात्मिक्या धिया गिरः ।**
**अस्मदीयाः सम्भजतं धिष्ण्यौ सर्वाश्रयौ सदा ॥ १३४ ॥**

(२१) दस्रा युवाकवः सुता नासत्या वृक्तबर्हिषः ।
आ यातं रुद्रवर्त्तनी ॥ ३ ॥

भेदकौ सर्वशत्रूणां दस्रौ सम्बन्धिनौ हि वाम् ।
सुता युवाकवः सोमा यज्वनः स्तृतबर्हिषः ।
नासत्यौ नासिकासंस्थौ नैव चासद्गुणौ क्वचिद् ॥ १३५ ॥

रुजां द्रवणतो रुद्रो वायुस्तदनुवर्तनात् ।
स्नेहतोऽनुवशत्वाद् वा तन्मार्गगतितोऽथवा ।
कस्मिन्न्वहमिति श्रुत्या वासुदेवोऽश्विनावपि ॥ १३६ ॥
रुद्रवर्तनिशब्दोक्ताः ................ ।

(२२) इन्द्रा याहि चित्रभानो सुता इमे त्वायवः ।
अण्वीभिस्तना पूतासः ॥ ४ ॥

.................... चित्रं भद्रं रतं चितौ ।
चिद्रतेश्चायनीयत्वाददनाद् वा चितोऽभिदा ।
तादृशा रश्मयो ज्ञानमस्येति भगवान् परः ॥ १३७ ॥

चित्रभानुरिति प्रोक्तस्तेजो वा तादृशं प्रभोः ।
त्वदिच्छव इमे सोमाः पटीभिः सूक्ष्मतन्तुभिः ।
विस्तृत्य शोधिताः सूक्ष्मप्रमाभि(श्च)र्वा मनांसि च ॥ १३८ ॥

सोमानां मनसां चैव देवताः सोमरश्मिगाः ।
सोमभृत्याः समस्तस्य सोम एवाधिपो हरिः ॥ १३९ ॥

(२३) इन्द्रा याहि धियेषितो विप्रजूतः सुतावतः ।
उप ब्रह्माणि वाघतः ॥ ५ ॥

अस्मद्बुद्ध्या प्रार्थितो वा स्वबुद्ध्या प्रेरितोऽपि वा ।
ब्राह्मणैः प्रेरितो भक्त्या वदतो होतुरञ्जसा ।
ब्रह्माणि सोमयुक्तानि यजमानस्य वे(चे)च्छतः ॥ १४० ॥

**उपायाह्यापि यः कोऽपि साधको यज्ञकृन्मतः ।**
**मानसो वाचिको वा स्याद् यज्ञो होता ह्वयन् स च ॥ १४१ ॥**

(२४) इन्द्रा याहि तूतुजान उप ब्रह्माणि हरिवः ।
सुते दधिष्व नश्चनः ॥ ६ ॥

**वेगवांस्तूतुजानः स्यात् संसारमुपसंहरन् ।**
**वर्तते येन हरिवा हरिभिर्वर्ततेऽथवा ॥ १४२ ॥**

**हरणाद् विषयाणां च प्राणा हरय ईरिताः ।**
**तेषु वर्तत इत्यस्मात् तान् वाऽथ गमयेदसौ ॥ १४३ ॥**

**हरिवा हरिवान् वाऽपि विष्णुना वर्ततेऽथवा ।**
**चनो मन इह प्रोक्तं सुखं च कंचिदीर्यते ॥ १४४ ॥**

(२५) ओमासश्चर्षणीधृतो विश्वे देवास आगत ।
दाश्वांसो दाशुषः सुतम् ॥ ७ ॥

**आ समन्तात् स्वीकृतमा ओमा इति च शब्दिताः ।**
**ओनामा भगवान् विष्णुस्तेन वा निर्मिताः सुराः ।**
**ओता मानेषु मा वैषु प्रोता ओमा इतीरिताः ॥ १४५ ॥**

**प्रजाश्चर्षणयः प्रोक्ता विश्वे ते च प्रवेशनात् ।**
**सर्वे वाऽथ विशां वानाच्छब्दः कस्मै यथा भवेत् ॥ १४६ ॥**

**दातारो यजमाना वा ...................... ।**

(२६) विश्वे देवासो अप्तुरः सुतमा गन्त तूर्णयः ।
उस्रा इव स्वसराणि ॥ ८ ॥

.................. असुरः कर्मवेगिनः ।
उस्रास्तु रश्मयश्चैव स्वसराणि दिनानि च ॥ १४७ ॥

(२७) विश्वे देवासो अस्रिध एहिमायासो अद्रुहः ।
मेधं जुषन्त वह्नयः ॥ ९ ॥

असंसारादस्रिधस्ते देवाश्चेन्मोक्षनिश्चयात् ।
यथेष्टनिश्चितज्ञाना एहिमायाः समन्ततः ॥ १४८ ॥

अदुःखत्वाददुहस्ते मेधं यज्ञं जुषन्तु नः ।
वह्नयो वहनादस्य ............... ।

(२८) पावका नः सरस्वती वाजेभिर्वाजिनीवती ।
यज्ञं वष्टु धियावसुः ॥ १० ॥

............... शोधकत्वात्तु पाव(कः)का ॥ १४९ ॥

सरणात् सर्वगत्वेन सर्वज्ञो वा सरो हरिः ।
सरसः सरतित्वाद् वा तद्वत्येव सरस्वती ।
हरौ गुणाः सरश्शब्दा देवी तु हरिवाचिनी ॥ १५० ॥

हरिप्रियत्वतो वायुः सरस्वांस्तत्प्रियाऽथवा ।
गुणस्वेन ततत्वा(त्तु)द् वा भगवांस्तु सरस्वती ॥ १५१ ॥

स्त्रीरूपश्चैव पुंरूपो भगवान् न नपुंसकः ।
स्त्रीपुंदोषविहीनत्वादपि तच्छब्दगोचरः ॥ १५२ ॥

अन्नेनो वाजिनामीशो वाजिनी(नीः) सूर्य उच्यते ।
वाजीनच्छन्दसां वाऽपि स्वामी प्रोक्तः स वाजिनी ॥ १५३ ॥

छन्दांस्यश्वा यतस्तस्य ते चेना अन्यवाजिनाम् ।
अन्नवत्त्वाद् वाजिनी वाग् ज्ञानयुद्धत्वतोऽपि वा ॥ १९४ ॥

स पुत्रो वागुमा तस्याः पुत्री तद् वाजिनीवती ।
सरस्वती हरिर्वाऽपि यज्ञं वहतु नोऽशनैः ॥ १९५ ॥

अन्नदा हि सदा देवी धिया सह वसेयतः ।
धियावसुर्नित्यबोधा ........................ ।

(२९) चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् ।
यज्ञं दधे सरस्वती ॥ ११ ॥

........................... सुवाचां प्रेरका सदा ॥ १९६ ॥

सुबुद्धिज्ञापिका सैव स्वातन्त्र्याल्लुप्तयो भवेत् ।
अनेनैव प्रकारेण सैव यज्ञादिधा(रिणी)रणी ॥ १९७ ॥

(३०) महो अर्णः सरस्वती प्र चेतयति केतुना ।
धियो विश्वा वि राजति ॥ १२ ॥ (॥ ६ ॥)

महो अर्णः परं ब्रह्म तेजस्त्वाच्च महत्त्वतः ।
अर(पर)मानन्दरूपत्वाण्णो हि निर्वृतिवाचकः ।
तज्ज्ञापयति सा देवी ज्ञानं दत्त्वा महत्तरम् ॥ १९८ ॥

महो अर्णः स्वयं देवः स्वमात्मानं प्रकाशयेत् ।
विराजयति विश्वाश्च धियः सुज्ञानदानतः ॥ १९९ ॥

सूक्तं त्वनारतं प्रोक्तमनुवागेककालिका ।
अन्यथात्वं च तत्र स्यादावापोद्वापतस्त्वृचाम् ।
वेदानन्तत्वविज्ञप्त्यै तौ चक्रे बादरायणः ॥ १६० ॥

'ऋचः स ऋच उद्धृत्य ऋग्वेदं कृतवान् प्रभुः ।
यजूंषि निगदाच्चैव तथा सामानि सामतः' ॥ १६१ ॥

एवं पुराणवचनादुद्धृता हि ततस्ततः ।
ऋचः शाखात्वमापन्नाः शिष्यतच्छिष्यकैरिमाः ॥ १६२ ॥

मानःस्तेनेतिपूर्वासु ह्यूनता दृश्यतेऽर्थतः ।
शुनःशेपोदिताभ्यश्च पठ्यन्तेऽन्यत्र काश्चन ।
अत्राप्यक्रमतो दृष्टिरिति नैकक्रमो भवेत् ॥ १६३ ॥

अनन्तत्वात्तु वेदानां प्रायः कर्मानुसारतः ।
सङ्क्षेपं कृतवान् देवः शिष्याश्च तदनुज्ञया ॥ १६४ ॥

अष्टकाध्यायवर्गादिभेदं च कृतवान् प्रभुः(स्वयम्) ।
स्वाध्यायविश्रमार्थाय तस्मात् क्रमविपर्ययः ॥ १६५ ॥

तत्र तत्रैवान्तरिता दृश्यन्ते च खिला अपि ।
यत्रार्थे न विशेषोऽस्ति पदान्तरितताऽत्र च ।
यत्राल्पोऽपि विशेषोऽस्ति पदं नान्तरितं भवेत् ॥ १६६ ॥

## सूक्तम् - ४

(सुरूपकृत्नुं दश, ऋषिः मधुच्छन्दाः वैश्वामित्रः । छन्दः गायत्री । देवता इन्द्रः ।)

(३१) सुरूपकृत्नुमूतये सुदुघामिव गोदुहे ।
जुहूमसि द्यविद्यवि ॥ १ ॥

विष्णुं सु(स्वरूप)रूपकर्तारमभिप्रेतार्थसिद्धये ।
त्राणाय वा कामधेनुमिव दोहाय तत्स्थितेः ।। १६७ ।।

दिने दिने स्वाह्वयामः ........... ।

(३२) उप॑ नः॒ सव॑ना ग॑हि॒ सोम॑स्य सोमपाः पिब ।
गो॒दा इद्रे॒वतो॒ मदः॑ ।। २ ।।

............... ज्ञानदोऽस्यैव चाधिकम् ।
ज्ञानाख्यरयियुक्तस्य हिरण्यादिमतोऽपि वा ।। १६८ ।।

सुखकारी भवान् .......... ।

(३३) अथा॑ ते॒ अन्त॑मानां वि॒द्याम॑ सुम॒तीनाम् ।
मा नो॒ अति॑ ख्य॒ आ ग॑हि ।। ३ ।।

................. तस्माल्लभेम सुमतीस्तव ।
अन्ते मितास्त्वद्विषया मतयो ह्युत्तमोत्तमाः ।
अस्मानतीत्य मा पश्य करुणार्द्रदृशा सदा ।। १६९ ।।

(३४) परे॑हि॒ विग्रमस्तृ॑तमिन्द्रं॑ पृच्छा विप॒श्चित॑म् ।
यस्ते॒ सखि॑भ्य॒ आ वर॑म् ।। ४ ।।

मन्मनो वाऽथ शक्रो वा दूरेऽपि परमेश्वरम् ।
गच्छाग्राह्यमनष्टं च व्याप्तचित्तं य एव च ।
सखिभ्य उत्तमो नित्यम् ........ ।

(३५) उत ब्रु॑वन्तु नो॒ निदो॒ निर॒न्यत॑श्चिदारत ।
दधा॑ना॒ इन्द्र॒ इद्दुवः॑ ।। ५ ।। (।। ७ ।।)

...................... निदस्तस्य समीपगाः ॥ १७० ॥

तेऽपि ब्रुवन्तु नो देवं प्रापुर्ये चान्यतोऽपि तम् ।
निर्गत्याज्ञानतस्तस्माद्दधाना ईश एव च ।
दुवः प्राणान् ब्रुवन्त्वेव तेऽपि नः परमेश्वरम् ॥ १७१ ॥

(३६) उत नः सुभगाँ अरिर्वोचेयुर्दस्म कृष्टयः ।
स्यामेदिन्द्रस्य शर्मणि ॥ ६ ॥

अरयोऽपि प्रजा अस्मान् वोचेयुः सुभगान् सदा ।
शत्रुभेदिंस्तवेन्द्रस्य स्यामैवानुग्रहे सुखे ॥ १७२ ॥

(३७) एमाशुमाशवे भर यज्ञश्रियं नृमादनम् ।
पतयन्मन्दयत्सखम् ॥ ७ ॥

आशुवीर्य तवैवाऽशुं सोमं क्षिप्रं मनोऽपि वा ।
आभरस्वोदरे तुष्ट्या हृदि वा यज्ञभूषणम् ॥ १७३ ॥

ईमेव पुम्मदकरं मदादुत्पतनादिके ।
हेतुं मन्दत्वहेतुं च तत्सखीनां पुरोगतेः ॥ १७४ ॥

(३८) अस्य पीत्वा शतक्रतो घनो वृत्राणामभवः ।
प्रावो वाजेषु वाजिनम् ॥ ८ ॥

एनं पीत्वा बहुज्ञानाऽभूस्तमोभिरनावृतः ।
प्रसादादेव मुक्तेषु(भक्तेषु) तमोसह्यतया घनः ॥ १७५ ॥

आवृतेरेव वृत्राणि ह्यज्ञानान्यन्नदं नरम् ।
प्रावो युद्धेषु योद्धारं भक्तं ज्ञानिनमेव च(वा) ॥ १७६ ॥

(३९) तं त्वा वाजेषु वाजिनं वाजयामः शतक्रतो ।
धनानामिन्द्र सातये ।। ९ ।।

**योधयामो वयं तं त्वां ज्ञानादिधनलब्धये ।**
**अज्ञानाद्यस्मदरिभिः .................. ।**

(४०) यो रायो३वनिर्महान्त्सुपारः सुन्वतः सखा ।
तस्मा इन्द्राय गायत ।। १० ।। ( ।। ८ ।।)

**............. योऽशेषद्रविणाव(धिः)निः ।**
**सुखदः संसृतेः पारस्तस्मा इन्द्राय गायत ।। १७७ ।।**

**कम्पोऽशेषग्रहे क्वापि लज्जायां वा पुरातने ।**
**पृथक्त्वेऽधृष्यतायां वा हरिणर्क्संहितोदितः ।। १७८ ।।**

## सूक्तम् - ५

(आत्वा दश, ऋषिः मधुच्छन्दाः वैश्वामित्रः । छन्दः गायत्री । देवता इन्द्रः ।)

(४१) आ त्वेता निषीदतेन्द्रमभि प्र गायत ।
सखायः स्तोमवाहसः ।। १ ।।

(४२) पुरूतमं पुरूणामीशानं वार्याणाम् ।
इन्द्रं सोमे सचा सुते ।। २ ।।

**सुपूर्णानां पूर्णतमं वरेण्यानामधीश्वरम् ।**
**सुते सोमे सुखेनैव सचागायत तं प्रभुम् ।। १७९ ।।**

(४३) स घा नो योग आ भुवत्स राये स पुरंन्ध्याम्।
गमद्वाजेभिरा स नः ।। ३ ।।

**मुक्तौ योगायाऽसमन्ताद् भवेन्नो घोऽवधारणे ।**
**स एव भगवान् ज्ञानवित्ताय स च बुद्धिगः ।। १८० ।।**

**बुद्धिः पुराश्रयत्वेन पुरन्धिः पत्न्यथापि वा ।**
**पत्न्यर्थत्वे तु तादर्थ्यं सोऽन्नैः सह न आव्रजेत् ।। १८१ ।।**

(४४) यस्य संस्थे न वृण्वते हरी समत्सु शत्रवः ।
तस्मा इन्द्राय गायत ।। ४ ।।

**यस्य स्थितौ न वृणते हर्यग्रमपि शत्रवः ।**
**मनः पुरो वा विषयहरणान्मन एव च ।**
**बुद्धिश्च हरिशब्दोक्ते तमआदीनि शत्रवः ।। १८२ ।।**

(४५) सुतपान्ने सुता इमे शुचयो यन्ति वीतये ।
सोमासो दध्याशिरः ।। ५ ।। (।। ९ ।।)

**सोमपे शुचयः सोमाः प्राप्त्यै दधिविमिश्रिताः ।**
**मनांसि ध्यानयुक्तानि वाऽऽयान्ति हरये सदा ।। १८३ ।।**

(४६) त्वं सुतस्य पीतये सद्यो वृद्धो अजायथाः ।
इन्द्र ज्यैष्ठ्याय सुक्रतो ।। ६ ।।

**सदा पूर्णः शुभ(पूर्णशुभ)ज्ञान ज्यैष्ठ्यव्यक्त्यै सुताप्तये ।**
**न क्षुदादेरभिव्यक्तोऽभवः ........ ।**

(४७) आ त्वा विशन्त्वाशवः सोमास इन्द्र गिर्वणः ।
शं ते सन्तु प्रचेतसे ।। ७ ।।

............. गीर्भिर्वृत प्रभो ।
प्रकृष्टचेतास्त्वद्भृत्यो योऽस्मै स्युः शङ्कराः सुताः ॥ १८४ ॥

(४८) त्वां स्तोमा॑ अवीवृधन्त्वामुक्था श॑तक्रतो ।
त्वां व॑र्धन्तु नो गि॑रः ॥ ८ ॥

व्यञ्जयन्त्य(न्त्व)धिकं स्तोमा साम्न्युक्थान्यृक्षु चैव हि ।
महागुणैर्व्यञ्जयन्तु गिरोऽस्माकमपि प्रभो ॥ १८५ ॥

आकाशवृद्धिवद् वृद्धिर्विष्णौ स्यान्नैव चान्यथा ।
'न वर्धते नो कनीयान्' इति ह्येनं श्रुतिर्जगौ ॥ १८६ ॥

महातात्पर्यरोधाच्च श्रुत्यर्थो नापरो भवेत् ।
यद्यन्यापेक्षया वृद्धिरीश(शि)त्वं स्यात्कुतोऽस्य च ।
अक्षितोतिरिति ह्यस्मात्पूर्णाभिप्रायतोदिता ॥ १८७ ॥

(४९) अक्षि॑तोतिः सनेदिमं वाजमिन्द्रः॑ सहस्रिण॑म् ।
यस्मिन्विश्वा॑नि पौंस्या॑ ॥ ९ ॥

अनन्तफलदं वाजमस्मत्तो लभतां स च ।
ददातु वा पौरुषाणि शक्तयो यत्र चाखिलाः ॥ १८८ ॥

अतश्चानन्तशक्तित्वान्न वृद्ध्याद्याः कथञ्चन ।
सर्वोपेतेत्येतमर्थमभिप्रेत्याऽह वेदराट् ॥ १८९ ॥

(५०) मा नो मर्ता॑ अभि द्रुंहन्तनूना॑मिन्द्र गिर्वणः ।
ईशा॑नो यवया वधम् ॥ १० ॥ (॥ १० ॥)

मा मर्ता नस्तनूनां तु द्रोग्धारः स्युः कथञ्चन ।
ईशोऽस्यपाकुरु वधं तेन नो मुक्तिदानतः ॥ १९० ॥

**मनुष्येभ्यस्तनूनां च नैव नः स्युर्विपत्तयः ।**
**कालेन दैवतः प्राप्ते स्याददेहत्वतो वधः ॥ १९१ ॥**

## सूक्तम् - ६

(युञ्जन्ति दश, ऋषिः मधुच्छन्दाः वैश्वामित्रः । छन्दः गायत्री । देवता १, २, ४ मरुतः ३, ५, मरुत इन्द्रश्च, ६-१० इन्द्रः ।)

(५१) युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः ।
रोचन्ते रोचना दिवि ॥ १ ॥

**पौंस्यानि वासुदेवस्य ब्रध्नं वृद्धं दिवाकरम् ।**
**अरुणं चरन्तं परितो गिरीन् युञ्जन्ति सर्वदा ॥ १९२ ॥**

**तैरेवान्यानि चन्द्रादिरोचनानि त्रिविष्टपे ।**
**रोचयन्ति ...................... ।**

(५२) युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे । शोणा धृष्णू नृवा हसा ॥ २ ॥

**....... हरी चास्य मनोबुद्धी स्वशक्तयः ।**
**युञ्जन्त्यधिगुणत्वेन काम्यावश्यावथापि वा ॥ १९३ ॥**

**विशिष्टपक्षसंयुक्ताविव क्षिप्रतरौ सदा ।**
**रथे देहेऽपि वा देवाः स्वमनो बुद्धिमेव च ॥ १९४ ॥**

**अस्य देहे प्रयुञ्जन्ति सूर्यादीन् स्थापयन्ति च ।**
**सूर्यादिस्थापकत्वं च ब्रह्मादीनां भवेत् सदा ॥ १९५ ॥**

शोणौ च शमणौ प्रोक्तौ सुखप्राप्तौ यतः सदा ।
श्यामौ मूर्धनि शोणौ च शक्राश्वावग्रगौ स्मृतौ ।
दृष्टौ नॄन् प्रति तं (चेशं)वेशं वहन्तौ तावुभावपि ॥ १९६ ॥

(५३) केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे ।
समुषद्भिरजायथाः ॥ ३ ॥

अज्ञाय कुर्वन् सज्ज्ञानं हेमाहेमाय चेश्वरः ।
उषद्भिः सम्प्रकाशद्भिः शक्तिभिर्व्यक्ततामगाः ॥ १९७ ॥

मर्या मरणवन्तोऽपि देवा (एव)एवम् ....... ।

(५४) आदह स्वधामनु पुनर्गर्भत्वमेरिरे ।
दधाना नाम यज्ञियम् ॥ ४ ॥

..................... हरेर्वशात् ।
तदैव सुखमन्वेव पुनर्गूढत्वमापिरे ॥ १९८ ॥

स्वेच्छयैव परे(रमे)शस्य शक्तयो देवता अपि ।
यज्ञे वाच्यं दधानाश्च नाम ........... ।

(५५) वीळु चिदारुजत्नुभिर्गुहा चिदिन्द्र वह्निभिः ।
अविन्द उस्रिया अनु ॥ ५ ॥ (॥ ११ ॥)

................ वीळु दृढं ह्यपि ॥ १९९ ॥

आरुजद्भिः स्वसामर्थ्यैर्गुहायां संस्थितोऽपि सन् ।
वहद्भिरखिलं लोकं प्रकाशत्वानि लब्धवान् ।
देवैर्वैतादृशैः साकमानुकूल्येन लब्धवान् ॥ २०० ॥

(५६) देवयन्तो यथा मतिमच्छा विदद्वसुं गिरः ।
महामनूषत श्रुतम् ॥ ६ ॥

**सम्यक् प्रद्योतयन्तोऽमुं मतिरूपं यथास्थितम् ।**
**विदद्वित्तं महान्तं च विश्रुतं सुगिरोऽस्तुवन् ॥ २०१ ॥**

(५७) इन्द्रेण सं हि दृक्षसे सञ्जग्मानो अविभ्युषा ।
मन्दू समानवर्चसा ॥ ७ ॥

**तस्य सन्दर्शनायैव सङ्गत(स्तस्य)स्तेन शङ्करः ।**
**मखात्मा पुरुहूतो वा श्रीभूमी च सुखा(त्मके)त्मिके ॥ २०२ ॥**

(५८) अनवद्यैरभिद्युभिर्मखः सहस्वदर्चति ।
गणैरिन्द्रस्य काम्यैः ॥ ८ ॥

**अनवद्यैर्महाज्ञानैः प्रियैर्देवगणैः सह ।**
**वायुना च सहार्चन्ति सुधीत्वात् परमेश्वरम् ॥ २०३ ॥**

(५९) अतः परिज्मन्ना गहि दिवो वा रोचनादधि ।
समस्मिन्नृञ्जते गिरः ॥ ९ ॥

**अतो हेतोरिहाऽयाहि दिवो वा सूर्यमण्डलात् ।**
**परिज्मन् सर्वगास्माकमधिकृत्य समर्हणम् ।**
**अस्मिन् गिरः प्राप्नुवन्ति सम्यक् परममुख्यतः ॥ २०४ ॥**

**युञ्जन्तीत्यत्र बाहुल्याद् देवयन्तोऽत इत्यपि ।**
**बाहुल्या(द्व)दृष्टितो गीर्भिर्विनाऽर्थो नान्य इष्यते ॥ २०५ ॥**

(६०) इतो वा सातिमीमहे दिवो वा पार्थिवादधि ।
इन्द्रं महो वा रजसः ॥ १० ॥ (॥ १२ ॥)

**इतो दिवो वा पाता(ळा)लात् सतिं लाभस्वरूपिणम् ।**
**महतो रञ्जकाद्विष्णोर्लोकाद् वा तमधीमहे ॥ २०६ ॥**

## सूक्तम् - ७

(इन्द्रं दश, ऋषिः मधुच्छन्दाः वैश्वामित्रः । छन्दः गायत्री ।
देवता इन्द्रः ।)

(६१) इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः ।
इन्द्रं वाणीरनूषत ॥ १ ॥

**तमेव गाथिनः साम्ना स्तुवन्त्यृग्भिश्च बह्वृचाः ।**
**बृहन्तमन्यवाणीभिरपि ........ ।**

(६२) इन्द्र इद्धर्योः सचा सम्मिश्ल आ वचोयुजा ।
इन्द्रो वज्री हिरण्ययः ॥ २ ॥

**.................. हर्योर्विमिश्रितः ॥ २०७ ॥**

**रथेऽथवा मनोबुद्ध्योर्वाङ्मात्रेणैव योगिनोः ।**
**सचा सुखेन वज्री च ज्ञानानन्दो हि धातुतः ।**
**हितश्च रमणीयश्च हिरण्यय इतीरितः ॥ २०८ ॥**

(६३) इन्द्रो दीर्घाय चक्षस आ सूर्यं रोहयद्दिवि ।
वि गोभिरद्रिमैरयत् ॥ ३ ॥

**दीर्घकालं दर्शनाय सूर्यमारोहयद् दिवि ।**
**ज्ञानैरादरयोग्यं च प्राणात्मानं समैरयत् ॥ २०९ ॥**

(६४) इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च ।
उग्र उग्राभिरूतिभिः ।। ४ ।।

**बहुभिर्युध्यमानेषु युद्धेष्वपि सदाऽव नः ।**
**दुष्टोग्रैः सदभिप्रायैः ............ ।**

(६५) इन्द्रं वयं महाधन इन्द्रमर्भे हवामहे ।
युजं वृत्रेषु वज्रिणम् ।। ५ ।। (।। १३ ।।)

**............ महदल्पधना(फला)र्थिनः ।**
**हवामहेऽरिवर्ज्यं तं तमसां प्रतियोगिनम् ।। २१० ।।**

(६६) स नो वृषन्नमुं चरुं सत्रादावन्नपावृधि ।
अस्मभ्यमप्रतिष्कुतः ।। ६ ।।

**अस्मदीयं चरुं भोज्यमानन्दं त(त्व)मपावृणु ।**
**मोक्षगं सर्वदातस्त्वमप्रतिद्वन्द नो वृषन् ।। २११ ।।**

(६७) तुञ्जेतुञ्जे य उत्तरे स्तोमा इन्द्रस्य वज्रिणः ।
न विन्धे अस्य सुष्टुतिम् ।। ७ ।।

**त्वयैव प्रेरणे जाते तत्र तत्र य उत्तराः ।**
**तेऽपि स्तोमाः सुष्टुतित्वमस्यानन्त्यान्न चाप्नुयुः ।। २१२ ।।**

(६८) वृषा यूथेव वंसगः कृष्टीरियर्त्योजसा ।
ईशानो अप्रतिष्कुतः ।। ८ ।।

**प्रतिवीरो वृषा वंसस्तद्धन्ता वंसगो विभीः ।**
**यूथान्याकर्षति यथा प्रजाः प्रेरयति प्रभुः ।**
**अल्पस्यापि प्रसिद्ध्यैव दृष्टान्तत्वं(च) तु युज्यते ।। २१३ ।।**

(६९) य एकश्चर्षणीनां वसूनामिरज्यति ।
इन्द्रः पञ्च क्षितीनाम् ।। ९ ।।

**राजा भवति वित्तानां प्रजानां चैक एव यः ।**
**देवगन्धर्वदैतेयपितृमानुषभेदतः ।**
**प्रजानामपि पञ्चानां सामान्याच्च विशेषतः ।। २१४ ।।**

(७०) इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः ।
अस्माकमस्तु केवलः ।। १० ।। (।। १४ ।।)

**सम्यग्घवामहे सर्वगतं च व्यक्तरूपतः ।**
**स्थातुमेकत्र वोऽर्थाय जना नोऽस्तु स केवलः ।। २१५ ।।**

## सूक्तम् - ८

(ऐन्द्र दश, ऋषिः मधुच्छन्दाः वैश्वामित्रः । छन्दः गायत्री ।
देवता इन्द्रः ।)

(७१) एन्द्र सानसिं रयिं सजित्वानं सदासहम् ।
वर्षिष्ठमूतये भर ।। १ ।।

**जयिना सहितं लाभयुतं वित्तं सदाबलम् ।**
**वर्षिष्ठं सुमहद् रक्षानिमित्तं नित्य(माभर)दा भर ।। २१६ ।।**

(७२) नि येन मुष्टिहत्यया नि वृत्रा रुणधामहै ।
त्वोतासो न्यर्वता ।। २ ।।

**येनारीन् मुष्टियुद्धेन तमांसि ज्ञानयुद्धतः ।**
**त्वत्प्रेरिता निरुन्धामः कांश्चिद् वा तुरगादिभिः ।**
**आवृत्त्यैवोपसर्गस्य क्रियावृत्तिर्भविष्यति ॥ २१७ ॥**

(७३) इन्द्र त्वोतास आ वयं वज्रं घना ददीमहि ।
जयेम संयुधि स्पृधः ॥ ३ ॥

**त्वत्प्रेरिता ज्ञानरतिं दृढत्वेनाऽददीमहि ।**

(७४) वयं शूरेभिरस्तृभिरिन्द्र त्वया युजा वयम् ।
सासह्याम पृतन्यतः ॥ ४ ॥

**त्वया पृतन्यतः शत्रू(न् हनिष्याम)नभिष्याम सुयो(धिभिः)द्धृभिः ॥ २१८ ॥**

(७५) महाँ इन्द्रः परश्च नु महित्वमस्तु वज्रिणे ।
द्यौर्न प्रथिना शवः ॥ ५ ॥ (॥ १५ ॥)

**यस्मान्महाननादिश्च विष्णुर्जीवोऽवरस्तथा ।**
**तस्यैवास्तु महत्त्वं तन्न जीवब्रह्मतां स्मरेत् ।**
**आकाशवत् प्रथिम्नाऽसौ शवः सुखबले तथा ॥ २१९ ॥**

(७६) समोहे वा य आशत नरस्तोकस्य सनितौ ।
विप्रासो वा धियायवः ॥ ६ ॥

**अन्यसंवहने(वाऽपि)नापि ये तं(ये च) प्राप्ता जनार्दनम् ।**
**ज्ञानलाभेन तु नरस्त एव पशवोऽपरे ।**
**विप्राश्चैव धिया युक्ता मूर्खाः शूद्रसमा (स्मृताः) मताः ॥ २२० ॥**

(७७) यः कुक्षिः सोमपातमः समुद्र इव पिन्वते ।
उर्वीरापो न काकुदः ।। ७ ।।

**यः कुक्षि(रस्य)स्तस्य देवस्य समुद्र इव सोऽखिलान् ।**
**कामान् क्षरति भक्ताय महाप इव तर्पकाः ।**
**काकुदस्तस्य जिह्वाः स्युः बह्व्यो बहुमुखेषु याः ।। २२१ ।।**

(७८) एवा ह्यस्य सूनृता विरप्शी गोमती मही ।
पक्वा शाखा न दाशुषे ।। ८ ।।

**एवमेवास्य वाणी च वेदेता महती तथा ।**
**पक्वा शाखेव यज(तो)ते वरदात्री विरप्शिनः ।। २२२ ।।**

**बलिष्ठस्य हि ते ............ ।**

(७९) एवा हि ते विभूतय ऊतय इन्द्र मावते ।
सद्यश्चित् सन्ति दाशुषे ।। ९ ।।

**........... सन्ति सद्योऽपि यजते हि ते ।**
**मावते ज्ञानिने नित्यमूतयश्च विभूतयः ।। २२३ ।।**

(८०) एवा ह्यस्य काम्या स्तोम उक्थं च शंस्या ।।
इन्द्राय सोमपीतये ।। १० ।। (।। १६ ।।)

**स्तोमा उक्थानि चैवास्य तस्मै काम्यानि सर्वदा ।**
**गेयाः शं(श)स्यानि सोमस्य पीतये नान्यथा पिबेत् ।। २२४ ।।**

## सूक्तम् - ९

(इन्द्रेहि दश, ऋषिः मधुच्छन्दाः वैश्वामित्रः । छन्दः गायत्री । देवता इन्द्रः ।)

(८१) इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः ।।
महाँ अभिष्टिरोजसा ।। १ ।।

**सोमपाः सोमपर्वाणः सर्वं यस्मात् तदिच्छया ।**
**अभिष्टिरोजसा नित्यं मदं सुखमवाप्स्यसि ।। २२५ ।।**

(८२) एमेनं सृजता सुते मन्दिमिन्द्राय मन्दिने ।
चक्रिं विश्वानि चक्रये ।। २ ।।

**एनमासृजतेन्दौ च विष्णुं तं मदका(रणम्)रिणम् ।**
**मन्दिने विष्णवे सम्यक् कर्मिणं सर्वकर्मिणे ।। २२६ ।।**

(८३) मत्स्वा सुशिप्र मन्दिभिः स्तोमेभिर्विश्वचर्षणे ।।
सचैषु सवनेष्वा ।। ३ ।।

**स्वानन्द विश्वजीवेशाऽमत्स्वास्मद्रक्षया सह ।**

(८४) असृग्रमिन्द्र ते गिरः प्रति त्वामुदहासत ।
अजोषा वृषभं पतिम् ।। ४ ।।

**त्वन्निस्सृता वेदवाचस्त्वां प्रत्येवाप्यनारतम् ।। २२७ ।।**

**उच्चैर्मुख्यतया सम्यग् विसृष्टाः स्वपतिं प्रति ।**
**अजोषाः स्तुत्यरूपेण त्वसेव्यास्त्वदृते क्वचित् ।। २२८ ।।**

(८५) सं चोदय चित्रमर्वाग् राध इन्द्र वरेण्यम् ।
असदित् ते विभु प्रभु ॥ ५ ॥ (॥ १७ ॥)

**अर्वाङ् नीचान् प्रति त्वस्मान् भद्रं राधः प्रचोदय ।**
**अस्त्येव ते विशेषेण प्रकृष्टं शुभमच्युतम् ॥ २२९ ॥**

(८६) अस्मान्त्सु तत्र चोदयेन्द्र राये रभस्वतः ।
तुविद्युम्न यशस्वतः ॥ ६ ॥

**रभस्वतः शब्दवतः स्तोतॄनस्मान् यशस्वतः ।**
**तत्र त्वयि महाराये महाकीर्ते सुचोदय ॥ २३० ॥**

(८७) सं गोमदिन्द्र वाजवदस्मे पृथु श्रवो बृहत् ।
विश्वायुर्धेह्यक्षितम् ॥ ७ ॥

**अस्मास्वतिबृहज्ज्ञानं नित्यं सन्धेहि चाक्षयम् ।**

(८८) अस्मे धेहि श्रवो बृहद्द्युम्नं सहस्रसातमम् ।
इन्द्र ता रथिनीरिषः ॥ ८ ॥

**विद्यां कीर्तिं सदेहान्नं बहुलाभयुतं बृहत् ।**
**प्रार्थने पौनरुक्त्यं न चोदयेति ततः पुनः ॥ २३१ ॥**

(८९) वसोरिन्द्रं वसुपतिं गीर्भिर्गृणन्त ऋग्मियम् ।
होम गन्तारमूतये ॥ ९ ॥

**वसोर्वसूनां च पतिं देवदेवेश्वरं प्रभुम् ।**
**ऋङ्मेयमाह्वयामोऽत्र गृणन्तोऽभीष्टसिद्धये ॥ २३२ ॥**

(९०) सुते सुंते न्योंकसे बृहद् बृंहत एदरिः ।
इन्द्रांय शूषमंर्चति ।। १० ।। (।। १८ ।।)

**अविनाश्यरिरुद्दिष्टो बृहच्छूषं सुखं प्रति ।**
**सुते सुते सद्गृहाय देवाय बृहतेऽर्चति ।। २३३ ।।**

## सूक्तम् - १०

(गायन्ति द्वादश, ऋषिः मधुच्छन्दाः वैश्वामित्रः । छन्दः अनुष्टुप् । देवता इन्द्राः ।)

(९१) गायंन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणंः ।
ब्रह्माणंस्त्वा शतक्रत उद्वंशमिंव येमिरे ।।

**गायन्ति सामगास्त्वृग्भिः शंसन्त्यृग्वेदिनोऽतिकम् ।**
**विरिश्चास्त्वां बहुज्ञान शक्रकेतुमिवोच्छ्रितम् ।। २३४ ।।**

**व्यजानन् ................ ।**

(९२) यत्सानोः सानुमारुहद्भूर्यस्पष्ट कर्त्वम् ।
तदिन्द्रो अर्थं चेतति यूथेनं वृष्णिरेंजति ।। २ ।।

**.............. उच्चतोऽप्युच्चं सामर्थ्यं करणे तव ।**
**ततोऽपि भूरि यत् तेन चेतत्यर्थमतो भवान् ।**
**मुक्तामुक्तसमूहेन शोभते गूढशक्तिमान् ।। २३५ ।।**

उच्चादुच्चं विरिञ्चादिगतं कर्तृत्वमेव यत् ।
भूरि स्पष्टमभूत् तेन परेशस्य ततश्च सः ।
चेतत्यर्थानशेषांश्च महायूथेन चेष्टते ॥ २३६ ॥

(९३) युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा ।
अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर ॥ ३ ॥

कक्ष्याभिपूरकौ पुष्ट्या युङ्क्ष्व त्वं केशिनौ हरी ।
अथोपगम्य शृणु नो गिरः .......... ।

(९४) एहि स्तोमाँ अभिस्वराऽभि गृणीह्या रुव ।
ब्रह्म च नो वसो सचेन्द्रं यज्ञं च वर्द्धय ॥४॥

............... अभिस्वर च स्तुतिम् ॥ २३७ ॥

प्रशंसां कुरु शब्दं च पुनर्हर्षान्महत्तरम् ।
ब्रह्म यज्ञं च नोऽन्तस्थो बहि(स्थ)ष्ठश्चैव वर्धय ॥ २३८ ॥

(९५) उक्थमिन्द्राय शंस्यं वर्द्धनं पुरुनिष्षिधे ।
शक्रो यथा सुतेषु णो रारणत्सख्येषु च ॥ ५ ॥

नित्यवृद्धत्वतो विष्णोर्वर्धनं तु प्रका(शतः)शनम् ।
बहुशत्रून् निष्षिदसौ हरिर्दनुजघातकः ॥ २३९ ॥

अस्मत्सख्याय शब्दं च चकारास्मासु संस्थितः ।
यथा सुतेषु सोमेषु करोत्यृत्विक्षु (संस्थितः)च स्थितः ॥२४०॥

(९६) तमित्सखित्व ईमहे तं राये तं सुवीर्ये ।
स शक्र उत नः शकदिन्द्रो वसु दयमानः ।
॥ ६ ॥ (॥ १९ ॥)

तमेव शरणं नित्यं सखित्वायार्थमीमहे ।
शक्त्यानन्दस्वरूपत्वाच्छक्रः सर्वत्र चाशकत् ।
अस्माकं च सदा वित्तं दददेव प्रवर्तते ॥ २४१ ॥

(९७) सुविवृतं सुनिरजमिन्द्र त्वादातमिद्यशः ।
गवामप व्रजं वृधि कृणुष्व राधो अद्रिवः ॥७॥

विस्पष्टं सुष्ठ्वकाल्यं च यशस्त्वद्दत्तमेव हि ।
गूढं ज्ञानसमूहं त्वं वि(प्र)वृण्वृद्धिं च नः कुरु ॥ २४२ ॥

अद्रिरादरणीयत्वात् प्राणस्तद्वर्तकोऽद्रि(वा)वाः ।
हरिः शक्रस्तथाऽद्रीणां छेदनाद् वारणादपि ॥ २४३ ॥

(९८) नहि त्वा रोदसी उभे ऋघायमाणमिन्वतः ।
जेषः स्वर्वतीरपः सं गा अस्मभ्यं धूनुहि ॥८॥

न त्वामृघायमाणं हि वर्धमानं तु रोदसी ।
सम्प्राप्नुतः श्रीभूमी च सहिते वाऽप्रसादतः ॥ २४४ ॥

अपः प्रजाः सुखवतीरजयस्त्वद्वशत्वतः ।
ज्ञानानि सन्धुनु हि च प्रापयोच्चा अपि स्वयम् ॥ २४५ ॥

(९९) आश्रुत्कर्ण श्रुधी हवं नू चिद्दधिष्व मे गिरः ।
इन्द्रस्तोममिमं मम कृष्वा युजश्चिदन्तरम् ॥९॥

वहुश्रवणकर्णास्मदाह्वानं शृणु चाऽदरात् ।
अद्यैव च गिरो धेहि मयि स्तोमं च मत्कृतम् ॥ २४६ ॥

प्रियं योगादपि कुरु ............ ।

उच्चादुच्चं विरिञ्चादिगतं कर्तृत्वमेव यत् ।
भूरि स्पष्टमभूत् तेन परेशस्य ततश्च सः ।
चेतत्यर्थानशेषांश्च महायूथेन चेष्टते ॥ २३६ ॥

(९३) युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा ।
अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर ॥ ३ ॥

कक्ष्याभिपूरकौ पुष्ट्या युङ्क्ष्व त्वं केशिनौ हरी ।
अथोपगम्य शृणु नो गिरः .......... ।

(९४) एहि स्तोमाँ अभिस्वराऽभि गृणीह्या रुव ।
ब्रह्म च नो वसो सचेन्द्र यज्ञं च वर्द्धय ॥४॥

............... अभिस्वर च स्तुतिम् ॥ २३७ ॥

प्रशंसां कुरु शब्दं च पुनर्हर्षान्महत्तरम् ।
ब्रह्म यज्ञं च नोऽन्तस्थो वहि(स्थ)ष्ठश्चैव वर्धय ॥ २३८ ॥

(९५) उक्थमिन्द्राय शंस्यं वर्द्धनं पुरुनिष्षिधे ।
शक्रो यथा सुतेषु णो रारणत्सख्येषु च ॥ ५ ॥

नित्यवृद्धत्वतो विष्णोर्वर्धनं तु प्रका(शतः)शनम् ।
बहुशत्रून् निष्षिदसौ हरिर्दनुजघातकः ॥ २३९ ॥

अस्मत्सख्याय शब्दं च चकारास्मासु संस्थितः ।
यथा सुतेषु सोमेषु करोत्यृत्विक्षु (संस्थितः)च स्थितः ॥२४०॥

(९६) तमित्सखित्व ईमहे तं राये तं सुवीर्ये ।
स शक्र उत नः शकदिन्द्रो वसु दयमानः ।
॥ ६ ॥ (॥ १९ ॥)

तमेव शरणं नित्यं सखित्वायर्थमीमहे ।
शक्त्यानन्दस्वरूपत्वाच्छक्रः सर्वत्र चाशकत् ।
अस्माकं च सदा वित्तं ददेव प्रवर्तते ॥ २४१ ॥

(९७) सुविवृतं सुनिरजमिन्द्र त्वादातमिद्यशः ।
गवामप व्रजं वृधि कृणुष्व राधो अद्रिवः ॥७॥

विस्पष्टं सुष्ठ्वकाल्यं च यशस्त्वद्दत्तमेव हि ।
गूढं ज्ञानसमूहं त्वं वि(प्र)वृण्वृद्धिं च नः कुरु ॥ २४२ ॥

अद्रिरादरणीयत्वात् प्राणस्तद्वर्तकोऽद्रि(वा)वाः ।
हरिः शक्रस्तथाऽद्रीणां छेदनाद् वारणादपि ॥ २४३ ॥

(९८) नहि त्वा रोदसी उभे ऋघायमाणमिन्वतः ।
जेषः स्वर्वतीरपः सं गा अस्मभ्यं धूनुहि ॥८॥

न त्वामृघायमाणं हि वर्धमानं तु रोदसी ।
सम्प्राप्नुतः श्रीभूमी च सहिते वाऽप्रसादतः ॥ २४४ ॥

अपः प्रजाः सुखवतीरजयस्त्वद्वशत्वतः ।
ज्ञानानि सन्धुनु हि च प्रापयोच्चा अपि स्वयम् ॥ २४५ ॥

(९९) आश्रुत्कर्ण श्रुधी हवं नू चिद्दधिष्व मे गिरः ।
इन्द्रस्तोममिमं मम कृष्वा युजश्चिदन्तरम् ॥९॥

बहुश्रवणकर्णास्मदाह्वानं शृणु चाऽदरात् ।
अद्यैव च गिरो धेहि मयि स्तोमं च मत्कृतम् ॥ २४६ ॥

प्रियं योगादपि कुरु ............ ।

(१००) विद्मा हि त्वा वृषन्तमं वाजेषु हवनश्रुतम् ।
वृषन्तमस्य हूमह ऊतिं सहस्रसातमाम् ॥१०॥

**............. विद्म त्वां शक्तिमत्तमम् ।**
**श्रोतारं युत्सु चाऽह्वानमाह्वयामस्तवावनम् ॥ २४७ ॥**

**बहुलाभोत्तममिति स्थानान्तरगते ऋचौ ।**
**दृष्ट्वेन्द्रं यज्ञगं या(ता)भ्यां मधुच्छन्दास्तमस्तुवत् ।**
**आतून इति तेनैव न विरुद्धा शतर्चिता ॥ २४८ ॥**

(१०१) आ तू न इन्द्र कौशिक मन्दसानः सुतं पिब ।
नव्यमायुः प्र सू तिर कृधी सहस्रसामृषिम् ।
॥ ११ ॥

**मात्रा कुशैर्गृहीतत्वाज्जन्मन्यासीत् स कौशिकः ।**
**गाथित्वाद् वा हिरण्याण्डकोशस्थत्वाद् हरिस्तथा ॥ २४९ ॥**

**मन्दसानो नित्यसुखी स्तुत्यमायुश्च नस्तिर ।**
**ऋषिं सहस्रलाभं मां कुरु च ............ ।**

(१०२) परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः ।
वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयः ।
॥ १२ ॥ ॥ २० ॥

**.................. त्वा इमा गिरः ॥ २५० ॥**

**सर्वदा परितः सन्तु मदीयाः सर्वलाभिनम् ।**
**वृद्धिरूपा गिरो जुष्टाः सेवारूपाश्च सन्तु नः ॥ २५१ ॥**

## सूक्तम् - ११

**अष्टावृचः पुनस्तेन दृष्टा अन्यत्रगास्तपः ।**
**कुर्वता ............................... ।**

(इन्द्रम् अष्टौ, ऋषिः मधुच्छन्दा वैश्वामित्रः । छन्दः अनुष्टुप् ।
देवता इन्द्रः ।)

(१०३)इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः ।
रथीतमं रथीनां वाजानां सत्पतिं पतिम् ।।१।।

**......... सम्यगुद्रिक्तगुणव्यक्तिस्तथा(विधः)भिधः ।। २५२ ।।**

(१०४)सख्ये त इन्द्र वाजिनो मा भेम शवसस्पते ।
त्वामभि प्रणोनुमो जेतारमपराजितम् ।। २ ।।

(१०५)पूर्वीरिन्द्रस्य रातयो न वि दस्यन्त्यूतयः ।
यदी वाजस्य गोमतः स्तोतृभ्यो मंहते मघम्
।। ३ ।।

**प्रथमानि महत्त्वेन ते दानान्यवनानि च ।**
**न भिद्यन्ते न नश्यन्ति गोमदन्नं यशस्तथा ।। २५३ ।।**

**यदि मंहते ददातीशः .................. ।**

(१०६)पुरां भिन्दुर्युवा कविरमितौजा अजायत ।
इन्द्रो विश्वस्य कर्मणो धर्ता वज्री पुरुष्टुतः ।।४।।

(१०७)त्वं वलस्य गोमतोऽपावरद्रिवो बिलम् ।
त्वां देवा अबिभ्युषस्तुज्यमानास आविषुः ।।५।।

.................... वलस्तिर्यग्गतिर्धियः ।।

वाचामन्यार्थवुद्धेस्तु बिलं मूलं तमो हि यत् ।
तदपावृतवांस्त्वं च प्रदर्श्य विनिवार्य च ।। २५४ ।।

त्वां हि देवा भयापेताः प्रेर्यमाणास्त्वयैव च ।
छाद्यमानं गिरा दैत्यैररक्षन्निव सद्गिरा ।। २५५ ।।

इन्द्रस्य गोसवार्थे च समुत्सृष्टा जगत्यपि ।
चर्तुं गावो हृता दैत्यैः सरमारक्षिताः पुरा ।
तस्याः स्व(तत्व)सृत्वमुक्त्वैव तयोच्छिष्टं च गोपयः ।। २५६ ।।

तदर्थं पणयो नाम ते दैत्या बलपूर्वकाः ।
इन्द्रेण निहताः पश्चाज्ज्ञात्वा च सरमाकृतम् ।। २५७ ।।

ताडयित्वा पदा वक्त्रात् सृते(स्रुते) पयसि तां भयात् ।
शरणागतां प्रेषयित्वा दू(दौ)त्येन पणिनां पुनः ।। २५८ ।।

भित्त्वा गिरिव्रजं तं च गावो यत्र प्रतिष्ठिताः ।
निस्सारिताः पुनस्ताश्च गोसवेनेष्टमेव च ।
तदा देवा अभीत्यैव परितो जुगुपुः पतिम् ।। २५९ ।।

(१०८)तवाहं शूर रातिभिः प्रत्यायं सिन्धुमावदन् ।
उपातिष्ठन्त गिर्वणो विदुष्टे तस्य कारवः ।।६।।

तव दानैरहं सिन्धुं नदीं प्रत्यागमं पुनः ।
त्वामावदन् स्तुतिपदैर्यज्ञदीक्षार्थमुद्य(तः)ताः ।। २६० ।।

उपातिष्ठन्त कर्तारो विदुस्त्वां ये गिरोदित ।।

(१०९)मायाभिरिन्द्र मायिनं त्वं शुष्णमवातिरः ।
विदुष्टे तस्य मेधिरास्तेषां श्रवांस्युत्तिर ।। ७ ।।

**शक्तिभिः शक्तिमन्तं त्वं(त्वां) शोषकं वृत्रमातिरः ।। २६१ ।।**

**तमो वा त्वां विदुर्मेधारतास्तेषां श्रवांसि च ।**
**विद्या उच्चैस्तरां देहि ............ ।**

(११०)इन्द्रमीशानमोजसाभि स्तोमा अनूषत ।
सहस्रं यस्य रातय उत वा सन्ति भूयसीः ।
।। ८ ।। ।। २१ ।।

**............. स्तुवन्ति त्वां(त्वा) सहौजसा ।। २६२ ।।**

---

**ऋक्संहितायाः स्वाध्यायात् प्रवन्धाद् व्यासनिर्मितात् ।**
**ब्राह्मणेभ्यस्तथा मानात् प्रोक्ताः स्युर्मुनयोऽत्र ये ।। २६३ ।।**

**श्रुत्यभावादलिङ्गाच्च मुनिर्नान्यः प्रतीयते ।**
**श्रुतिलिङ्गान्यता यावत् तावत् पूर्वप्रमा भवेत् ।। २६४ ।।**

**शतर्भिरुत्तराभिस्तु वह्निनामानमच्युतम् ।**
**अस्तौन्मेधातिथिस्ताभ्य उत्तरा अपि तद्दृशः ।। २६५ ।।**

**अन्यत्रगास्तपस्यन् स ता ददर्श कदाचन ।**
**कालस्थानान्तरत्वं चेत् सङ्ख्यातोऽभ्यधिकं भवेत् ।। २६६ ।।**

**अन्यस्थानगता अन्यदृष्टा अप्यत्रगा यदि ।**
**सङ्ख्यान्तर्भावमेष्यन्ति ता इतोपगता यतः ॥ २६७ ॥**

## सूक्तम् - १२

(अग्निं द्वादश, ऋषिः मेधातिथिः काण्वः । छन्दः गायत्री ।
देवता अग्निः ।)

(१११) अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् ।
अस्य यज्ञस्य सुक्रतुम् ॥ १ ॥

**यज्ञभागार्थमत्रस्थो देवैः (देव)सम्प्रेषितो यतः ।**
**दूतोऽग्निर्वासुदेवश्च तत्तत्प्रार्थितकृद् यतः । (२६७)**
**विश्ववेदाः स सर्वज्ञो यज्ञज्ञो यज्ञसुक्रतुः ॥ २६८ ॥**

(११२) अग्निमग्निं हवीमभिः सदा हवन्त विश्पतिम् ।
हव्यवाहं पुरुप्रियम् ॥ २ ॥

**अग्निनामा जामदग्न्यो भगवान् सम्प्रकीर्तितः ।**
**तस्य रूपबहुत्वेन वीप्सा चैवोपपद्यते ।**
**हवीमभिर् ऋगाह्वानैराह्वयन्तः प्रजापतिम् ॥ २६९ ॥**

(११३) अग्ने देवाँ इहावह जज्ञानो वृक्तबर्हिषे ।
असि होता न ईड्यः ॥ ३ ॥

**जज्ञानो व्यज्यमानस्तु वृक्तं प्रस्तृतमुच्यते ।**
**यजमानो वृक्तबर्हिः .......... ।**

(११४) ताँ उशतो वि बोधय यदग्ने यासि दूत्यम् ।
देवैरा सत्सि बर्हिषि ॥ ४ ॥

**........... बोधयेशेच्छतः सुरान् ॥ २७० ॥**

**देवैः सहोपविशसि ........... ।**

(११५) घृताहवन दीदिवः प्रति ष्म रिषतो दह ।
अग्ने त्वं रक्षस्विनः ॥ ५ ॥

**........... यस्य ते सुघृतं हविः ।**
**रिषतो नाशकान् रक्षोजनान् प्रतिदहैव च ॥ २७१ ॥**

(११६) अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा ।
हव्यवाड् जुह्वास्यः ॥ ६ ॥ (॥ २२ ॥)

**यस्याऽस्ये हूयते सोऽग्निः परेशेन समिद्ध्यते ।**
**अथवाऽऽहवनीयोऽग्निर्मथितेन समिद्ध्यते ॥ २७२ ॥**

(११७) कविमग्निमुपस्तुहि सत्यधर्माणमध्वरे ।
देवममीवचातनम् ॥ ७ ॥

**सत्यधर्मा सद्गुणभृद् दुःखघ्नोऽमीवचातनः ।**
**चातनं कालनं वा स्यात् .......... ।**

(११८) यस्त्वामग्ने हविष्पतिर्दूतं देव सपर्यति ।
तस्य स्म प्राविता भव ॥ ८ ॥

(११९) यो अग्निं देववीतये हविष्माँ आविवासति ।
तस्मै पावक मृळय ॥ ९ ॥

**.............. देववीतिस्तु तद्गतिः ॥ २७३ ॥**

**आवासयति यस्त्वां च तं त्वं मृळय सर्वदा ।**

(१२०)स नः पावक दीदिवोऽग्ने देवाँ इहा वह ।
उप यज्ञं हविश्च नः ।। १० ।।

**त्वत्पूजा (त्वं पूजा)विषये देवानावहेन्द्रियमानिनः ।। २७४ ।।**

(१२१)स नः स्तवान आ भर गायत्रेण नवीयसा ।
रयिं वीरवतीमिषम् ।। ११ ।।

**गायत्त्रेण स्तूयमानो दृश्यमानेन नो रयिम् ।**
**पुत्रयुक्तामिषं चैव वीर्ययुक्तामथाऽवह ।। २७५ ।।**

(१२२)अग्ने शुक्रेण शोचिषा विश्वाभिर्देवहूतिभिः ।
इमं स्तोमं जुषस्व नः ।। १२ ।। (।।२३।।)

**ज्वलता तेजसा विश्वदेवाह्वानैर्वृणु स्तुतिम् ।।**

## सूक्तम् - १३

(सुसमिद्धो द्वादश, ऋषिः मेधातिथिः काण्वः । छन्दः गायत्री । देवता १ इध्मः समिद्धः वा अग्निः, २ तनूनपात्, ३ नराशंसः, ४ इळः, ५ बर्हिः, ६ देवीर्द्वारः, ७ नक्ता उषा च दैव्यौ, ८ देव्यौ होतारौ प्रचेतसौ, ९ तिस्रो देव्यः सरस्वतीळाभारत्यः, १० त्वष्टा, ११ वनस्पतिः, १२ स्वाहाकृतयः ।)

(१२३)सुसमिद्धो न आ वह देवाँ अग्ने हविष्मते ।
होतः पावक यक्षि च ।। १ ।।

**अस्मद्धविष्मते देवानाहूय यज चाऽदरात् ॥ २७६ ॥**

(१२४) मधुमन्तं तनूनपाद्यज्ञं देवेषु नः कवे ।
अद्या कृणुहि वीतये ॥ २ ॥

**तनूभ्यो वाक् ततो देवो व्यक्त(ज्ञेय)स्तेन तनूनपात् ॥**

(१२५) नराशंसमिह प्रियमस्मिन्यज्ञ उपह्वये ।
मधुजिह्वं हविष्कृतम् ॥ ३ ॥

**नरैः स्तुत्यो नराशंसो वह्नेरन्याऽथवा तनूः ॥ २७७ ॥**

(१२६) अग्ने सुखतमे रथे देवाँ ईळिता आ वह ।
असि होता मनुर्हितः ॥ ४ ॥

**मनूनां च हितत्वेन मनुर्हित इतीरितः ।**

(१२७) स्तृणीत बर्हिरानुषग्घृतपृष्ठं मनीषिणः ।
यत्रामृतस्य चक्षणम् ॥ ५ ॥

**आनुषक् सर्वतो देवस्थानं बर्हिः स्तृणीत च ॥ २७८ ॥**

**शुद्धस्य विष्णोर्यत् स्थानं घृतपृष्ठं हि तन्मनः ।**
**यत्र स्याद् दर्शनं विष्णोर्नित्यामरणधर्मिणः ॥ २७९ ॥**

(१२८) विश्रयन्तामृतावृधो द्वारो देवीरसश्चतः ।
अद्या नूनं च यष्टवे ॥ ६ ॥ (॥ २४ ॥)

**ऋतरूपेण हरिणा समृद्धा या ऋतावृधः ।**
**द्वारो देव्यः श्रियो दास्यः श्रयन्तामिह नो मखे ॥ २८० ॥**

मानसे बाह्ययज्ञे वा ह्यसङ्गत्वादसश्चतः ।
अद्याहनि तथा नूनमद्यैव यजनार्थतः ॥ २८१ ॥

द्वारभूतः स भगवानपि साक्षान्मुमुक्षतः ।
स्त्रीरूपश्च सः ............ ।

(१२९)नक्तोषासा सुपेशसाऽस्मिन्यज्ञ उप ह्वये ।
इदं नो बर्हिरासदे ॥ ७ ॥

...... नक्ता(नक्तः) स्यान्नाक्तो यस्मात् स सर्वतः ।
उषाः प्रकाशरूपत्वात् सुभद्रे ते उपह्वये ॥ २८२ ॥

अस्मिन् बर्हिषि संस्थित्यै ........ ।

(१३०)ता सुजिह्वा उप ह्वये होतारा दैव्या कवी ।
यज्ञं नो यक्षतामिमम् ॥ ८ ॥

................ होतारौ देवगावपि ।
मथ्यमानोऽपरश्चैव वह्नी तद्रोऽथवा हरिः ॥ २८३ ॥

आत्मान्तरात्मरूपेण द्विरूपो वा व्यवस्थितः ।
देवेषु यजतां यज्ञमस्मदीयमिमं सदा ॥ २८४ ॥

(१३१)इळा सरस्वती मही तिस्रो देवीर्मयोभुवः ।
बर्हिः सीदन्त्वस्रिधः ॥ ९ ॥

इळेड्यत्वाद्धरिः श्रीर्वा भूरूपा (चैव)सैव चापरा ।
मही तु भारती नाम वायव्या ब्रह्मणोऽपरा ।
तद्गतस्तादृशै रूपैः पृथक्स्थो वा हरिस्तथा ॥ २८५ ॥

(१३२)इह त्वष्टारमग्रियं विश्वरूपमुप ह्वये ।
अस्माकमस्तु केवलः ।। १० ।।

**त्वष्टा तेजस्त्वतो विष्णुर्बलत्वाद् वा समीरितः ।**
**विश्वरूपकरत्वाच्च विश्वरूपोऽथ पूर्तितः ।। २८६ ।।**

(१३३)अव सृजा वनस्पते देव देवेभ्यो हविः ।
प्र दातुरस्तु चेतनम् ।। ११ ।।

**वननीयपतित्वेन वनस्पतिरितीरितः ।**
**ज्ञानं तु चेतनम् ............ ।**

(१३४)स्वाहा यज्ञं कृणोतनेन्द्राय यज्वनो गृहे ।
तत्र देवाँ उप ह्वये ।। १२ ।। ( ।। २५ ।।)

**........... स्वाहा स्वभाग(गमनं स्मृतम्)गतिमान् स्मृतः ।**
**।। २८७ ।।**

**अव्ययत्वाद(दोषश्च)मोषश्च ............... ।**

## सूक्तम् - १४

(ऐभिरग्ने द्वादश, ऋषिः मेधातिथिः काण्वः । छन्दः गायत्री । देवता
विश्वे देवाः । (विश्वैर्देवैः सहितोऽग्निः) ३
इन्द्रवायुबृहस्पतिमित्राग्निपूषभगादित्यमरुद्गणाः, १०
विश्वेदेवाग्नीन्द्रवायुमित्रधामानि, ११ अग्निः ।)

(१३५)ऐभिरग्ने दुवो गिरो विश्वेभिः सोमपीतये ।
देवेभिर्याहि यक्षि च ।। १ ।।

............. **कामदोहाद् दुवः स्मृताः ।।**

(१३६)आ त्वा कण्वा अहूषत गृणन्ति विप्र ते धियः।
देवेभिरग्न आ गहि ।। २ ।।

(१३७)इन्द्रवायू बृहस्पतिं मित्राग्निं पूषणं भगम् ।
आदित्यान्मारुतं गणम् ।। ३ ।।

**बृहन् पतिर्बृहत्या वा वाच एव बृहस्पतिः ।। २८८ ।।**

**मित्रेति मित्रावरुणौ पूषा नाम स पोषणात् ।**
**पूर्णत्वाद् वा भगः प्रोक्तः पूर्णैश्वर्यादिकत्वतः ।। २८९ ।।**

**आदिस्थत्वात् स आदित्य आददानः प्रयाति वा ।**
**वहुरूपत्वतश्चैव मानोक्तत्वा(त् स)त्तु मारुतः ।। २९० ।।**

(१३८)प्र वो भ्रियन्त इन्दवो मत्सरा मादयिष्णवः ।
द्रप्सा मध्वश्चमूषदः ।। ४ ।।

**मत्सरा मदकारित्वात् ताच्छील्यादुत्तरं पदम् ।**
**द्रप्सा(स्तु)स्ते द्रवणाच्चैव चमसस्थाश्चमूषदः ।**
**शिरश्च चमसं प्रोक्तमिष्टदानात् तथेन्दवः ॥ २९१ ॥**

(१३९)ईळते त्वामवस्यवः कण्वासो वृक्तबर्हिषः ।
हविष्मन्तो अरंकृतः ॥ ५ ॥

**अवस्युर्यजमानः स्यादवनार्थप्रवृत्तितः ।**
**आत्मस्थं वा बहुवचो बहवो मुनयोऽत्र वा ॥ २९२ ॥**

**उत्तराणां वचस्त्वेन स्वयं वदति चेश्वरः ।**
**अरङ्कृतोऽतिकर्तारस्त्वलङ्कर्तार एव वा ॥ २९३ ॥**

(१४०)घृतपृष्ठा मनोयुजो ये त्वा वहन्ति वह्नयः ।
आ देवान्त्सोमपीतये ॥ ६ ॥ (॥ २६ ॥)

**स्निग्धपृष्ठाः समारूढा हरिणा वा विदोषिणा ।**
**मनोमात्रेण योज्याश्च त्वां देवां(श्च वहन्ति)श्चाऽवहन्ति ये ।**
**॥ २९४ ॥**

(१४१)तान् यजत्राँ ऋतावृधोऽग्ने पत्नीवतस्कृधि ।
मध्वः सुजिह्व पायय ॥ ७ ॥

**तैर्देवान् यजतः स्तोतृन् ज्ञातेन(ज्ञानेन) व्रह्म(णेधि)णैधितान् ।**
**पत्नीभिर्योजयाऽगन्तुं सह मध्वश्च पायय ॥ २९५ ॥**

(१४२)ये यजत्रा य ईड्यास्ते ते पिबन्तु जिह्वया ।
मधोरग्ने वषट्कृति ॥ ८ ॥

ते षष्ठ्यतोऽनुदात्तः स्यादुदात्तो बहुवाचकः ।
आवृत्तस्तु भवत्यर्थस्ते(भवेदर्थस्ते) पिबन्तु वषट्कृतौ ॥२९६॥

(१४३) आर्की सूर्यस्य रोचनाद्विश्वान्देवाँ उषर्बुधः ।
विप्रो होतेह वक्षति ॥ ९ ॥

सूर्यस्य रोचनात् स्वर्गादावक्षत्यग्निरिन्दुपान् ।
उषः प्रकाशनाद् ब्रह्म तद्विदस्त उषर्बुधः ॥

(१४४) विश्वेभिः सोम्यं मध्वग्न इन्द्रेण वायुना ।
पिबा मित्रस्य धामभिः ॥ १० ॥

देवास्ते विष्णुधामत्वान्मित्रधामान ईरिताः ॥ २९७ ॥

(१४५) त्वं होता मनुर्हितोऽग्ने यज्ञेषु सीदसि ।
सेमं नो अध्वरं यज ॥ ११ ॥

(१४६) युक्ष्वा ह्यरुषी रथे हरितो देव रोहितः ।
ताभिर्देवाँ इहा वह ॥ १२ ॥ (॥ २७ ॥)

अग्निवाहा अश्वतर्यो दूर्वापद्माग्निसप्रभाः ।
लोहिताः क्वचिदश्वाश्च रोहिन्मृग्योऽपि कुत्रचित् ॥ २९८ ॥

## सूक्तम् - १८

(इन्द्रसोमं द्वादश, ऋषिः मेधातिथिः काण्वः । छन्दः गायत्री । देवता १ इन्द्रः, २ मरुतः, ३ त्वष्टा, ४ अग्निः, ५ इन्द्रः, ६ मित्रावरुणौ, ७-१० द्रविणोदाः, ११ अश्विनौ, १२ अग्निः ।)

(१४७) इन्द्र सोमं पिब ऋतुनाऽऽत्वा विशन्त्विन्दवः ।
मत्सरासस्तदोकसः ।। १ ।।

(१४८) मरुतः पिबत ऋतुना पोत्राद्यज्ञं पुनीतन ।
यूयं हि ष्ठा सुदानवः ।। २ ।।

(१४९) अभि यज्ञं गृणीहि नो ग्नावो नेष्टः पिब ऋतुना ।
त्वं हि रत्नधा असि ।। ३ ।।

**ऋतुर्मार्गस्तु नेतृत्वान्नेष्टाऽग्निर्हरिरेव वा ।**
**ईष्टे न कश्चि(त्तस्येति)दस्येति ग्ना नद्यश्च समीरिताः ।**
**गतिशीलत्वतो ग्नास्ता ज्ञातृनेतृत्वतो हरिः ।। २९९ ।।**

**गमनान्नयनाद् वा ग्ना ऋतुपात्रमृतुस्तथा ।**
**सोमास्तदोकसः प्रोक्ता ऋतुपात्रस्थिता यतः ।। ३०० ।।**

**पत्नीनेतृत्वतो नेष्टा नेष्टर्त्विक् सम्प्र(षट्प्र)कीर्तितः ।**
**ज्ञापयन्ति स्वलिङ्गानीत्यृतवः सम्प्रकीर्तिताः ।। ३०१ ।।**

**पा(प)वनाच्चैव पोतारो मरुतः पोतृदेवताः ।**
**अग्निस्तु देवता नेष्टुस्त्वष्टेन्द्रो विष्णुरेव (च)वा ।। ३०२ ।।**

(१५०) अग्ने देवाँ इहा वह सादया योनिषु त्रिषु ।
परि भूष पिब ऋतुना ।। ४ ।।

वेद्युत्तरा सदश्चैव प्राग्वंशो योनयः स्मृताः ।
भूष भूषय नो यज्ञम् .......... ।

(१५१) ब्राह्मणादिन्द्र राधसः पिबा सोममृतूँरनु ।
तवेद्धि सख्यमस्तृतम् ।। ५ ।।

................ ब्राह्मणाच्छंसिपात्रतः ।
पिबेन्द्र नो राधसोऽर्थे त्वमनु त्वर्तुदेवताः ।। ३०३ ।।

स्तृतं छिन्न(भिन्न)मिति प्रोक्तम् ......... ।

(१५२) युवं दक्षं धृतव्रत मित्रावरुण दूळभम् ।
ऋतुना यज्ञमाशाथे ।। ६ ।। (।।२८।।)

........ (अस्तम्भ्यं)अस्तभ्यं दुर्दभं स्मृतम् ।
दक्षाख्यं यजमानं चा(वा)पीशाथे यज्ञमेव च ।
सोमं पीत्वर्तुपात्रेण सह वा तेन चर्तुना ।। ३०४ ।।

(१५३) द्रविणोदा द्रविणसो ग्रावहस्तासो अध्वरे ।
यज्ञेषु देवमीळते ।। ७ ।।

होता च होतृकाश्चैव द्रविणोदा द्रवीणसः ।
अग्निश्चैवाग्नयस्तेषां देवता विष्णुमीळते ।। ३०५ ।।

(१५४) द्रविणोदा ददातु नो वसूनि यानि शृण्विरे ।
देवेषु ता वनामहे ।। ८ ।।

(१५५) द्रविणोदाः पिपीषति जुहोत प्र च तिष्ठत ।
नेष्ट्रादृतुभिरिष्यत ।। ९ ।।

**पातुमिच्छति सोमं स सोमस्तस्मै प्रतिष्ठिताः ।**
**ऋतुपात्रैर्देवताभिः सहैवैनमभी(च्छत)प्सत ॥ ३०६ ॥**

(१५६) यत्त्वा तुरीयमृतुभिर्द्रविणोदो यजामहे ।
अध स्मानो ददिर्भव ॥ १० ॥

**चतुर्थवारमपि यत्(यं) त्वां यजामो ददिर्भव ॥**

(१५७) अश्विना पिबतं मधु दीद्यग्नी शुचिव्रता ।
ऋतुना यज्ञवाहसा ॥ ११ ॥

**दीद्यग्नी इति दीप्ताग्नी ......... ।**

(१५८) गार्हपत्येन सन्त्य ऋतुना यज्ञनीरसि ।
देवान् देवयते यज ॥

**........... संत्योऽग्निः सन्ततत्वतः ॥ ३०७ ॥**

**विष्णुर्वर्त्वधिपो विष्णुः केशवादिस्वरूप(कः)तः ।**
**"ग्रहान्त्सोमस्य मिमते" इति तस्यैव कथ्यते ।**
**गार्हपत्येन पात्रेण यजमानस्तु देवयन् ॥ ३०८ ॥**

**देवान् यातीति ............ ।**

## सूक्तम् - १६

(आत्वा नव, ऋषिः मेधातिथिः काण्वः । छन्दः गायत्री ।
देवता इन्द्रः ।)

(१५९) आ त्वा वहन्तु हरयो वृषणं सोमपीतये ।
इन्द्रं त्वा सूरचक्षसः ।। १ ।।

........ सुष्टूरीकुर्वन्ति विषयान् यतः ।
चक्षूंषीन्द्रस्य हरयस्तेनोक्ताः सूरचक्षसः ।। ३०९ ।।

(१६०) इमा धाना घृतस्नुवो हरी इहोप वक्षतः ।
इन्द्रं सुखतमे रथे ।। २ ।।

भक्तिस्नुतानि धानानि बुद्धेर्धाना इति ह्यपि ।।

(१६१) इन्द्रं प्रातर्हवामह इन्द्रं प्रयत्यध्वरे ।
इन्द्रं सोमस्य पीतये ।। ३ ।।

प्रातरित्यादिवाक्येन सवनत्रयमीरितम् ।
समाप्तत्वात् सोमपीतिस्तृतीयं सवनं (मतम्)स्मृतम् ।। ३१० ।।

सदा ................. ।

(१६२) उप नः सुतमा गहि हरिभिरिन्द्र केशिभिः ।
सुते हि त्वा हवामहे ।। ४ ।।

(१६३) सेमं नः स्तोममा गह्युपेदं सवनं सुतम् ।
गौरो न तृषितः पिब ।। ५ ।। ( ।। ३० ।।)

(१६४)इमे सोमास इन्दवः सुतासो अधि बर्हिषि ।
तॉं इन्द्र सहसे पिब ।। ६ ।।

...... विष्णुविवक्षायां यजमानबलं सहः ।
तदिष्टस्यैव दानाय तद्गुणव्यक्तिरेव वा ।। ३११ ।।

'पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते' ।
'हेयोपादेयरहितगुणपूर्णो हरिः सदा ।
अनुग्रहव्यक्तिरेव तद्गुणानां(च नान्यथा) न चान्यथा' ।। ३१२ ।।

इत्यादिवेदवाक्येभ्यो नैव वृद्धिर्हरेः क्वचित् ।

(१६५)अयं ते स्तोमो अग्रियो हृदिस्पृगस्तु शंतमः ।
अथा सोमं सुतं पिब ।। ७ ।।

(१६६)विश्वमित्सवनं सुतमिन्द्रो मदाय गच्छति ।
वृत्रहा सोमपीतये ।। ८ ।।

(१६७)सेमं नः काममा पृण गोभिरश्वैः शतक्रतो ।
स्तवाम त्वा स्वाध्यः ।। ९ ।। (३१ ।।)

पृण सम्पूरय स्वाध्यः सुधीतय इतीरिताः(इति स्मृताः) ।।३१३।।

## सूक्तम् - १७

(इन्द्रावरुणयोर्नव, ऋषिः मेधातिथिः काण्वः । छन्दः गायत्री ।
१, ३, ६-९ गायत्री, ४-५ पादनिचृत् । देवता इन्द्रावरुणौ ।)

(१६८) इन्द्रावरुणयोरहं सम्राजोरव आ वृणे ।
ता नो मृळात ईदृशे ।। १ ।।

**अविकारेण संस्थानमीदृक्त्वं (सम्प्रकीर्तितम्)नाम कीर्तितम् ।।**

(१६९) गन्तारा हि स्थोऽवसे हवं विप्रस्य मावतः ।
धर्तारा चर्षणीनाम् ।। २ ।।

**मावतो ज्ञानयुक्तस्य प्रजाश्चर्षणयः स्मृताः ।।**

(१७०) अनुकामं तर्पयेथामिन्द्रावरुण राय आ ।
ता वां नेदिष्ठमीमहे ।। ३ ।।

**नेदिष्ठत्वं समीपत्वं क्षिप्रं शरणमीमहे ।। ३१४ ।।**

(१७१) युवाकु हि शचीनां युवाकु सुमतीनाम् ।
भूयाम वाजदाव्नाम् ।। ४ ।।

**युवयोरेव वाक्यानां सुमतीनां च सर्वशः ।**
**भवेमान्नप्रदातृणां सर्वदा विषया वयम् ।। ३१५ ।।**

(१७२) इन्द्रः सहस्रदाव्नां वरुणः शंस्यानाम् ।
क्रतुर्भवत्युक्थ्यः ।। ५ ।। (।। ३२ ।।)

**क्रतुः प्रधान उक्थ्यश्च शस्त्रैः स्तुत्यो विशेषतः ।।**

(१७३)तयोरिदवसा वयं सनेम नि च धीमहि ।
स्यादुत प्रेचनम् ।। ६ ।।

**रक्षणेन तयोर्वित्तं ज्ञानं वा प्राप्नुमः सदा ।**
**निधीमहि च दानं च स्यादेवास्माकमर्थिने ।। ३१६ ।।**

(१७४)इन्द्रावरुण वामहं हुवे चित्राय राधसे ।
अस्मान्त्सु जिग्युषस्कृतम् ।। ७ ।।

**ह्रस्वता संहितायां तु देवतैक्यप्रदर्शिनी ।**
**स्वरूपैक्यं हरौ तत्तु मत्यैक्यं भिन्नयोरपि ।। ३१७ ।।**

(१७५)इन्द्रावरुण नू नु वां सिषासन्तीषु धीष्वा ।
अस्मभ्यं शर्म यच्छतम् ।। ८ ।।

**अद्य वां नु नुमो लोपः स्वातन्त्र्यार्थे हि सूत्रतः ।**
**साधयन्तीषु धीष्वेव शर्मास्मभ्यं प्रयच्छतम् ।।**

(१७६)प्र वामश्नोतु सुष्टुतिरिन्द्रावरुण यां हुवे ।
यामृधाथे सधस्तुतिम् ।। ९ ।। (।। ३ ।।)

**यथास्थितस्तुतिं यां च वर्धयेथे सदैव मे ।। ३१८ ।।**

## सूक्तम् - १८

(सोमानं नव, ऋषिः मेधातिथिः काण्वः । गायत्री छन्दः । देवता १-३ बृह्मणस्पतिः, ४ इन्द्रो बृह्मणस्पतिः सोमश्च, ५ ब्रह्मणस्मतिः सोम इन्द्रो दक्षिणा च, ६-८ सदसस्पतिः, ९ सदसस्पतिः नराशंसो वा ।)

(१७७) सोमानं स्वरणं कृणुहि ब्रह्मणस्पते ।
कक्षीवन्तं य औशिजः ।। १ ।।

**सौम्यं शब्दं कृणु त्वं नो विष्णो वायो सुवाक्पते ।**
**कक्षीवन्तं प्रति हि यो दत्तो यः स उशिक्सुतः ।**
**विवक्षितो मुनिः सोऽपि तस्मादर्थोऽपि मां प्रति ।। ३१९ ।।**

(१७८) यो रेवान् यो अमीवहा वसुवित्पुष्टिवर्धनः ।
स नः सिषक्तु यस्तुरः ।। २ ।।

**वित्तवान् रोगहा ज्ञानवेत्ताऽस्माभिः सयुग् भवेत् ।**
**तुरो वेगाद् हरिर्वायुः ............ ।**

(१७९) मा नः शंसो अररुषो धूर्तिः प्रणङ्मर्त्यस्य ।
रक्षा णो ब्रह्मणस्पते ।। ३ ।।

**............. अररुट् चातिरोष(वान्)णात् ।**
**तस्य धूर्ति(र्वचो)वचो नास्मान् पूरयेद् रक्ष नो हरे ।। ३२० ।।**

(१८०) स घा वीरो न रिष्यति यमिन्द्रो ब्रह्मणस्पतिः ।
सोमो हिनोति मर्त्यम् ।। ४ ।।

**घेति हावधृतिश्चैव सोमः सौम्यत्वतो हरिः ।**
**उना मया च युक्तत्वादूमैर्युक्तत्वतोऽ(थवा)पि वा ।। ३२१ ।।**

**अमः स इति वा ............. ।**

(१८१)त्वं तं ब्रह्मणस्पते सोम इन्द्रश्च मर्त्यम् ।
दक्षिणा पात्वंहसः ।। ५ ।। (।। ३४ ।।)

**.......... साक्षाच्छ्रीर्दक्षे(णेति)नेति तु दक्षिणा ।**
**दक्षिणा चतुरत्वाद् वा स्वयमेव जनार्दनः ।। ३२२ ।।**

(१८२)सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् ।
सनिं मेधामयासिषम् ।। ६ ।।

**सदसस्पतिर्हरिः साक्षाद् वायुरग्निरथापि वा ।**
**लाभज्ञानस्वरूपोऽसौ शरणं तमयासिषम् ।। ३२३ ।।**

(१८३)यस्मादृते नसिध्यति यज्ञो विपश्चितश्चन ।
स धीनां योगमिन्वति ।। ७ ।।

**धीप्रेरकः स ध्येयश्च धीभिर्योगं तदाप्नुते ।।**

(१८४)आदृध्नोति हविष्कृतिं प्राञ्चं कृणोत्यध्वरम् ।
होत्रा देवेषु गच्छति ।। ८ ।।

**तस्माद्धविष्कृतः स्वृद्धिं करोति यजतो विभुः ।**
**करोति चोत्तमं यज्ञं देवाह्वानानि गच्छति ।। ३२४ ।।**

(१८५)नराशंसं सुधृष्टममपश्यं सप्रथस्तमम् ।
दिवो न सद्ममखसम् ।। ९ ।। (।। ३५ ।।)

**नरैः स्तुत्यो नराशंसो हरिर्धृष्ट(तमः स्वतः)तमश्च सः ।**
**गुणानां प्रथिमाधिक्यात् सप्रथस्तम ईरितः ।**
**यस्य स्वर्गादपि गृहं मखः प्रियमिवेयते ॥ ३२५ ॥**

## सूक्तम् - १९

(प्रतित्यं नव, ऋषिः मेधातिथिः काण्वः । छन्दः गायत्री । देवता अग्निः मरुतः च ।)

(१८६)प्रति त्यं चारुमध्वरं गोपीथाय प्र हूयसे ।
मरुद्भिरग्न आ गहि ॥ १ ॥

**यज्ञं प्रतिप्रति त्यं तं सम्यक् शास्त्रोक्तलक्षणम् ।**
**आहूयसे ...................... ।**

(१८७)नहि देवो न मर्त्यो महस्तव क्रतुं परः ।
मरुद्भिरग्न आ गहि ॥ २ ॥

**..... महान् नैव त्वद(न्यो हि)न्योऽस्ति क्रतुं प्रति ॥ ३२६ ॥**

**विष्णौ हि मुख्यतोऽर्थोऽयमग्नौ कांश्चिदृते सुरान् ॥**

(१८८)ये महो रजसो विदुर्विश्वे देवासो अद्रुहः ।
मरुद्भिरग्न आ गहि ॥ ३ ॥

**महतो रञ्जकात् स्वर्गादद्रोग्धारोऽखिलं विदुः ॥ ३२७ ॥**

(१८९)य उग्रा अर्कमानृचुरनाधृष्टास ओजसा ।
मरुद्भिरग्न आ गहि ॥ ४ ॥

प्राप्ता अर्कं विशेषेण सन्निधिस्तत्र यद् हरेः ॥

(१९०)ये शुभ्रा घोरवर्पसः सुक्षत्रासो रिशादसः ।
मरुद्भिरग्न आ गहि ॥ ५ ॥ (॥ ३६ ॥)

शुद्धा घोरबलाः क्षेत्रत्रातारः क्षतितोऽपि वा ।
रम्यसत्सुखभोक्तारो मरुतो मारुतत्वतः ॥ ३२८ ॥

एतादृशानि रूपाणि प्राणाग्निस्थानि चेशितुः ।
पृथग् वा तादृशान्येव देवगान्यपि सर्वशः ॥ ३२९ ॥

(१९१)ये नाकस्याधि रोचने दिवि देवास आसते ।
मरुद्भिरग्न आ गहि ॥ ६ ॥

स्वर्गोपरि प्रकाशे च सूर्यादावासते सुराः ।
नाको निर्दुःखरूपत्वाद् द्यौः प्रकाशस्वरूपतः ॥ ३३० ॥

(१९२)य ईङ्खयन्ति पर्वतान् तिरः समुद्रमर्णवम् ।
मरुद्भिरग्न आ गहि ॥ ७ ॥

प्रतोलयन्ति च गिरींस्तिरस्कृत्य च साग(रान्)रम् ।
पुरुषान् प्रकृतिं वाऽपि पर्ववन्तो हि जन्मना ।
पुरुषाः सुसमुद्रेकात् समुद्रः प्रकृतिर्मता ॥ ३३१ ॥

प्रकृतेः पुरुषाणां च प्रेरकः सन् सदा हरे ।
स्व(सु)रूपैर्बहुभिर्युक्त आयाहि सम सद्गुणैः ॥ ३३२ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमदृग्भाष्ये
प्रथमाष्टकस्य प्रथमोऽध्यायः ॥

(१९३) आ ये तन्वन्ति रश्मिभिस्तिरः समुद्रमोजसा ।
मरुद्भिरग्न आ गहि ॥ ८ ॥

(१९४) अभि त्वा पूर्वपीतये सृजामि सोम्यं मधु ।
मरुद्भिरग्न आ गहि ॥ ९ ॥ ( ॥ ३७ ॥)

॥ इति प्रथमाष्टके प्रथमोऽध्यायः ॥

# द्वितीयोऽध्यायः

## सूक्तम् - २०

(अयम् अष्टौ, ऋषिः मेधातिथिः काण्वः । छन्दः गायत्री ।
देवता ऋभवः ।)

(१९५)ॐ ।। अयं देवाय जन्मने स्तोमो
विप्रेभिरासया । अकारि रत्नधातमः ।। १ ।।

**सर्वजन्मकृते विष्णुदेवायेयं स्तुतिः कृता ।**
**मुखेन विप्रैः काण्वाद्यैः सैव यद् रतिधातमा ।। १ ।।**

(१९६)य इन्द्राय वचोयुजा ततक्षुर्मनसा हरी ।
शमीभिर्यज्ञमाशत ।। २ ।।

**वाङ्मात्रेणैव योज्यौ ये चक्रुरिन्द्राय वाजिनौ ।**
**शमीभिर्विष्णुनिष्ठाभिर्यज्ञभागं च लेभिरे ।। २ ।।**

**भगवांश्चैतदखिलं कृतवानृभुषु स्थितः ।**
**पृथग् वा फलदातृत्वात् ........... ।**

(१९७)तक्षन् नासत्याभ्यां परिज्मानं सुखं रथम् ।
तक्षन् धेनुं सबर्दुघाम् ।। ३ ।।

**...................... परितो ज्मां यतश्चरेत् ।। ३ ।।**

**परिज्माऽतो रथः काम्यं सबरित्यभिधीयते ।**
**व कामन इति ह्यस्मात् ........... ।**

(१९८)युवाना पितरा पुनः सत्यमन्त्रा ऋजूयवः ।
ऋभवो विष्ट्यक्रत ।। ४ ।।

.............. सुधन्वैषां पिता स्मृतः ।। ४ ।।

बृहस्पतेः कामधेनुमृ(कामधेनुः ऋ)जुभक्ता ऋजूयवः ।
अवेतनं स्वामिबलात् कर्म विष्ट्यत्र तेऽक्रत ।। ५ ।।

ऋतभूमिर्ज्ञानभूमिर्भगवानृभुरीरितः ।
येषां भूतमृतं कर्म यज्ञभागाप्तितोऽपि ते ।। ६ ।।

(१९९)सं वो मदासो अग्मतेन्द्रेण च मरुत्वता ।
आदित्येभिश्च राजभिः ।। ५ ।। (।। १ ।।)

सहेन्द्रेण सहाऽदित्यैः प्राप्ता युष्माकमिन्दवः ।

(२००)उत त्यं चमसं नवं त्वष्टुर्देवस्य निष्कृतम् ।
अकर्त चतुरः पुनः ।। ६ ।।

'एकं चमसं चतुरः' कुरुतेत्याह तान् पुरा ।
त्वष्टाऽग्निश्चैव देवानां वाक्यात् तदपि तैः कृतम् ।। ७ ।।

व्यादि स्वोक्तं परित्यज्य त्वष्टुः शुश्रूषणं कृतम् ।
तं पूर्व(पूर्वं) कृतमेवैकं चमसं चतुरोऽक्रत ।। ८ ।।

(२०१)ते नो रत्नानि धत्तन त्रिरा साप्तानि सुन्वते ।
एकमेकं सुशस्तिभिः ।। ७ ।।

सप्तसङ्ख्यानि रत्नानि त्रिकालेष्वपि धत्तन ।
पुराणपञ्चरात्रेतिहासवेदान् हरिस्तथा ।। ९ ।।

**मीमांसातर्कसहितान् पञ्च वेदानथापि वा ।**
**सप्त च्छन्दांसि वै(चै)कैकं तद्गुणैरखिलैः सह ॥ १० ॥**

(२०२)अधारयन्त वह्नयोऽभजन्त सुकृत्यया ।
भागं देवेषु यज्ञियम् ॥ ८ ॥ (॥ २ ॥)

**सुकर्मणा यज्ञभागमभजन्नप्यधारयन् ।**
**वह्नयो धारकत्वेन स्थिरत्वेन यथा(ऽ)गतिः ॥ ११ ॥**

## सूक्तम् - २१

(इहेन्द्राग्नी षट्, ऋषिः मेधातिथिः काण्वः । छन्दः गायत्री ।
देवता इन्द्राग्नी ।)

(२०३)इहेन्द्राग्नी उप ह्वये तयोरित् स्तोममुश्मसि ।
ता सोमं सोमपातमा ॥ १ ॥

**ह्वये सोमं प्रति च तौ ......... ।**

(२०४)ता यज्ञेषु प्र शंसतेन्द्राग्नी शुम्भता नरः ।
ता गायत्रेषु गायत ॥ २ ॥

**............. शुम्भनं भषणं मतम् ॥**

(२०५)ता मित्रस्य प्रशस्तय इन्द्राग्नी ता हवामहे ।
सोमपा सोमपीतये ॥ ३ ॥

**तौ मित्रस्य प्रशस्त्यर्थौ हरेः ........ ।**

(२०६) उग्रा सन्ता हवामह उपेदं सवनं सुतम् ।
इन्द्राग्नी एह गच्छताम् ॥ ४ ॥

(२०७) ता महान्ता सदस्पती इन्द्राग्नी रक्ष उब्जतम् ।
अप्रजाः सन्त्वत्रिणः ॥ ५ ॥

................ रक्षांसि चोब्जतम् ॥ १२ ॥

रक्षोरक्ष्याः प्रजा यस्मादत्र्यो मार्गत्रयोज्झिताः ।
पितृदेवमनुष्याणां गत्यभावादधोगतेः ॥ १३ ॥

(२०८) तेन सत्येन जागृतमधि प्रचेतुनै पदे ।
इन्द्राग्नी शर्म यच्छतम् ॥ ६ ॥ (॥ ३ ॥)

सत्येन गुणपूर्णेन विष्णुना तेन जागृतम् ।
स्वगुणैरेव विष्णुस्तु प्रकृष्टे चेतने हरौ ॥ १४ ॥

पदे गम्यत्वतः सम्यक् तस्मिन्नेव स्वभावतः ।
तथा स्थितौ तु जागृतमिति विष्णुर्विशेषतः ॥ १५ ॥

उक्तः .............. ।

## सूक्तम् - २२

(प्रातर्युजा एकविंशतिः, ऋषिः मेधातिथिः काण्वः । छन्दः गायत्री । देवता - १-४ अश्विनौ, ५-८ सविता, ९-१० अग्निः ११ देव्यः, १२ इन्द्राणीवरुणान्यग्नाय्यः, १३-१४ द्यावापृथिव्यौ, १५ पृथिवी, १६ विष्णुर्देवा वा, १७-२१ विष्णुः ।)

(२०९) प्रातर्युजा वि बोधयाश्विनावेह गच्छताम् ।
अस्य सोमस्य पीतये ।। १ ।।

**....... प्रातः स्तुतत्वेन प्रोक्तौ प्रातर्युजाविति ।**
**अश्विनौ भगवांश्चैव प्रातर्योगेन गम्यते ।। १६ ।।**

**स्तुतिशब्दः स्तुतौ यस्माद् बुध्यते वर्तमानकः ।**
**बोधयेत्यत उक्तं तत् परतो बुद्ध्यते कथम् ।। १७ ।।**

(२१०) या सुरथा रथीतमोभा देवा दिविस्पृशा ।
अश्विना ता हवामहे ।। २ ।।

(२११) या वां कशा मधुमत्यश्विना सूनृतावती ।
तया यज्ञं मिमिक्षतम् ।। ३ ।।

**कशया स्पृष्टिमात्रेण मधुरं कुरुतोऽखिलम् ।**
**अतो मिमिक्षतमिति स्पर्शो मेक्षणमुच्यते ।। १८ ।।**

**वेदवाक्यस्तुतत्वेन कशा सा सूनृतावती ।**
**तयैव घृतसोमादि स्पृशतं याज्ञिकं वसु ।। १९ ।।**

(२१२) नहि वामस्ति दूरके यत्रा रथेन गच्छथः ।
अश्विना सोमिनो गृहम् (।। ४ ।।)

(२१३) हिरण्यपाणिमूतये सवितारमुप ह्वये ।
स चेत्ता देवता पदम् ।। ५ ।। (।। ४ ।।)

**हितत्वाद् रमणीयत्वाद्धिरण्यं वर्णतोऽपि च ।**
**रूपं नारायणस्यैव पाणिशब्दोपलक्षितम् ।। २० ।।**

**स्रष्टृत्वात् सविता विष्णुः स ज्ञाता स्वपदादिकम् ।**
**स एव देवता मुख्या तद्गुणैक्येन देवता ।। २१ ।।**

(२१४) अपां नपातमवसे सवितारमुप स्तुहि ।
तस्य व्रतान्युश्मसि ।। ६ ।।

**व्यक्तत्वात् पार्थिवे देहे सोऽपां नप्ता जनार्दनः ।।**

(२१५) विभक्तारं हवामहे वसोश्चित्रस्य राधसः ।
सवितारं नृचक्षसम् ।। ७ ।।

**सदा विभज्य दातारं वसोरुत्तमराधसः ।। २२ ।।**

**अशेषपुण्यपापादिविशेषैश्चितिदर्शकम् ।**
**आह्वयामः ............... ।**

(२१६) सखाय आ निषीदत सविता स्तोम्यो नु नः ।
दाता राधांसि शुम्भति ।। ८ ।।

**........ स राधांसि शोभयत्यञ्जसा हरिः ।। २३ ।।**

(२१७) अग्ने पत्नीरिहा वह देवानामुशतीरुप ।
त्वष्टारं सोमपीतये ।। ९ ।।

(२१८)आ ग्ना अग्न इहावसे होत्रां यविष्ठ भारतीम् ।
वरूत्रीं धिषणां वह ।। १० ।।

**नदीश्च भारतीं चैव होत्रामाहुतिरूपतः ।**
**वरूत्रीं वरणीयत्वात् त्राणाद् बुद्धिस्वरूपिणीम् ।। २४ ।।**

**विष्णुश्च प्राणसम्बन्धाद् भारतीत्येव चोदितः ।**
**प्राणस्तु भरतो भारततत्वाद् भर्तृरूपतः ।। २५ ।।**

**होत्रा हुतत्वतो विष्णुः श्रीर्वाऽपि धिषणा मता ।**

(२१९)अभि नो देवीरवसा महः शर्मणा नृपत्नीः ।
अच्छिन्नपत्राः सचन्ताम् ।। ११ ।।

**शर्म दत्वैव महतो विष्णो रक्षन्तु नोऽभितः ।। २६ ।।**

**प्राणेनैवावसा साकं यस्मादविधवाः सदा ।**
**अतो ह्यच्छिन्नपत्रास्ताः सदायुक्कर्णभूषणाः ।। २७ ।।**

(२२०)इहेन्द्राणीमुप ह्वये वरुणानीं स्वस्तये ।
अग्नायीं सोमपीतये ।। १२ ।।

(२२१)मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् ।
पिपृतां नो भरीमभिः ।। १३ ।।

**भरणैर्नः पारयेतां दुःखेभ्यः श्रीश्च भूश्च ते ।**
**स्वयं वा भगवानन्ये रोदसी लोकदेवते ।। २८ ।।**

(२२२)तयोरिद्घृतवत्पयो विप्रा रिहन्ति धीतिभिः ।
गन्धर्वस्य ध्रुवे पदे ।। १४ ।।

तयोः पयस्तु विज्ञानं घृतवत् सापरोक्षकम् ।
यल्लोकदेवताऽपि स्याद् भारती ज्ञानदेवता ॥ २९ ॥

विष्णोर्नित्यपदस्थं यज्ज्ञानं यद्(तद्) घृतवत् पयः ।
लिहन्ति विप्रास्तज्ज्ञानं बुद्धिभिस्तत्प्रसादतः ।
गां धारयन् वर्तते यद् गन्धर्वस्तेन केशवः ॥ ३० ॥

(२२३)स्येना पृथिवि भवानृक्षरा निवेशनी ।
यच्छा नः शर्म सप्रथः ॥ १५ ॥ (॥ ६ ॥)

स्योना सुखकरी स्यान्नो(स्या नो) यतो नश्यसि नो नृवत् ।
निवेशनी साऽऽधारत्वाच्छर्म यच्छ महत्तरम् ॥ ३१ ॥

(२२४)अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे ।
पृथिव्याः सप्त धामभिः ॥ १६ ॥

असुरेभ्यो जगद्धृत्वा यतो विष्णुस्त्रि(भिः क्रमैः)विक्रमैः ।
आरभ्य पृथिवीं सप्तलोकैः साकं जगत्पतिः ।
चक्रे सुरान् पदस्थानप्यतो देवा अवन्तु नः ॥ ३२ ॥

विशिष्टबलचेष्टत्वाद् विष्णुरित्यभिधा हरेः ।
प्राणं बलं षकारं च णकारं चाह हि श्रुतिः ॥ ३३ ॥

(२२५)इदं विष्णुर्वि चक्रमे त्रेधा निदधे पदम् ।
समूळ्हमस्य पांसुरे ॥ १७ ॥

रमन्ति पांसवो यत्र पांसुरं पदमीरितम् ।
समूढं तत्र विश्वं हि पांसुवज्जगतः पतेः ॥ ३४ ॥

(२२६) त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः ।
अतो धर्माणि धारयन् ।। १८ ।।

वेदान् कालान् गुणान् लोकान् देवमानुषदानवान् ।
चेतनाचेतनान् मिश्रान् त्रीणि पदा विचक्रमे ।। ३५ ।।

रक्षकत्वेन सर्वाणि स्रष्टृभ(ह)र्तृत्वतस्तथा ।
मोक्षदत्वेन च विभुः स्तम्भनीयो न केनचित् ।
धारकांश्चैव वाय्वादीन् धारयन् वर्तते ततः ।। ३६ ।।

(२२७) विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे ।
इन्द्रस्य युज्यः सखा ।। १९ ।।

जानीथ विष्णुकर्माणि प्राणिकर्माण्यशेषतः ।
यतो जातान्यविज्ञातो भगवान् सर्वदैव च ।
स्पशाज्ञातदृशौ यस्मादिन्द्रस्य सहितः (सदा)सखा ।। ३७ ।।

प्राणस्यैवेन्द्र(प्राणस्य चेन्द्र)नाम्नश्च कस्मिन् न्वहमिति श्रुतेः ।
त्वयेदिन्द्रेतिवचनात् प्राण इन्द्राभिधो मतः ।। ३८ ।।

(२२८) तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ।। २० ।।

रमाब्रह्मशिवादिभ्यो यद् विष्णोः परमं पदम् ।
रूपं पश्यन्ति निर्मुक्ताः संसारात् सूरयः सदा
चक्षुर्दिवीव व्याप्तं यददृश्यं फलदर्शितम् ।। ३९ ।।

(२२९) तद्विप्रासो विपन्यवो जागृवांसः समिन्धते ।
विष्णोर्यत्परमं पदम् ।। २१ ।। (७ ।।)

**सन्दीपयन्ति विज्ञानैः संसारात् प्राप्तजागराः ।**
**विपन्यवो ज्ञानितमा विष्णोर्यत् परमं पदम् ।**
**तात्पर्याधिक्यविज्ञप्त्या(तात्पर्याभ्यधिकज्ञप्त्या) अर्थमेतं पुनर्जगौ ।**
**॥ ४० ॥**

## सूक्तम् - २३

(तीव्राः चतुर्विंशतिः । ऋषिः मेधातिथिः काण्वः । छन्दः १-१८ गायत्री, १९ पुरउष्णिक्, २१ प्रतिष्ठा (गायत्री), २० २२-२४ अनुष्टुप् । देवता १ वायुः, २-३ इन्द्रवायू, ४-६ मित्रावरुणौ, ७-९ मरुत्वान्, १०-१२ विश्वे देवाः, १३-१५ पूषा, १६-२२, २३ (पूर्वार्धस्य) आपः, २३ (उत्तरार्धस्य), २४ अग्निः ।)

(२३०) तीव्राः सोमास आ गह्याशीर्वन्तः सुता इमे ।
वायो तान्प्रस्थितान्पिब ॥ १ ॥

**वीर्यवन्तश्च ये सोमा यजमानेष्टसाधकाः ।**
**पिब तान् ......................... ।**

(२३१) उभा देवा दिविस्पृशेन्द्रवायू हवामहे ।
अस्य सोमस्य पीतये ॥ २ ॥

**सर्वदेवानां ज्ञाना(ज्ञाता)धिक्यौ दिविस्पृशौ ॥ ४१ ॥**

(२३२) इन्द्रवायू मनोजुवा विप्रा हवन्त ऊतये ।
सहस्राक्षा धियस्पती ॥ ३ ॥

**मनसः प्रेरकौ चैव बहुज्ञानौ धियस्पती ।।**

(२३३) मित्रं वयं हवामहे वरुणं सोमपीतये ।
जज्ञाना पूतदक्षसा ।। ४ ।।

**जज्ञानौ व्यज्यमानौ तु यजमानस्य शोधकौ ।। ४२ ।।**

(२३४) ऋतेन यावृतावृधावृतस्य ज्योतिषस्पती ।
ता मित्रावरुणा हुवे ।। ५ ।। (।। ८ ।।)

**परेण ब्रह्मणा तस्मिन् वृद्धौ सत्यपती सदा ।**
**सत्यं ज्योतिः प्रकाशत्वात् तौ मित्रावरुणौ हुवे ।। ४३ ।।**

(२३५) वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः ।
करतां नः सुराधसः ।। ६ ।।

**संसिद्धान् कुरुतां नस्तौ ........... ।**

(२३६) मरुत्वन्तं हवामह इन्द्रमा सोमपतये ।
सजूर्गणेन तृम्पतु ।। ७ ।।

**................ सगणस्तृप्यतां हरिः ।।**

(२३७) इन्द्रज्येष्ठा मरुद्गणा देवासः पूषरातयः ।
विश्वे मम श्रुता हवम् ।। ८ ।।

**पूषा पूर्णत्वतो विष्णुस्तन्मित्राः पूषरातयः ।। ४४ ।।**

(२३८) हत वृत्रं सुदानव इन्द्रेण सहसा युजा ।
मा नो दुःशंस ईशत ।। ९ ।।

**सहसा बलरूपेण शक्रेण सहिताः सुराः ।**
**मदज्ञानं हतातीव दानशीला न शक्नुयात् ॥ ४५ ॥**

**दुर्वाक् तद्वान् पुमान् वा नः ........ ।**

(२३९) विश्वान्देवान्हवामहे मरुतः सोमपीतये ।
उग्रा हि पृश्निमातरः ॥ १० ॥ (॥ ९ ॥)

**.............. भारती पृश्निरुच्यते ।**
**गोरूपा च क्वचित् साऽभूत् तत्सुताश्चाखिलाः सुराः ॥ ४६ ॥**

**अन्यत्रापि सुतास्तस्याः ........ ।**

(२४०) जयतामिव तन्यतुर्मरुतामेति धृष्णुया ।
यच्छुभं याथना नरः ॥ ११ ॥

**........ जयतामिव तद्ध्वनिः ।**
**धैर्याद् याति यदा विष्णुं वायुं वा याथनोत्तमम् ॥ ४७ ॥**

(२४१) हस्काराद्विद्युतस्पर्यतो जाता अवन्तु नः ।
मरुतो मृळयन्तु नः ॥ १२ ॥

**दोषत्यागाद् गुणप्राप्तेर्हस्कारो वायुरुच्यते ।**
**विद्युद् विशिष्टज्ञानत्वाद् भारती तत्सुता हि ये (हि ते) ॥ ४८ ॥**

**सर्व(सर्वे) देवाश्च मरुतो रक्षन्त्वेतादृशो हरिः ।**
**तत्तदन्तर्गतत्वेन ............ ।**

(२४२) आ पूषश्चित्रबर्हिषमाघृणे धरुणं दिवः ।
आजा नष्टं यथा पशुम् ॥ १३ ॥

................ पूषा पूर्णत्वतश्च सः ॥ ४९ ॥

आघृणिः पूर्णरश्मित्वा(दज)दाज नश्चित्रबर्हिषम् ।
ब्रह्माणं च दिवो देव्या भर्तारं वायुमाज गाम् ॥ ५० ॥

यथा गतम् ...... ।

(२४३) पूषा राजानमाघृणिरपगूळ्हं गुहा हितम् ।
अविन्दच्चित्रबर्हिषम् ॥ १४ ॥

जगद्राजमविन्दद् भगवान् सुतम् ।
स्वकुक्षिगूढं ब्रह्माणम् ......... ।

(२४४) उतो स मह्यमिन्दुभिः षड्युक्ताँ अनुसेषिधत् ।
गोभिर्यवं न चर्कृषत् ॥ १५ ॥ (॥१०॥)

.............. मह्यं सोमैश्च तर्पितः ॥ ५१ ॥

साधयामास षड् युक्तानी(नि)न्द्रियाणि चकार च ।
साधनं शक्तिदानं तु गोभिर्वाभिर्यथा यवम् ॥ ५२ ॥

(२४५) अम्वयो यन्त्यध्वभिर्जामयो अध्वरीयताम् ।
पृञ्चतीर्मधुना पयः ॥ १६ ॥

अम्बयो मातरो ह्यापः कारणत्वात् सहोदराः ।
जगतो जामयो यस्मात् सह ताभिर्विवर्धते ॥ ५३ ॥

अध्वरं कुर्वतां क्षीरं सोमं चापि प्रपृञ्चतीः ।
सम्पृक्ताः .............. ।

(२४६) अमूर्या उप सूर्ये याभिर्वा सूर्यः सह ।
ता नो हिन्वन्त्वध्वरम् ।। १७ ।।

.............. याः समीपस्थाः सूर्यस्य सहिता अपि ।। ५४ ।।

(२४७) अपो देवीरुप ह्वये यत्र गावः पिबन्ति नः ।
सिन्धुभ्यः कर्त्वं हविः ।। १८ ।।

ह्वयामि ता याः पिबन्ति गावो नः सर्वथा हविः ।
का(र्यं)र्ये नदीभ्यः ........ ।

(२४८) अप्स्व१न्तरमृतमप्सु भेषजमपामुत प्रशस्तये ।
देवा भवत वाजिनः ।। १९ ।।

.......... तास्वन्तरदृश्यममृतं स्थितम् ।। ५५ ।।

अपामेव प्रशंसार्थं सहायाः सन्तु नः सुराः ।।

(२४९) अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा ।
अग्निं च विश्वशंभुवमापश्च विश्वभेषजीः ।
।। २० ।। (।।११।।)

तात्पर्यार्थं पुनर्वाक्यं सुखाधारो हुताशनः ।। ५६ ।।

(२५०) आपः पृणीत भेषजं वरूथं तन्वे३ मम ।
ज्योक् च सूर्यं दृशे ।। २१ ।।

वरूथं गुप्तिरुद्दिष्टा ज्योतिर्विष्णुदृशे तथा ।
सूरिप्राप्यो यतो विष्णुः सूर्य इत्यभिधीयते ।। ५७ ।।

पृण दाने ............. ।

(२५१)इदमापः प्र वहत यत्किं च दुरितं मयि ।
यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ।। २२ ।।

....... अखिलं पापमापः प्रवहतापि नः ।
हिंसाजं शेपजं चैव तथैवानृतसम्भवम् ।। ५८ ।।

(२५२)आपो अद्यान्वचारिषं रसेन समगस्महि ।
पयस्वानग्न आ गहि तं मा सं सृज वर्चसा ।।

रसेन सङ्गताश्च स्मो यस्मादनुचरा हि वः ।

(२५३)सं माग्ने वर्चसा सृज सं प्रजया समायुषा ।
विद्युर्मे अस्य देवा इन्द्रो विद्यात्सह ऋषिभिः ।।
२४ ।। (।। १२ ।।)

कुर्युर्मामपि विद्वांसं मदर्थं सर्वदा सुराः ।
एनं(एतं) मामिति वाऽर्थः स्यादनुजानन्तु वोदितम् ।। ५९ ।।

## सूक्तम् - २४

शुनःशेपो ददर्शात उत्तरं परमृक्शतम् ।
यूपादात्मविमोक्षाय स्तुवन् देवान् पृथक्पृथक् ।। ६० ।।

त्र्यूनं शतमिहैवान्यच्चतुर्थे पञ्चमेऽपि च ।
मण्डले ब्राह्मणोक्तस्तु क्रमोऽत्रापि ह्यृचां भवेत् ।। ६१ ।।

(कस्य नूनं पञ्चदश, ऋषिः आजीगर्तिः शुनःशेपः । छन्दः १, २, ६-१५ त्रिष्टुम् । ३-५ गायत्री । देवता १ कः (प्रजापतिः), २ अग्निः, ३-४ सविता, ५ सविता भगो वा, ६-१५ वरुणः । )

(२५४)कस्यं नूनं कतमस्यामृतानां मनामहे चारु देवस्य नाम ।
को नौ मह्या अदितये पुनर्दात्पितरं च दृशेयं मातरं च ॥

**कर्तुः परानन्दतनोरिदानीं मनामहे चारु विष्णोः सुराणाम् ।**
**नामेशश्चेदिन्दिरायै पुनर्दाद् दृशेयं तां मातरं तं च देवम् ॥ ६२ ॥**

**स मुक्तानाममृतानामजेशमुख्यानां चाभ्यधिको यत् सुखादौ ।**
**तेनोक्तोऽसौ कतमोऽखण्डितत्वात् स चादितिर्महती (तन्महीव)तन्मही च ॥ ६३ ॥**

**देशान्त्यात् तन्मह(हि)त्त्वं गुणैस्तु कालाच्चोक्तं तस्य चाखण्डितत्वम् ।**
**स एव माता च(स) पिता च देवस्तस्मिन्सदा संस्थितास्तत् पुनर्दात् ॥ ६४ ॥**

**अत्ति विश्वं तेन चैवादितिः स श्रीर्वा ब्रह्मा प्रोक्त एवं क एव ।**
**गुणाश्च तस्याभ्यधिकाः सदैव जीवेभ्यस्तत् सोऽपि तद्वाक्ययोग्यः ॥ ६५ ॥**

**ददात्वसौ विष्णवे चेन्दिरायै प्राप्तानस्मानपि तौ सर्वगत्वात् ।**
**विशेषदेशप्राप्तितस्तस्य चाऽप्तिर्वैकुण्ठादि(र्देश उक्तो)र्लोक उक्तो हरेश्च ॥ ६६ ॥**

(२५५) अग्नेर्वयं प्रथमस्यामृतानां मनामहे चारु देवस्य नाम ।
स नो मह्या अदितये पुनर्दात्पितरं च दृशेयं मातरं च ॥ २ ॥

तस्यैवान्यद् रूपमग्र्याख्यमुक्तं यो यज्ञेशो हूयते जामदग्न्यः ।
स देवानां प्रथमो नाम तस्य स्मृतं सार्थं सर्वकामप्रदं स्यात् । ॥ ६७ ॥

(२५६) अभि त्वा देव सवितरीशानं वार्याणाम् ।
सदावन्भागमीमहे ॥ ३ ॥

सवितेत्यपरं रूपं जगत्कारणमीशितुः ।
वित्तानामीश्वरं तं तु(तत्तु) वार्यं हि वरणीयतः ॥ ६८ ॥

वित्तं रक्षन्नवन्नित्यमात्मानं भागमेम्यहम् ।
त्वामैश्वर्यादिसमितिम् ............. ।

(२५७) यश्चिद्धि त इत्था भगः शशमानः पुरा निदः ।
अद्वेषो हस्तयोर्दधे ॥ ४ ॥

............ योऽपि ते परमो भगः ॥ ६९ ॥

इत्थम्भूतोऽविकारित्वाच्छशमानः सुखा(त्मकः)धिकः ।
नेदीयसो ब्रह्मणोऽपि पूर्वो द्वेषादिवर्जितः ।
हस्तयोस्तं दधे देव तव रूपमनामयम् ॥ ७० ॥

निदो दवीय इति तु विरुद्धार्थद्वयाभिधौ ।
दूरसामीप्यवचनावुभा(विति)वपि महोदधौ ॥ ७१ ॥

यदाऽन्यः सविता देवस्तव स्वामी भगो हरिः ।
अद्वेषो विष्णुरित्यु(क्तस्त)क्तेस्तमहं हस्तयोर्दधे ॥ ७२ ॥

(२५८) भर्गभक्तस्य ते वयमुदशेम तवावसा ।
मूर्धानं राय आरभे ॥ ५ ॥ (॥ १३ ॥)

विष्णुभक्तस्य ते रायो मूर्धानं राय उत्तमम् ।
तवावसाऽऽरभे विद्यामुच्चैरश्नामि तत्फलम् ॥ ७३ ॥

ऐश्वर्यादिगुणा यस्य भगो भक्तं परात्मनः ।
तस्य ते वित्तमश्नामि तव रक्षावलाद्धरेः ॥ ७४ ॥

(२५९) नहि ते क्षत्रं न सहो न मन्युं वयश्चनामी
पतयन्त आपुः ।
नेमा आपो अनिमिषं च चरन्तीर्न ये वातस्य
प्रमिनन्त्यभ्वम् ॥ ६ ॥

क्षतात् त्राणं ते वलं संविदं(वलसंविदं) च पूर्णं नाऽपुर्मुक्तिगा
ये विशिष्टाः ।
अपि स्वयं संसृतेरुत्पतन्तः पतयन्तोऽन्याञ्छिष्यभक्तानुदाराः ।
॥ ७५ ॥

सदा शुभान्याचरन्तोऽपि देवा अब्देवता आप इति श्रुतिर्यत् ।
गङ्गाद्या वा वायुदेवस्य विष्णोरुत्पत्तिं ये जानते देवसङ्घाः ॥
वयः सुपर्णा इति वाऽपि .............. ।

(२६०) अबुध्ने राजा वरुणो वनस्योर्ध्वं स्तूपं
ददते पूतदक्षः ।

नीचीनाः स्थुरुपरि वुध्न एषामस्मे अन्तर्निहिताः
केतवः स्युः ॥ ७ ॥

........ अबुध्ने प्रकाशतः सम्भजतः स्वमुच्चैः ॥ ७६ ॥

स्तूपं स्थानं ददते पूतदक्षो नीचस्था अप्यूर्ध्वगास्तेन तस्थुः ।
नीचाश्च ये मुक्तिगा मानुषाद्यास्तेषां बुध्नो नीचलोकः सुरेभ्यः ।
नीचा गुणा अप्रकाशोऽथ(चैषां)वैषां नीचोच्चत्वं
क्रमशश्चाऽविरिञ्चात् ॥ ७७ ॥

अस्माकमन्तर्निहितानि नित्यं ज्ञानानि
भूयासु(रुताधि)रतोऽधिकानि ।
भव(न्त्वर्हा)न्त्यर्हा भवितुं वा भविष्याः स्युर्द्धिग्रहि
प्रार्थनैवाधिकार्थे ॥ ७८ ॥

(२६१) उरुं हि राजा वरुणश्चकार सूर्याय
पन्थामन्वेतवा उं ॥
अपदे पादा प्रतिधातवेऽकरुतापवक्ता
हृदयाविधश्चित् ॥ ८ ॥

उरुं राजा रञ्जनाद् राजनाद् वा सूर्याय पन्थानमसौ चकार ।
स्वाज्ञानुसारेण सदैव गत्यै पादावपादाय च गन्तवेऽकरोत् ।
अज्ञाय विज्ञानमकः स गन्तुमात्मानमित्यर्थ इहाञ्जसोक्तः ।
॥ ७९ ॥

बुद्धेर्धातुः शङ्करस्यापि दोषान् वक्ता ज्ञानाच्छिक्षकत्वाच्च विष्णुः॥

(२६२)शतं ते राजन्भिषजः सहस्रमुर्वी गंभीरा सुमतिष्टे अस्तु ॥
बाधस्व दूरे निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुग्ध्यस्मत् ॥ ९ ॥

**जगद्रक्षासाधनान्यप्यनन्तान्यनन्तधा सन्ति पुनस्तवेश ।**
**अगाधरूपा महती शुभा च मतिर्मम त्वद्विषये सदाऽस्तु ॥८०॥**

**ऋतज्ञानप्रति(ऋतं ज्ञानं प्रति)रूपत्वहेतोर्निरृत्याख्यां दुर्मतिं दूर एव ।**
**बाधस्व दुर्ज्ञानिजनं निरस्य स्वर्गात् पराकृत्य च शश्वदेव ॥८१॥**

**कृतं च पापं प्रमुमुग्धि मत्तः ................ ।**

(२६३)अमी य ऋक्षा निहितास उच्चा नक्तं ददृश्रे कुहं चिद्दिवेयुः ॥
अदब्धानि वरुणस्य व्रतानि विचाकशच्चन्द्रमा नक्तमेति ॥ १० ॥ (॥ १४ ॥)

**........... ऋक्षाण्यमी निहितानि त्वयोच्चैः ।**
**दृश्यानि रात्रौ न दिवा त्वयैवेत्यादीनि कर्माण्यनिरोधितानि ।**
**॥ ८२ ॥**

**पश्यन् परानन्दतनोस्तवैव चन्द्रो नित्यं दृश्यमानस्त्वयैव ।**
**सम्प्रेरितो याति परे च देवा एवं त्वदाज्ञाकरणाः सदैव ॥ ८३ ॥**

(२६४)तत्त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः ॥

अहेळमानो वरुणेह बोध्युरुशंस मा न आयुः प्र
मोषीः ।। ११ ।।

**एवंगुणो यत् त्वमतो व्रजामि सदा शरण्यं शरणं वेदवाचा ।**
**नमन्नन्यो यजमानो हविर्भिस्तदाशास्ते त्वद्गतिं देवदेव ।। ८४ ।।**

**अनिन्दन्नस्मान् नरमात्रबुद्ध्या सम्बोधयोच्चैस्तुत**
**(नास्मदायुः)माऽस्मदायुः ।**
**च्छेत्सीः .................. ।**

(२६५)तदिन्नक्तं तद्दिवा मह्यमाहुस्तदयं केतो हृद
आ वि चष्टे ।।
शुनःशेपो यमह्वद्गृभीतः सो अस्मान्राजा वरुणो
मुमोक्तु ।। १२ ।।

**....... नक्तं दिवसे चैतदेव स्तोत्रं त्वदीयं प्राहुरार्याः सुकार्यम् ।**
**।। ८५ ।।**

**मह्यं केतो ज्ञानरूपो हृदिस्थो नारायणो वक्त्ययं तेऽन्यरूपम् ।**
**पश्यत्यपीशो यं समह्वद् गृहीतः स नो देवो मोचयत्वग्रदुःखात्**
**।। ८६ ।।**

(२६६)शुनःशेपो ह्यह्वद्गृभीतस्त्रिष्वादित्यं द्रुपदेषु
बद्धः ।।
अवैनं राजा वरुणः ससृज्याद्विद्वाँ अदब्धो वि
मुमोक्तु पाशान् ।। १३ ।।

शुनश्शेपो ह्यह्वद् गृहीतः स्थानत्रये विक्रयाद्यैः सुबद्धः ।
द्रुतं प्राप्तानि द्रुपदानि(इति) विक्रयो यूपे बन्धः सञ्ज्ञपनोद्यमश्च
॥ ८७ ॥

आदित्योऽसावादिसंस्थः परेशो वारीशान्तः संस्थितः स्तूयतेऽत्र ।
शुनःशेपो यमित्यादिकेन वारीशोऽपि ह्यृषिणा स्तूयमानः ॥८८॥

गुणास्त्रयो द्रुपदानीति चोक्ता द्रवत्ययं जीवसङ्घो हि यत्र ।
करोत्वेनमवसृष्टं सृतेः स प्रसन्नोऽस्मान् कर्मपाशान्मुमोक्तु ।
॥ ८९ ॥

(२६७)अवं ते हेळो वरुण नमोभिरवं यज्ञेभिरीमहे
हविर्भिः ।
क्षयन्नस्मभ्यमसुर प्रचेता राजन्नेनांसि शिश्रथः
कृतानि ॥ १४ ॥

निन्दां च तेऽवाग्गतेर्हेतुभूतामवगच्छामः सेयमित्यप्ययोग्याम् ।
नमस्कारैस्त्वद्रतैस्त्वन्मखैश्च हविर्युक्तैस्त्वत्प्रसादात् स च त्वम् ।
क्षितिरस्मभ्यं प्राणरन्ताऽखिलज्ञो वियोजयास्मत्कृतान्याश्वघानि
॥ ९० ॥

(२६८)उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं
श्रथाय ।
अथा वयमादित्य व्रते तवानागसो अदितये
स्याम ॥ १५ ॥ (॥ १५ ॥)

पुण्यं पापं मिश्रमित्येव पाशान् यथायोग्यं श्रथयान्येषु दत्त्वा ।
त्वन्निष्ठया तेन वयं त्वदीयलक्ष्म्याः पुत्राः स्याम मुक्ताः सृतेश्च ।
।। ९१ ।।

एषा विष्णोः केवलाऽप्येवमन्या अयोग्या या अन्यदेवेषु सम्यक् ।
वाक्यैर्विशिष्टैरपवादहीनैर्ज्ञेया गुणा अन्यदेवेषु चैव ।। ९२ ।।

''पतिः सोमो वरुणस्याप्यथाग्नेः पतिः सूर्यस्तावुभौ तुल्यवीर्यौ ।
सूर्याचन्द्रमसोः पतिरिन्द्रोऽस्य रुद्रः पतिर्ब्रह्मा पतिरस्यापि विष्णुः
।। ९३ ।।

पतिर्मुक्तेर्वासुदेवोऽथ दृष्टेर्ब्रह्मा विद्यायाः शर्व इन्द्रः क्रियायाः ।
कियांशानामधिपा अन्यदेवास्तथा फलानामपि मुक्तिमार्गे ।
।। ९४ ।।

यथायोग्यं स्वेन्द्रियप्रेरकाश्च ततः पूज्या देवता मुक्तिकामैः'' ।
इति श्रुतेस्तारतम्यं गुणानां ज्ञात्वा योज्याः श्रुतयस्तत्र तत्र
।। ९५ ।।

## सूक्तम् - २५

(यच्चिद्धि एकविंशतिः । ऋषिः आजीगर्तिः शुनःशेपः । छन्दः गायत्री । देवता वरुणः ।)

(२६९)यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतम् ।
मिनीमसि द्यविद्यवि ।। १ ।।

**दिवसे दिवसे देव कुर्मो यदपि ते व्रतम् ।**
**यथैव सुजनाः ............ ।**

(२७०) मा नो वधाय हत्नवे जिहीळानस्य रीरधः ।
मा हृणानस्य मन्यवे ॥ २ ॥

**............. मा नो हन्तुं साधय निघ्नते ।**
**जिहीळानस्त्यजन् धर्मं हरतो मा च मन्यवे ॥ ९६ ॥**

(२७१) वि मृळीकाय ते मनो रथीरश्वं न संदितम् ।
गीर्भिर्वरुण सीमहि ॥ ३ ॥

**मनस्त्वयि निवध्नीमो गीर्भिरश्वं वियोजितम् ।**
**वध्नाति सारथिर्यद्वन्मृळीको रक्षकोऽधिकम् ।**
**त्वन्मनोऽस्मासु वा गीर्भी रक्षणाय विसीमहि ॥ ९७ ॥**

(२७२) परा हि मे विमन्यवः पतन्ति वस्यइष्टये ।
वयो न वसतीरुप ॥ ४ ॥

**पराक् पतन्ति प्रज्ञा मे विविधाः शुभलब्धये ।**
**पक्षिणो वसतीर्यद्व(द्वा)चा न त्वां प्राप्नुवन्ति च ॥ ९८ ॥**

(२७३) कदा क्षत्रश्रियं नरमा वरुणं करामहे ।
मृळीकायोरुचक्षसम् ॥ ५ ॥ (॥ १६ ॥)

**अतोऽखिलक्षत्त्रपतिमाह्वयामः कदा वयम् ।**
**अविनाशिनं रक्षणाय महादर्शनमञ्जसा ॥ ९९ ॥**

(२७४) तदित्समानमाशाते वेनन्ता न प्र युच्छतः ।
धृतव्रताय दाशुषे ॥ ६ ॥

तत्प्रसादाद् ब्रह्मवायू सममेवावगच्छतः ।
वेनन्तौ हि विजानन्तौ तौ हि ज्ञानिवरौ मतौ ॥ १०० ॥
यथाज्ञानं प्रयोगं च दाशुषे कुरुतो न तौ ।
अश्विनौ वरुणश्चेत् स्यात् ........... ।

(२७५) वेदा यो वीनां पदमन्तरिक्षेण पतताम् ।
वेद नावः समुद्रियः ॥ ७ ॥

.............. आकाशे पक्षिणां पदम् ।
वेत्त्यसौ सूक्ष्मविज्ञानात् तथा नावो जलेऽब्धिगः ॥ १०१ ॥

मुक्तानां च स्थितिं वेद ज्ञानस्य च गतिं पराम् ।
क्षीराब्धिशयनो विष्णुः ........... ।

(२७६) वेद मासो धृतव्रतो द्वादश प्रजावतः ।
वेदा य उपजायते ॥ ८ ॥

........... कालं कालोद्भवैः सह ॥ १०२ ॥

य आत्मनः समीपे च जायते तं च पद्मजम् ।
मुक्तं वा .................... ।

(२७७) वेद वातस्य वर्तनिमुरोर्ऋष्वस्य बृहतः ।
वेदा ये अध्यासते ॥ ९ ॥

........... वर्तनां वायोर्महतोऽतिप्रकाशिनः ॥ १०३ ॥

बृहतो ज्ञानिनश्चैव बृहतो महतोऽपि वा ।
अधिकानि पदान्येव देवा अध्यासतेऽपि तान् ॥ १०४ ॥

(२७८) नि षसाद धृतव्रतो वरुणः पस्त्याइस्वा ।
साम्राज्याय सुक्रतुः ॥ १० ॥ (॥ १७ ॥)

**साम्राज्याय स पस्त्यासु निषसाद प्रजासु च ।**
**सुज्ञानः ...................... ।**

(२७९) अतो विश्वान्यद्भुता चिकित्वाँ अभि पश्यति ।
कृतानि या च कर्त्वा ॥ ११ ॥

**.............. तत्र सन् विश्वान्यद्भुतानि च पश्यति ।**
**कर्ता चिकित्वान् स कृतकर्तव्यानि च पश्यति ॥ १०५ ॥**

(२८०) सनो विश्वाहा सुक्रतुरादित्यः सुपथा करत् ।
प्र ण आयूंषि तारिषत् ॥ १२ ॥

**विश्वान्यहानि नो देवः सुपथानि करोत्वसौ ।**
**ददात्वायूंषि नो नित्यं मुक्तौ वा ........ ।**

(२८१) विभ्रद् द्रापिं हिरण्ययं वरुणो वस्त निर्णिजम् ।
परि स्पशो निषेदिरे ॥ १३ ॥

**..................... अतिद्रुतभ्रमम् ॥ १०६ ॥**

**हितं च रमणीयं च चक्रं स्वर्णं च वर्णतः ।**
**अविभ्रच सुनिर्णिक्तं शुद्धं(शुभ्रं) वस्त्रमवस्त च ॥ १०७ ॥**

**अविज्ञातचरा देवाः स्पशस्तस्य निषेदिरे ।**
**परितो वरुणः पाशमविभ्रद् द्रुतवन्धनम् ॥ १०८ ॥**

(२८२)न यं दिप्संन्ति दिप्सवो न द्रुह्वाणो जनानाम् ।
न देवमभिमातयः ।। १४ ।।

**स्तम्भयन्ति न यं वीराः स्तम्भका अपि राक्षसाः ।**
**जनानां(प्रजानां) द्रोहिणो दैत्याः शत्रवश्चाभिमातयः ।। १०९ ।।**

(२८३)उत यो मानुषेष्वा यशश्चक्रे असाम्या ।
अस्माकमुदरेष्वा ।। १५ ।। (।।१८।।)

**असमं च यशश्चक्रे योऽस्माकं हृदयेषु च ।**
**अमानुषेषु(आमनुष्येषु) चान्येषु समन्तादात्मनः सदा ।**
**अज्ञेष्वपि च मर्त्येषु व्यतनोदात्मनो यशः ।। ११० ।।**

(२८४)परा मे यन्ति धीतयो गावो न गव्यूतीरनु ।
इच्छन्तीरुरुचक्षसम् ।। १६ ।।

**महाज्ञानं परेशानमिच्छन्त्यो मम धीतयः ।**
**सर्वतो यान्ति यद्वच्च गावः शृङ्गस्वराननु ।। १११ ।।**

(२८५)सं नु वोचावहै पुनर्यतो मे मध्वाभृतम् ।
होतेव क्षदसे प्रियम् ।। १७ ।।

**आपूर्णं मधु(आपूर्णमधु) मोक्षस्थं सुखं पचसि मेऽग्निवत् ।**
**तत् संवोचावहै भूयः प्रियस्त्वं मम यत् सदा ।। ११२ ।।**

(२८६)दर्शं नु विश्वदर्शतं दर्शं रथमधि क्षमि ।
एता जुषत मे गिरः ।। १८ ।।

**अदर्शं तं च सर्वज्ञं तद्रथं च भुवि स्थितम् ।**
**सु गिरो मे जुषत च(जुषतु च) ............ ।**

(२७८) नि षसाद धृतव्रतो वरुणः पस्त्या३स्वा ।
साम्राज्याय सुक्रतुः ॥ १० ॥ (॥ १७ ॥)

**साम्राज्याय स पस्त्यासु निषसाद प्रजासु च ।**
**सुज्ञानः ...................... ।**

(२७९) अतो विश्वान्यद्भुता चिकित्वाँ अभि पश्यति ।
कृतानि या च कर्त्वा ॥ ११ ॥

**.............. तत्र सन् विश्वान्यद्भुतानि च पश्यति ।**
**कर्ता चिकित्वान् स कृतकर्तव्यानि च पश्यति ॥ १०५ ॥**

(२८०) सनो विश्वाहा सुक्रतुरादित्यः सुपथा करत् ।
प्र ण आयूंषि तारिषत् ॥ १२ ॥

**विश्वान्यहानि नो देवः सुपथानि करोत्वसौ ।**
**ददात्वायूंषि नो नित्यं मुक्तौ वा ........ ।**

(२८१) बिभ्रद् द्रापिं हिरण्ययं वरुणो वस्त निर्णिजम् ।
परि स्पशो नि षेदिरे ॥ १३ ॥

**..................... अतिद्रुतभ्रमम् ॥ १०६ ॥**

**हितं च रमणीयं च चक्रं स्वर्णं च वर्णतः ।**
**अविभ्रच सुनिर्णिक्तं शुद्धं(शुभ्रं) वस्त्रमवस्त च ॥ १०७ ॥**

**अविज्ञातचरा देवाः स्पशस्तस्य निषेदिरे ।**
**परितो वरुणः पाशमबिभ्रद् द्रुतबन्धनम् ॥ १०८ ॥**

(२८२)न यं दिप्संन्ति दिप्सवो न द्रुह्वाणो जनानाम् ।
न देवमभिमातयः ।। १४ ।।

**स्तम्भयन्ति न यं वीराः स्तम्भका अपि राक्षसाः ।**
**जनानां(प्रजानां) द्रोहिणो दैत्याः शत्रवश्चाभिमातयः ।। १०९ ।।**

(२८३)उत यो मानुषेष्वा यशश्चक्रे असाम्या ।
अस्माकमुदरेष्वा ।। १५ ।। (।।१८।।)

**असमं च यशश्चक्रे योऽस्माकं हृदयेषु च ।**
**अमानुषेषु(आमनुष्येषु) चान्येषु समन्तादात्मनः सदा ।**
**अङ्गेष्वपि च मर्त्येषु व्यतनोदात्मनो यशः ।। ११० ।।**

(२८४)परा मे यन्ति धीतयो गावो न गव्यूतीरनु ।
इच्छन्तीरुरुचक्षसम् ।। १६ ।।

**महाज्ञानं परेशानमिच्छन्त्यो मम धीतयः ।**
**सर्वतो यान्ति यद्वच्च गावः शृङ्गस्वराननु ।। १११ ।।**

(२८५)सं नु वोचावहै पुनर्यतो मे मध्वाभृतम् ।
होतेव क्षदसे प्रियम् ।। १७ ।।

**आपूर्णं मधु(आपूर्णमधु) मोक्षस्थं सुखं पचसि मेऽग्निवत् ।**
**तत् संवोचावहै भूयः प्रियस्त्वं मम यत् सदा ।। ११२ ।।**

(२८६)दर्शं नु विश्वदर्शतं दर्शं रथमधि क्षमि ।
एता जुषत मे गिरः ।। १८ ।।

**अदर्शं तं च सर्वज्ञं तद्रथं च भुवि स्थितम् ।**
**सु गिरो मे जुषत च(जुषतु च) ............. ।**

(२८७)इमं मे वरुण श्रुधी हवमद्या च मृळय ।
त्वामवस्युरा चके ।। १९ ।।

...................... त्वाऽवनेप्सुरहं चके ।। ११३ ।।

पश्येयम् ............ ।

(२८८)त्वं विश्वस्य मेधिर दिवश्च ग्मश्च राजसि ।
स यामनि प्रति श्रुधि ।। २० ।।

त्वं(हि) च विश्वस्य राजा भवसि मेधिरः ।
मेधावान् ग्मः पृथिव्याश्च स काले च प्रति श्रुधि ।।

(२८९)उदुत्तमं मुमुग्धि नो वि पाशं मध्यमं चृत ।
अवाधमानि जीवसे ।। २१ ।। (।। १९ ।।)

स त्वं त्रिगुणपाशान्नो मुमुग्धि च्छिन्धि चाञ्जसा ।। ११४ ।।

## सूक्तम् - २६

(वसिष्वा दश, ऋषिः आजीगर्तिः शुनःशेपः । छन्दः गायत्री ।
देवता अग्निः ।)

(२९०)वसिष्वा हि मियेध्य वस्त्राण्यूर्जां पते ।
सेमं नो अध्वरं यज ।। १ ।।

अथ स्तौत्यग्निगं विष्णुमग्निमप्यग्निगोचरैः ।
वचनैः सर्वदेवानां पूजायै प्रोद्यतो भव(वा)न् ।। ११५ ।।

वसिष्वोत्तमवस्त्राणि भूषणैरप्यलङ्कुरु ।
कुर्वन्नुत्सवमत्यन्तमस्मदीयं मखं यज ॥ ११६ ॥

नित्यमेध्य हरे देव भोग्यान्नानां सदा पते(पते सदा) ।
ऊर्जितानां जनानां वा स्वस्मिन्नो अध्वरं यज ।
रमयत्यध्वनि शुभे येन तेनाध्वरो मखः ॥ ११७ ॥

(२९१)नि नो होता वरेण्यः सदा यविष्ठ मन्मभिः ।
अग्ने दिवित्मता वचः ॥ २ ॥

वचो नो निनयात्यन्तं दिवि व्याप्ततया सदा ।
अशेषदेवगत्वेन मन्मभिर्मतिभिः सह ।
अवमो दशदेवेषु वह्निर्विष्णुस्तु तत्स्थ(तेः)तः ॥ ११८ ॥

(२९२)आ हि ष्मा सूनवे पितापिर्यजत्यापये ।
सखा सख्ये वरेण्यः ॥ ३ ॥

सख्ये च सूनवे मह्यमायजत्येष देवताः ।
आपिः प्राप्यो मम स्वामी भृत्यत्वान्मह्यमापये ॥ ११९ ॥

(२९३)आ नो बर्ही रिशादसो वरुणो मित्रो अर्यमा ।
सीदन्तु मनुषो यथा ॥ ४ ॥

(२९४)पूर्व्य(र्य) होतरस्य नो मन्दस्व सख्यस्य च ।
इमा उ षु श्रुधी गिरः ॥ ५ ॥ (॥ २० ॥)

अस्य मेऽर्थे कुरु मदं स्वातन्त्र्यान्मादयस्व वा ॥

(२९५)यच्चिद्धि शश्वता तना देवंदेवं यजामहे ।
त्वे इद्धूयते हविः ॥ ६ ॥

**शश्वद् विस्तरतः सर्वान् यदा देवान् यजामहे ।**
**तदा त्व(थैव)य्येव हि हविर्हूयते .......... ।**

(२९६) प्रियो नो अस्तु विश्पतिर्होता मन्द्रो वरेण्यः ।
प्रियाः स्वग्नयो वयम् ।। ७ ।।

**................ स प्रियो भव ।। १२० ।।**

**मन्द्रो मदकरः ............. ।**

(२९७) स्वग्नयो हि वार्यं देवासो दधिरे च नः ।
स्वग्नयो मनामहे ।। ८ ।।

(२९८) अथा न उभयेषाममृत मर्त्यानाम् ।
मिथः सन्तु प्रशस्तयः ।। ९ ।।

**......... स्त्रीणां पुंसां चोभयवर्गिणाम् ।।**

(२९९) विश्वेभिरग्ने अग्निभिरिमं यज्ञमिदं वचः ।
चनो धाः सहसो यहो ।। १० ।। (।। २१ ।।)

**चनः सुखं धा अस्मासु वायोः पुत्रोऽग्निरेव चेत् ।। १२१ ।।**

**भगवान् वायुना व्यङ्ग्यः .............. ।**

## सूक्तम् - २७

(अश्वं न त्वा त्रयोदश, ऋषिः आजीगर्तिः शुनःशेपः । छन्दः १-१२ गायत्री, १३ त्रिष्टुम् । देवता १-१२ अग्निः, १३ देवाः । )

(३००)अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः ।
सम्राजन्तमध्वराणाम् ।। १ ।।

**.................. वारवान् बडवामुखः ।**
**स्वदृष्टान्तो हरेर्यस्माद् विष्णुः स बडबा(वडवा)मुखः ।। १२२ ।।**

(३०१)स घा नः सूनुः शवसा पृथुप्रगामा सुशेवः ।
मीढ्वाँ अस्माकं बभूयात् ।। २ ।।

**सूनुः स शवसो वायोः पृथुज्ञानः सुशेवकृत् ।**
**सुखकृन्नो भवेन्मीढ्वान् स्वामी नः सूनुरेव वा ।**
**व्यङ्ग्यत्वाद् वायुना सार्द्धं सुशेवः सुसुखात्मकः ।। १२३ ।।**

(३०२)स नो दूराच्चासाच्च नि मर्त्यादघायोः ।
पाहि सदमिद्विश्वायुः ।। ३ ।।

**आसात् समीपतश्चास्मानघार्थायोर्निपाहि च ।**
**प्रतिप्रति सदो नित्यो विश्वायुः ....... ।**

(३०३)इममू षु त्वमस्माकं सनिं गायत्रं नव्यांसम् ।
अग्ने देवेषु प्र वोचः ।। ४ ।।

**........... त्वमिमां स्तुतिम् ।। १२४ ।।**

**सनिं दानस्वरूपां च गाय(त्र)त्रीच्छन्दआत्मिकाम् ।**
**नव्यांसं स्तुतिषु श्रेष्ठां वद देवेषु सादरम् ।। १२५ ।।**

(३०४)आ नों भज परमेष्वा वाजेषु मध्यमेषु ।
शिक्षा वस्वो अन्तमस्य ।। ५ ।। (।। २२ ।।)

उत्तमाधममध्येषु भोगेष्वस्मानवाप्नुहि ।
रक्षकत्वेन शिक्षास्मान् ज्ञानवस्वर्थमेन च ।
अन्ते मोक्षे मितत्वेन ज्ञानमन्तममुच्यते ।। १२६ ।।

(३०५)विभक्तासि चित्रभानो सिन्धोरूर्मा उपाक आ ।
सद्यो दाशुषे क्षरसि ।। ६ ।।

क्षीराब्ध्यूर्मिसमीपस्थो मुक्तभोगविभागदः ।
यजमानाय सद्यश्च क्षरस्यखिलमीप्सितम् ।
नित्यमुत्तमतेजस्त्वाच्चित्रभानुर्हरिः स्मृतः ।। १२७ ।।

(३०६)यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः ।
स यन्ता शश्वतीरिषः ।। ७ ।।

यं मर्त्यं रक्षसि विभो यं युत्सु प्रेरयस्यपि ।
ज्ञानाज्ञानात्मकेष्वेव स गन्ता नित्यसत्सुखम् ।
भोगान् वा मुक्तिगान् नित्यानिह चेदुपचारतः ।। १२८ ।।

(३०७)नकिरस्य सहन्त्य पर्येता कयस्य चित् ।
वाजो अस्ति श्रवाय्यः ।। ८ ।।

परिपूर्णोऽस्य नैवास्ति त्वदीयस्य (च)तु कस्यचित् ।
भोगोऽपि बहुलो यस्माद् दित्सस्येव पुनःपुनः ।। १२९ ।।

सहन्त्यः सन्ततबलः सहसः पुत्र एव वा ।
श्रवाय्यः श्रवणीयश्च सुप्रसिद्धतमोऽपि वा ।। १३० ।।

(३०८)स वाजं विश्वचर्षणिरर्वद्भिरस्तु तरुता ।
विप्रेभिरस्तु सनिता ।। ९ ।।

वाजं तारयिताऽऽनेता सोऽर्वद्भिर्गोसमाश्रितः ।
त्वदीयस्तु भवेद् विप्रैर्दाता विपुलदानतः ।। १३१ ।।

युद्धस्य तारकोऽन्नस्य दाता भोगस्य वा भवेत् ।
इन्द्रियैस्तमसा युद्धं तरुता(युद्धतरुता) ज्ञानदोऽथवा ।। १३२ ।।

(३०९)जराबोध तद्विविड्ढि विशेविशे यज्ञियाय ।
स्तोमं रुद्राय दृशीकम् ।। १० ।। (।।२३।।)

स्तुतिबोद्धा यतस्तां त्वमवधारय सर्वदा ।
नित्यज्ञानोऽपि दत्त्वा तत्फलं वेत्तेति कथ्यते ।
रुजां विद्रावकेशाय प्रत्य(क्षं)क्षां तव वा स्तुतिम् ।। १३३ ।।

(३१०)स नो महाँ अनिमानो धूमकेतुः पुरुश्चन्द्रः ।
धिये वाजाय हिन्वतु ।। ११ ।।

नितराममितत्वेन महान् पुरुसुखश्च सः ।
धूत्करोति गरुत्मान् यद्धरेश्चेद् धूमकेतुता ।
ताच्छील्ये म इति ह्यस्मात् सूत्राद् धूम इतीरितः ।। १३४ ।।

ज्ञानायान्नाय च स नः प्रहिणोतु सुकर्मणाम् ।।

(३११)स रेवाँ इव विश्पतिर्दैव्यः केतुः शृणोतु नः ।
उक्थैरग्निर्बृहद्भानुः ।। १२ ।।

देवानां केतुभूतोऽसौ वित्तवान् विश्पतिर्यथा ।
अस्मदीयानि चोक्थानि बृहत्तेजाः शृणोत्वथ ।। १२५ ।।

(३१२)नमो॑ म॒हद्भ्यो॒ नमो॑ अर्भ॒केभ्यो॒ नामो॒ युव॑भ्यो॒
नम॑ आशि॒नेभ्यः॑ ॥
यजा॑म दे॒वान्यदि॑ श॒क्नवा॑म॒ मा ज्याय॑सः॒ शंसा॒मा
वृ॑क्षि देवाः ॥ १३ ॥ (॥ २४ ॥)

**नारायणब्रह्मपुरस्सरास्तु देवा महान्तः शिशवः स्कन्दपूर्वाः ।**
**वटुस्वरूपाश्च त एव कुत्रचिद् युवान इन्द्रादय एत एव च ।**
**॥ १३६ ॥**

**महत्त्वमेषां गुणतोऽपि यूनामिन्द्रादयो मध्यगुणा युवानः ।**
**आपेक्षिकाल्पैश्च गुणैस्तदीयैः समीरिता आशिना अर्भकाश्च ।**
**कृतं नमः शक्तिमन्तो यजाम न ज्यायसां स्तुतिमात्रं लुपामः ।**
**॥ १३७ ॥**

**एकस्य विष्णोरपि रूपभेदा अणीयांसः सन्त्यथवा महान्तः ।**
**युवत्वसाम्येऽपि महत्त्वभेदाद् युवा महानित्यपि भेद उक्तः ।**
**॥ १३८ ॥**

## सूक्तम् - २८

(यत्र ग्रावा नव, ऋषिः आजीगर्तिः शुनःशेपः स कृत्रिमो विश्वामित्रो देवरातः । छन्दः १-६ अनुष्टुप्, ७-९ गायत्री । देवता १-४ इन्द्रः, ५-६ उलूखलः, ७-८ फलकौ, ९ सोमः ।)

(३१३)यत्र॒ ग्रावा॑ पृ॒थुबु॑ध्न ऊ॒र्ध्वो भव॑ति॒ सोत॑वे ।
उ॒लूख॑लसुताना॒मवे॒द्विन्द्र जल्गुलः ॥ १ ॥

**विस्तीर्णाधस्तना यत्र ग्रावाणोऽभिषवोद्धृताः ।**
**धिषणाभिषुतान् सोमानव नः स्वीकृतस्तुते ।**
**गुरु स्वीकार इत्यस्माद् धातोः स्तुत्यो हि जल्गुलः ॥ १३९ ॥**

(३१४)यत्र द्वाविव जघनाधिषवण्या कृता ।
उलूखलसुतानामवेद्विन्द्र जल्गुलः ॥ २ ॥

**फलकेऽभिषवस्यैव स्त्रियो जघनसाम्यतः ।**
**प्रोक्ते ................. ।**

(३१५)यत्र नार्यपच्यवमुपच्यवं च शिक्षते ।
उलूखलसुतानामवेद्विन्द्र जल्गुलः ॥ ३ ॥

**......... उपच्यवश्चापच्यवः सङ्गतिभेदतः ॥ १४० ॥**

**जिह्वा ग्रावाऽथ वाग्युक्तिरुच्यतेऽभिषवस्तथा ।**
**खलश्चोरुस्तथा देहः सोमो मन इतीरितः ।**
**ज्ञानोत्पत्तौ च फलकस्थाने ओष्ठे उदीरिते ॥ १४१ ॥**

(३१६)यत्र मन्थां विबध्नते रश्मीन् यमितवाइव ।
उलूखलसुतानामवेद्विन्द्र जल्गुलः ॥ ४ ॥

**मन्थरश्मीनश्वरश्मीन् यथा यत्र निबध्नते ।**
**रश्मयोऽन्यत्र नाड्यश्च ........... ।**

(३१७)यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे ।
इह द्युमत्तमं वद जयतामिव दुन्दुभिः ॥ ५ ॥
(॥ २९ ॥)

............. यस्माद् युक्तो गृहे गृहे ।
देहे देहेऽथवा तेन द्युमद्दुन्दुभिमद् वद ॥ १४२ ॥

पृथिवी देवता तस्य तद्गतो वा स्वयं हरिः ।
सोमामात्योऽपरो देवो वनस्पतिरितीरितः ॥ १४३ ॥

सोमो वा तद्गविष्णुर्वा श्रुतः फलकदेवता ।
वृक्षाणामपि सर्वेषामतः ............... ।

(३१८) उत स्मं ते वनस्पते वातो वि वात्यग्रमित् ।
अथो इन्द्राय पातवे सुनु सोममुलूखल ॥ ६ ॥

.................... वृक्षाग्र एव तु ॥ १४४ ॥

वायुर्वाति वनानां वा भजनीयदिवौकसाम् ।
पतिर्विष्णुस्तु तस्याग्रे वायुर्देवो हि गच्छति ।
पातवे स्वस्य सोमं वा मनो वा सुनु विष्णवे ॥ १४५ ॥

(३१९) आयजी वाजसातमा ता ह्यु १ च्चा विजर्भृतः ।
हरी इवान्धांसि वप्संता ॥ ७ ॥

आयाज्यावन्नलब्धृणामुत्तमावतिभक्षकौ ।
जह भक्षण इत्यस्माद् यथाऽश्वावन्नभक्षकौ ॥ १४६ ॥

सोमस्य भक्षकावत्र ............. ।

(३२०) ता नो अद्य वनस्पती ऋष्वावृष्वेभिः सोतृभिः ।
इन्द्राय मधुमत्सुतम् ॥ ८ ॥

.................. ऋष्वावतिमहत्तरौ ।
महद्भिः सोतृभिः सोममिन्द्राय मधुमत् सुतम् ॥ १४७ ॥

(३२१)उच्छिष्टं चम्वोर्भर सोमं पवित्र आ सृज ।
नि धेहि गोरधि त्वचि ॥ ९ ॥ (॥ २६ ॥)

सोममुत्पवनायैतं द्रोणोपरिपवित्रके ।
भर शिष्टं चमसयोर् ऋजीषं गोरधित्वचि ।
भरेत्यात्मानमेवाऽह स्वान्तर्यामिणमेव वा ॥ १४८ ॥

शिरोभेदौ(च) तु चमसौ द्रोणं चोदरमीरितम् ।
पवित्रं बुद्धिरेवात्र मनःशुद्धिस्तया यतः ॥ १४९ ॥

मुखचर्मैव गोचर्म मन एतेषु विष्णवि ।
धार्यम् ............................ ।

## सूक्तम् - २९

(यच्चिद्धि सप्त, ऋषिः शुनःशेपः आजीगर्तिः । छन्दः पङ्क्तिः ।
देवता इन्द्रः ।)

(३२२)यच्चिद्धि सत्य सोमपा अनाशस्ता इव स्मसि ।
आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु
तुवीमघ ॥ १ ॥

.......... यत्सद्गुणाशस्ता इव स्मसि वयं ततः ।
शुभ्रवाङ्मनआदीनां विषयेऽस्मान् प्रशंसय ॥ १५० ॥

बहुवाच्यज्ञेययुक्तान् कृत्वाऽस्मांस्त्वं महामख ॥

(३२३) शिप्रिन्वाजानां पते शचीवस्तव दंसना ।
आ ............... तुवीमघ ॥ २ ॥

सुखिन्नन्नपते वाग्ज्ञ तव कर्माणि सर्वशः ॥ १५१ ॥

(३२४) नि ष्वापया मिथूदृशा सस्तामबुध्यमाने ।
आ ............... तुवीमघ ॥ ३ ॥

दैत्यरक्षःप्रजे मिथ्यादृशौ सस्तां पुनर्बहु ।
अबुद्ध्यमाने नित्यं च यथा निष्वापयेश्वर ॥ १५२ ॥

(३२५) ससन्तु त्या अरातयो बोधन्तु शूर रातयः ।
आ ............... तुवीमघ ॥ ४ ॥

स्वपन्तु ते शत्रवस्ते सर्वदाऽज्ञानमोहिताः ।
बोधन्तु चैव मित्राणि तव रूपं सुनिर्भयम् ॥ १५३ ॥

(३२६) समिन्द्र गर्दभं मृण नुवन्तं पापयामुया ।
आ ............... तुवीमघ ॥ ५ ॥

पापया मायया मिथ्या स्तुवन्तं त्वामपि प्रभो ।
मायामयास्तव गुणा न सन्ति परमार्थतः ॥

इति नित्यं रुवन्तं च मायावाद्याख्यगर्दभम् ।
सञ्चूर्णय तमस्येव क्षिप्त्वा तप्ताश्मभिः सदा ॥ १५४, १५५ ॥

(३२७) पताति कुण्डृणाच्या दूरं वातो वनादधि ।
आ ............... तुवीमघ ॥ ६ ॥

दूरं च पातयत्वेनान् वायुस्तस्मिंस्तमस्यधः ।
वनं दृढग्रहेणैव तत् तमो वेदनोल्व(णम्)णा ।
कुण्डृणाचीति सम्प्रोक्ता कुण्डान्नीचत्वतोऽधिकम् ॥ १५६ ॥

कुम्भः कुण्डाभिधः कुम्भीपाकान्नीचा हि तद्गतिः ।
रेफः स्वरव्यत्ययश्च तदाधिक्यार्थमीरितौ ॥ १५७ ॥

(३२८)सर्वं परिक्रोशं जहि जम्भया कृकदाश्वम् ।
आ ............... तुवीमघ ॥७॥ (॥२७॥)

सर्वं परिक्रोशकरं पापिनं जहि जम्भय ।
दंशय श्वादिभिर्नित्यं क्रकचैर्दंशनं यथा ॥ १५८ ॥

## सूक्तम् - ३०

(आ व इन्द्रं द्वाविंशतिः, ऋषिः शुनःशेपः आजीगर्तिः स कृत्रिमो वैश्वामित्रो देवरातः । छन्दः १-१०, १२-१५, १७-२२ गायत्री, ११ पादनिचृद्गायत्री, १६ त्रिष्टुप् । देतवा १-१६ इन्द्रः, १७-१९ अश्विनौ, २०-२२ उषाः ।)

(३२९)आ व इन्द्रं क्रिविं यथा वाजयन्तः शतक्रतुम् ।
मंहिष्ठं सिञ्च इन्दुभिः ॥ १ ॥

हे वाजयन्तो युद्ध्यन्तो देवा भोगिन एव वा ।
सोमैर्व इन्द्रमासिञ्चे क्रिविं यद्वन्नृपं कृतेः ।
कर्तारमीशमिव वा स्वदृष्टान्तो हरेर्भवेत् ॥ १५९ ॥

(३३०)शतं वा यः शुचीनां सहस्रं वा समाशिराम् ।
एदु निम्नं न रीयते ।। २ ।।

**शतेन वा सहस्रेण सोमानामाशिरावताम् ।**
**पाता(ळ)ल इव नैवायं निलीनो भवति क्वचित् ।। १६० ।।**

**विलापयति तानेव ........... ।**

(३३१)सं यन्मदाय शुष्मिणं एना ह्यस्योदरे ।
समुद्रो न व्यचो दधे ।। ३ ।।

**.............. बलिनेऽस्मै मदाय च ।**
**सन्दधुर्नैव विश्वानि व्यक्तीरस्योदरे क्वचित् ।**
**समुद्रेकात् समुद्राख्या प्रकृतिश्च महत्त्वतः ।। १६१ ।।**

(३३२)अयमु ते समतसि कपोत इव गर्भधिम् ।
वचस्तच्चिन्न ओहसे ।। ४ ।।

**तवैवायं प्रपञ्चश्च कपोतो गर्भधिं यथा ।**
**सम्यग् व्याप्नोषि विश्वं च तस्मान्नो वच ओहसे ।। १६२ ।।**

(३३३)स्तोत्रं राधानां पते गिर्वाहो वीर यस्य ते ।
विभूतिरस्तु सूनृता ।। ५ ।। ( ।। २८ ।।)

**गिरां वाहक ते स्तोत्रमखिलं वेदवैदिकम् ।**
**सूनृता वागियं मे च विभूतिरिति कल्प्यताम् ।**
**अस्त्वित्येतत् प्रसादेन फलदानादुदीर्यते ।। १६३ ।।**

(३३४)ऊर्ध्वस्तिष्ठा न ऊतयेऽस्मिन् वाजे शतक्रतो ।
समन्येषु ब्रवावहै ।। ६ ।।

उत्तमः सन्नत्र युद्धे ज्ञानाज्ञानमये विभो ।
अभिप्रेतार्थसिद्ध्यर्थमस्माकं तिष्ठ सर्वदा ॥ १६४ ॥

मत्स्थितस्त्वमहं चैव त्वामन्येषु ब्रवावहे ॥

(३३५) योगेयोगे तवस्तरं वाजेवाजे हवामहे ।
सखाय इन्द्रमूतये ॥ ७ ॥

तेजस्वितममिन्द्रं तं योगे योगे हवामहे ॥ १६५ ॥

(३३६) आ घा गमद्यदि श्रवत्सहस्रिणीभिरूतिभिः ।
वाजेभिरुप नो हवम् ॥ ८ ॥

उक्तं चेत् स शृणोत्येव श्रुतं चेदागमिष्यति ।
बह्वर्थयुक्ताभिप्रायैरन्नैरप्युप नो हवम् ॥ १६६ ॥

(३३७) अनु प्रत्नस्यौकसो हुवे तुविप्रतिं नरम् ।
यं ते पूर्वं पिता हुवे ॥ ९ ॥

पुरातनस्य विष्णोस्तदोकसोऽर्थे ह्वये हरिम् ।
महान् प्रति प्रतिस्थश्च तुविप्रतिरितीरितः ॥ १६७ ॥

यं त्वां पूर्वं पिता ज्ञात्वैवाऽह्वयामास विश्वकृत् ।
त्वद्भक्त इति वा ब्रह्मा .......... ।

(३३८) तं त्वा वयं विश्ववाराऽऽशास्महे पुरुहूत ।
सखे वसो जरितृभ्यः ॥ १० ॥ (॥ २९ ॥)

............... तं त्वामाशास्महे वयम् ॥ १६८ ॥

(३३९)अस्माकं शिप्रिणीनां सोमपाः सोमपाव्नाम् ।
सखे वज्रिन्त्सखीनाम् ।। ११ ।।

**अस्माकं सुखिनां सोमपातृणाम् .......... ।**

(३४०)तथा तदस्तु सोमपाः सखे वज्रिन् तथा कृणु ।
यथा त उश्मसीष्टये ।। १२ ।।

**................ अस्तु तत् तथा ।**
**ते सकाशाद् यथेच्छामः प्राप्तुं देव तथा कृणु ।। १६९ ।।**

**वज्रो ज्ञानं वज(वर्ज) गतावित्यस्मात् .......... ।**

(३४१)रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः ।
क्षुमन्तो याभिर्मदेम ।। १३ ।।

**.......................... वित्तसंयुताः ।**
**रेवतीः पशवः प्रोक्ताः सधमादे सुखस्थितौ ।। १७० ।।**

**तुविवाजा महान्नानि क्षुमन्तः स्थितिसंयुताः ।**
**ज्ञानयुक्तं सुखं वा स्यात् सतीशेऽस्माकमूर्जितम् ।। १७१ ।।**

(३४२)आ घ त्वावान् त्मनाप्तः तोतृभ्यो धृष्णवियानः ।
ऋणोरक्षं न चक्र्योः ।। १४ ।।

**त्वद्वांस्त्वयैव चाप्तः स्यात् स्तोतृणामा समन्ततः ।**
**इयानो गम्यमानस्तै रणतोश्चक्रयोर्यथा ।। १७२ ।।**

**अक्षमाश्रयभावेन .............. ।**

(३४३)आ यद्दुवः शतक्रतवा कामं जरितॄणाम् ।
ऋणोरक्षं न शचीभिः ।। १९ ।। (।। ३० ।।)

................ **स्तोतृणां काममादुहः ।**
**आ समन्तात् स्थितं काममत्याधिक्ये पृथक् पदम् ।। १७३ ।।**

(३४४)शश्वदिन्द्रः पोप्रुथद्भिर्जिगाय नानदद्भिः
शाश्वसद्भिर्धनानि ।
स नो हिरण्यरथं दंसनावान्त्स नः सनिता
सनये स नोऽदात् ।। १६ ।।

**क्रोधाच्छ्वसद्भिः प्रथयद्भिरात्मवीर्यं सुरैः शश्वदिन्द्रो जिगाय ।**
**धनानि नः स्वर्णरथं च दाता लब्धा प्रादाल्लाभकृते च**
**नोऽखिलम् ।। १७४ ।।**

(३४५)आश्विनावश्वावत्येषा यातं शवीरया ।
गोमद्दस्रा हिरण्यवत् ।। १७ ।।

**गोमद्धिरण्यवच्च स्याद् यथाऽऽयातं तथैव नः ।**
**सुखपुत्रयुजा चाश्ववत्येषा शं सुखं यतः ।। १७५ ।।**

**इडैश्वर्यं तथा वीरं वीर्यं खान्यश्वनामतः ।**
**गौर्वाग् हितं च रमणं परं ब्रह्म गुणोच्छ्रितम् ।। १७६ ।।**

(३४६)समानयोजनो हि वां रथो दस्रावमर्त्यः ।
समुद्रे अश्विनेयते ।। १८ ।।

**समानयोगयुक्तोऽयं रथो देह(स्त)स्त्वदात्मनाम् ।**
**चित्सुखत्वादमर्त्यश्च ज्ञायते क्षीरसागरे ।**
**मोक्षस्य यावता प्राप्तिः समानो योग उच्यते ।। १७७ ।।**

(३४७)न्य १ द्यस्यं मूर्द्धनि चक्र रथस्य येमथुः ।
परि द्यामन्यदीयते ।। १९ ।।

एकं चक्रं गिरेर्मूर्ध्नि नियतं दिवि चापरम् ।
पापं चक्रं हरिघ्न्यस्य पुण्यं दिव्यस्य चोपरि ।। १७८ ।।

(३४८)कस्त उषः कधप्रिये भुजे मर्तो अमर्त्ये ।
कं नक्षसे विभावरि ।। २० ।।

को मर्त्यस्तव भोगाय यतः सर्वप्रियो भवान् ।
किमपि प्रियमस्येति पूर्णानन्दात् कधप्रियः ।। १७९।।

आप्तकामत्वतः कं च गच्छसि स्वार्थहेतुतः ।
विशेषाद् भावृतेर्विष्णुः कथित(स्तु)श्च विभावरी ।। १८० ।।

(३४९)वयं हि ते अमन्महयाऽन्तादा पराकात् ।
अश्वे न चित्रे अरुषि ।। २१ ।।

चिन्तयामस्तवैकस्य विश्वमान्तपराकयोः ।
पराकः सुसुखैव श्रीरन्तः कलिरुदाहृतः ।। १८१ ।।

नरकस्वर्गयोरेव देव्युषा उदिता यदा ।
जात्यश्ववत् सदा भद्रे चा(वा)रुणे ………… ।

(३५०)त्वं त्येभिरा गहि वाजेभिर्दुहितर्दिवः ।
अस्मे रयिं नि धारय ।। २२ ।। (।। ३१ ।।)

………………… प्राणवाक्सुते ।
तद्व्यङ्गत्वाद्धरिश्चैव दिवः पुत्र उदाहृतः ।। १८२ ।।

**अग्नीन्द्रादिगतं पृथक्स्थितमपि स्तौत्यच्युतं भक्तितः**
**स्वर्णस्तूप इति प्रसिद्धिमगमद् यः संस्तुवन् सूर्यगम् ।**
**विष्णुं स्वर्णसमानचारुवपुषं स्वर्णाभिधं शाश्वतं**
**तं(यं) दृष्ट्वा प(व)रतोऽभवच्च महितः सुज्ञानमप्याप्तवान् ।**
**॥ १८३ ॥**

## सूक्तम् - ३१

(त्वमग्ने अष्टादश, ऋषिः हिरण्यस्तूपः आङ्गिरसः । छन्दः १-७, ९-१५, १७, जगती, ८, १६, १८ त्रिष्टुप् । देवता अग्निः ।)

(३५१)त्वमग्ने प्रथमो अङ्गिरा ऋषिर्देवो देवानामभवः शिवः सखा ।
तव व्रते कवयो विद्मनापसोऽजायन्त मरुतो भ्राजदृष्टयः ॥ १ ॥

**अङ्गे रसो ज्ञानत एव चर्षिः सखा प्रियत्वेन दिवौकसां हरिः ।**
**तव व्रतेनैव सविद्यकर्मिणो महाविज्ञाना मरुतो बभूविरे ॥१८४॥**

(३५२)त्वमग्ने प्रथमो अङ्गिरस्तमः कविर्देवानां परि भूषसि व्रतम् ।
विभुर्विश्वस्मै भुवनाय मेधिरो द्विमाता शयुः कतिधा चिदायवे ॥ २ ॥

**व्यापी च विश्वस्य सुमेधया युतो जडाजडे वेत्ति तथाऽब्धिशायी ।**
**कतिप्रकारोऽपि स हि प्रजायै स्वामी गुरुर्नित्यसखा पिता च ।**
**॥ १८५ ॥**

(३५३)त्वमग्ने प्रथमो मातरिश्वन आविर्भव सुक्रतूया विवस्वते ।
अरेजेतां रोदसी होतृवूर्येऽसघ्नोर्भारमयजो महो वसो ॥ ३ ॥

त्वं विष्णो प्रथमो मातरिश्वन आविर्बभूवास्य सुबोधवत्त्वात् ।
वायुर्विवस्वान् विविधेषु वासादशोमेतां श्रीश्च भूः सर्वहोतुः ।
वरत्वतस्ते रदनाद् रोदसी ते सैका हि दीर्णा द्विविधा बभूव ।
॥ १८६ ॥

सहन्तेऽमुं नैव केचिद्ध्यसघ्नुर्वायुर्विरिश्चोऽपि महांश्च तस्मै ।
वि(श्वाख्य)श्वस्य भारं प्रति दिष्टवांस्त्वं वासाच्च सर्वत्र वसुर्भवानसि ॥ १८७ ॥

(३५४)त्वमग्ने मनवे द्यामवाशयः पुरूरवसे सुकृते सुकृत्तरः ।
श्वात्रेण यत्पित्रोर्मुच्यसे पर्याऽऽत्वापूर्वमनयन्नापरं पुनः ॥ ४ ॥

विशिष्टबोधान्मनवे वायवे त्वं (प्रादा दिवं)प्रादात् दिवं ज्ञानरूपां प्रियां च ।
यथा तदीयेति तु वाशनं स्याल्लोकस्य सर्वस्य तथैव देव॥१८८॥

पुरूरवा वायुरेवोरुशब्दादन्यस्मै वा सुकृते सुकृत्तरः ।
श्वा वै वायुः श्वसनात् त्राणतोऽस्य नित्यं मुक्तः प्रकृतेः पूरुषाच्च।
तेनैव त्वामानयन् पूर्वसन्तो नीतं पुनाश्चाप्यपरे सुभक्त्या ।
॥ १८९ ॥

(३५५)त्वमग्ने वृषभः पुष्टिवर्धन उद्यतस्रुचे भवसि श्रवाय्यः ।
य आहुतिं परि वेदा वषट्कृतिमेकायुरग्रे विश आविवासिस ॥ ५ ॥ ( ॥ ३२ ॥)

**श्रोतव्यस्त्वं यजमानेन नित्यं नित्यायुरग्रे जन(ता)ताः प्रविष्टः ।**
**ऐश्वर्याद्याः षड्गुणा (नित्यवृत्ताः)यत्र वृत्ताः वषट्कारस्यार्थ इत्याह वेदः ॥ १९० ॥**

(३५६)त्वमग्ने वृजिनवर्तनिं नरं सक्मन्पिपर्षि विदथे विचर्षणे ।
यः शूरसाता परितक्म्ये धने दभ्रेभिश्चित्समृता हंसि भूयसः ॥ ६ ॥

**सद्विद्याख्ये विदथे सम्प्रजाते पापाचारं पुरुषं वा पिपर्षि ।**
**सक्मन्(सद्मन्) गृहे स्वे विविधप्रजेशो विचर्षणिः शूरसातौ च युद्धे ॥ १९१ ॥**

**सातिर्लाभे यत् परितक्म्येऽधिगम्ये दभ्रा अपि त्वां शरणं यदि स्म ।**
**ऋता गतास्तत्र हि भूयसोऽपि तैर्हंसि शक्त्या सङ्घया वाऽप्रयत्नात् ॥ १९२ ॥**

(३५७)त्वं तमग्ने अमृतत्व उत्तमे मर्तं दधासि श्रवसे दिवेदिवे ।
यस्तातृषाण उभयाय जन्मने मयः कृणोषि प्रय आ च सूरये ॥ ७ ॥

**दिने दिने तत्स्तुतिं श्रोतुकाम(स्तं)स्तव स्तोतारममृतत्वे दधासि । प्रीत्याधिक्यात् ततृषाणो मनुष्यदेवोभयेषां सुखमातनोषि । आ समन्ताज्ज्ञानिने तत्र नित्यं प्रियं मोक्षाख्यं ततृषाणो विशेषात् ।। १९३ ।।**

(३५८)त्वं नो अग्ने सनये धनानां यशसं कारुं कृणुहि स्तवानः ।
ऋध्याम कर्मापसा नवेन देवैर्द्यावापृथिवी प्रावतं नः ।। ८ ।।

**प्रज्ञाधनानां लब्धये नः कृधि त्वं यशस्विनं कारिणं ज्ञानदं च । कर्ताऽऽपरोक्ष्यं यावदुपासनादीन् कारुस्तेन प्रोच्यते तत्त्वदर्शी । संस्तूयमानः कर्मणा नूतनेन समृद्धिं च प्राप्नुमः प्राक्तनस्य । ।। १९४ ।।**

(३५९)त्व नो अग्ने पित्रोरुपस्थ आ देवो देवेष्वनद्य जागृविः ।
तनूकृद्बोधि प्रमतिश्च कारवे त्वं कल्याण वसु विश्वमोपिषे ।। ९ ।।

**त्वं नः पित्रोः प्रकृतेः पूरुषस्य समीपस्थस्तन्नियन्ता सदैव । देवेषु त्वं जागृविर्नित्यवेत्ता तनू कृन्नो बोधय प्राज्ञवर्यः ।।१९५।।**

**विश्वं वसु प्रार्पयसे च कारवे ............ ।**

(३६०)त्वमग्ने प्रमतिस्त्वं पितासि नस्त्वं वयस्कृत्तव जामयो वयम् ।

सं त्वा रायः शतिनः सं सहस्रिणः सुवीरं
यन्ति व्रतपामदाभ्य ।। १० ।। (३३ ।।)

......... आयुष्करो भ्रातरस्ते वयं च ।
देहे त्वेकस्मिन् गर्भवद् वासतश्च भ्राताऽस्य जीवः परमस्य
नित्यम् ।। १९६ ।।

(३६१)त्वामग्ने प्रथममायुमायवे देवा अकृण्वन् नहुषस्य
विश्पतिम् ।
इळामकृण्वन्मनुषस्य शासनीं पितुर्यत्पुत्रो
ममकस्य जायते ।। ११ ।।

आयो राज्ञो हृदये प्रेरकत्वादायोरायुर्नहुषस्याधिपश्च ।
चक्रुर्देवा देहसृष्ट्यैव तस्य यन्नामान्तर्यामिणो जीवगं च ।
नामार्थभाग् वासुदेवो हि शक्त्या तेन ह्यायुः प्रथमोऽसाविहोक्तः
।। १९७ ।।

मनुर्नाम्ना मनुषस्तस्य चेळा पुत्री नामास्या अपि विष्णोः सदैव।
इळेड्यत्वादुपजीव्यत्वतश्च स एवाऽयुरयनाज्ज्ञानतश्च ।। १९८ ।।

तच्छासकत्वाच्छासनी मानवीळा तच्छासकत्वाच्छासनी
वासुदेवः ।
ममत्वकर्तुर्हि पितुः स पुत्रः स्वातन्त्र्यं च ममता नान्यदस्ति ।
।। १९९ ।।

(३६२)त्वं नो अग्ने तव देव पायुभिर्मघोनो रक्ष
तन्वश्च वन्द्य ।

त्राता तोकस्य तनये गवामस्यनिमेषं
रक्षमाणस्तव व्रते ।। १२ ।।

त्वं नो मघोनो यजमानस्य तन्वस्तवैव रक्षाशक्तिभी रक्ष देव ।
चशब्देन ज्ञानभक्त्यादिकं च सदाऽस्माकं यजमानस्य चाद्धा ।
।। २०० ।।

त्राता तोकस्य पुत्रस्य च त्वं सन्ततित्वात् तनयस्यास्य सूनोः ।
गवां च त्वं रक्षिता ज्ञानसौख्यवाचां वाऽद्धैवानिमे(षं)षान्
सुरांश्च ।। २०१ ।।

संरक्षमाणस्त्वद्व्रते तैः प्रवृत्ते ....... ।

(३६३)त्वमग्ने यज्यवे पायुरन्तरोऽनिषङ्गाय चतुरक्ष
इध्यसे ।
यो रातहव्योऽवृकाय धायसे कीरेश्चिन्मन्त्रं
मनसा वनोषि तम् ।। १३ ।।

............. यज्योश्च त्वं पालको (ऽभ्यन्तरश्च)ह्यन्तरश्च ।
नितरां यः सङ्गहीनोऽनिषङ्गस्तस्मै भक्त्या दीप्यसे ज्ञानादृष्ट्या ।
।। २०२ ।।

द्विशीर्षत्वाच्चतुरक्षोऽधियज्ञो 'द्वे शीर्षे' इति वागुत्तरत्र ।
यो दत्तहव्यस्तेऽतिसौम्याय पीत्यै कर्तुर्मन्त्रं सम्भजसे हि तस्य ।
।। २०३ ।।

(३६४)त्वमग्न उरुशंसाय वाघते स्पार्हं यद्रेक्णः परमं
वनोषि तत् ।

आध्रस्यं चित्प्रमंतिरुच्यसे पिता प्र पाकं शास्सि
प्र दिशो विदुष्टरः ।। १४ ।।

**महास्तोत्राय वदते स्पार्हमिष्टं रेक्णः सुखं परमं तद् ददासि ।**
**आ समन्ताद् धारकस्यापि वायोः प्रज्ञानदः प्रोच्यसे त्वं पिता च।**
**प्रशास्सि त्वं परिपक्काधिकारं प्रदेशकत्वादखिलं त्वं सुवेत्ता**
**।। २०४ ।।**

(३६५)त्वमंग्ने प्रयंतदक्षिणं नरं वर्मेव स्यूतं परिं
पासि विश्वतः ।
स्वादुक्षद्मा यो वंसतौ स्योनकृज्जीवयाजं यजंते
सोपमा दिवः ।। १५ ।। (।। ३४ ।।)

**धृतं वर्मेव परिपासि नित्यं प्रयत्नाद् यो दक्षिणादो मखेषु ।**
**स्वादुक्षद्मा सुखगेहो गृहे च स्योनं सुखं यः परेषां करोति ।**
**।। २०५ ।।**

**यावज्जीवं यजने सुप्रतिज्ञो भूत्वा च यो यजते तस्य सैव ।**
**द्युप्राप्तिभावे ह्युपमा देह एव क्षमेति वा वसतिर्ज्ञानमार्गे।।२०६।।**

(३६६) इमामंग्ने शरणिं मीमृषो न इममध्वांनं यमगांम
दूरात् ।
आपिः पिता प्रमंतिः सोम्यानां
भृमिंरस्यृषिकृन्मर्त्यांनाम् ।। १६ ।।

**या मे भवच्छरणप्राप्तिरेषा मर्षस्व तामल्प इति क्रुधो मा ।**
**त्वत्प्राप्त्यर्थं दूरमगां च यत् तत् प्राप्यः पिता ज्ञानदो देवतानाम् ।**
**त्वं भ्रामको मानुषाणामृषीणां कर्ता तथा ज्ञानदानेन देव ।**
**।। २०७ ।।**

(३६७) मनुष्वदंग्ने अङ्गिरस्वदंङ्गिरो ययातिवत्सदंने
पूर्ववच्छुंचे ।
अच्छं याह्या वंहा दैव्यं जनमा सांदय बर्हिषि
यक्षिं च प्रियम् ।। १७ ।।

**यथा मनुश्चाङ्गिरा वा ययातिगृहि प्रा(प्रास्त्वां)प्रस्त्वां तथा**
**मद्गृहं च ।**
**अभ्यायाह्यावह देवसङ्घमासादय बर्हिषि यक्षि च प्रियम् ।।२०८।।**

**यष्टा त्वमेवाखिलजीवगो यत् ............. ।**

(३६८) एतेनांग्ने ब्रह्मणा वावृधस्व शक्ती वा यत्ते
चकृमा विदा वां ।
उत प्र णेष्यभि वस्यों अस्मान् त्सं नंः सृज
सुमत्या वाजंवत्या ।। १८ ।। (३५ ।।)

**.............. स्पष्टत्वं च प्राप्नुहि वेदवाचा ।**
**शक्त्या यत्ते चकृम ज्ञानतो वा वस्यो भद्रं**
**प्रणयास्मान् सुमत्या ।**
**भोगेतया संसृज नित्यमेव यस्माच्छक्त्या चकृम त्वत्सुकर्म ।**
**।। २०९ ।।**

## सूक्तम् - ३२

(इन्द्रस्य नु पञ्चदश, ऋषिः हिरण्यस्तूप आङ्गिरसः । छन्दः त्रिष्टुप् ।
देवता इन्द्रः)

(३६९)इन्द्रस्य नु वीर्याणि प्र वोचं यानि चकार
प्रथमानि वज्री ।
अहन्नहिमन्वपस्ततर्द प्र वक्षणा
अभिनत्पर्वतानाम् ।। १ ।।

**इन्द्रस्य वा वासुदेवस्य वीर्याण्या(लक्षेयं)चक्षेऽहं यानि
मुख्यानि चक्रे ।
अहिं दैत्यं संशयं वा जघान जलानुसारेण च(कार)खान मार्गम्
।। २१० ।।**

**ततर्द विघ्नान् कर्मणां वाऽनुसाराद् वहनात् पक्षा
वक्षणा दुर्वचांसि ।
जीवानां चेद् वक्षणा जन्मपर्ववतां बिभेदैव सुयुक्तिभिस्ताः ।
।। २११ ।।**

(३७०)अहन्नहिं पर्वते शिश्रियाणं त्वष्टास्मै वज्रं स्वर्यं
ततक्ष ।
वाश्रा इव धेनवः स्यन्दमाना अञ्जः समुद्रमव
जग्मुरापः ।। २ ।।

**त्वष्टा त्वेतज्ज्ञानवज्रं विरिञ्चस्ततक्षैतद्विषयं यत् त्विडात्मा ।
स्वर्यं वज्रं निशितं शब्दजं वा शिशुवत्सा गाव इवैतदीरिताः ।
अञ्जः समुद्रं जग्मुरापः क्रिया वा समुद्रिक्तं देवमेनं व्रजन्ति ।
।। २१२ ।।**

(३७१) वृषायमाणोवृणीत सोमं त्रिकद्रुकेष्वपिवत्
सुतस्य ।
आ सायकं मघवादत्त वज्रमहन्नेनं प्रथमजा
महीनाम् ।। ३ ।।

**वव्रे सोमं तृषितो यद्वदेव वृषाऽपिबत् सवनेषु त्रिषु स्म ।**
**सवनानां कद्रुकत्वं द्रुतं यत् कमत्र सोमो ध्यानयोगे मनो वा ।**
**सायङ्करं लयकृज्ज्ञानमेव समाददे संशयमीशवद् वा ।। २१३ ।।**

(३७२) यदिन्द्राहन्प्रथमजामहीनामान्मायिनाममिनाः
प्रोत मायाः ।
आत्सूर्यं जनयन्द्यामुषासं तादीत्ना शत्रुं न किला
विवित्से ।। ४ ।।

**अहन्नेनं प्रथमं मायिनां च व्यनाशयो व्याजरूपाश्च मायाः ।**
**ततः सूर्यद्युदिनादेश्च कर्ता त्वमेव तावद्बलतो न शत्रुम् ।**
**लभसे मायावादिनां वाऽथ माया व्यनाशयः स्वजनैस्तज्जयेन ।**
**।। २१४ ।।**

(३७३) अहन्वृत्रं वृत्रतरं व्यंसमिन्द्रो वज्रेण महता
वधेन ।
स्कन्धांसीव कुलिशेना विवृक्णाहिः शयत
उपपृक्पृथिव्याः ।। ५ ।। ( ।। ३६ ।।)

**अहन् वृत्रं व्यंसमतोऽधिकं च तमोमिथ्याप्रत्ययौ व्यंसनाद् वा ।**
**स्कन्धास्तरोर्यद्वदथो विवृक्णा अहिश्च वज्रेण कुलस्य शङ्कतेः ।**
**विद्या नाम्ना कुलिशो बुद्धिरेव पृथिव्याख्या संशयः तद्वतो यत् ।**
**।। २१५ ।।**

अतः पृथिव्या उपपृक् ........... ।

(३७४) अयोद्धेव दुर्मद आ हि जुह्वे महावीरं तुविबाधमृजीषम् ।
नातारीदस्य समृतिं वधानां सं रुजानाः पिपिष इन्द्रशत्रुः ।। ६ ।।

................ यस्य योद्धा नायोद्धाऽसौ तद्वदेवेन्द्रशत्रुः ।
दर्पोद्रिक्तो ह्याह्वयामास शक्रं विष्णुं वाऽज्ञानं वीरतमं रिपूणाम् ।
।। २१६ ।।

महोच्चानां बाधकं दाढर्यहेतोर्ऋजीषाख्यं नास्य विष्णोर्वधानाम् ।
सम्प्राप्तिमज्ञानमथापि वृत्रः शक्र(स्य तो)स्यातारीत्
सम्पि(पेष)पिषे प्रजाश्च ।। २१७ ।।

रुजा युक्ता मानुषीर्वा सृतिस्था इन्द्रः शत्रुर्यस्य स हीन्द्रशत्रुः।
पुंसोः पूर्वस्मिन् स्वरितान्ते समासो बहुव्रीहिर्हीति सूत्रं पुराणम् ।
।। २१८ ।।

(३७५) अपादहस्तो अपृतन्यदिन्द्रमास्य वज्रमधि सानौ जघान ।
वृष्णो वध्रिः प्रतिमानं बुभूषन्पुरुत्रा वृत्रो अशयद्व्यस्तः ।। ७ ।।

सञ्छिन्नपाद्बाहुरपीन्द्रमेव युयोध वज्रं व्यसृजत् स तस्य ।
गिरेः सानुप्रतिमे कण्ठदेशे तर्कागमाभ्यां रहितं तमो वा ।।२१९।।

संयुद्ध्यमानं मानवज्रेण विष्णुर्जघान वध्रिर्वधयोग्योऽथ नीचः ।
ईशस्य शत्रुर्भवितुं स इच्छन् व्यस्तोऽशयद् वहुधेशेन तेन ।
॥ २२० ॥

(३७६) नदं न भिन्नममुया शयानं मनो रुहाणा अति यन्त्यापः ।
याश्चिद्वृत्रो महिना पर्यतिष्ठत्तासामहिः पत्सुतःशीर्बभूव ॥ ८ ॥

अपां रोद्धारममुया स्वमात्रा सहैव शक्रेण हतं शयानम् ।
भिन्नं नदं यद्वदतीत्य चाऽपो मनःपूर्वं चाऽरुहाणाः प्रयान्ति ।
॥ २२१ ॥

वृत्रो याः पूर्वं स्वमहिम्ना परीत्य पुराऽतिष्ठत् तत्सुतोऽहिश्च तासाम् ।
पत्सुतःशीः पादतोऽनन्तरं तु शेताऽभवत् तद्वदेवाभिरुन्धन् ।
तमःपुत्रः संशयो वाऽभिरुन्धन् शुभान्यास्ते निहतः सोऽपि तेन
॥ २२२ ॥

(३७७) नीचावया अभवद्वृत्रपुत्रेन्द्रो अस्या अव वधर्जभार ।
उत्तरा सूरधरः पुत्र आसीद्दानुः शये सहवत्सा न धेनुः ॥ ९ ॥

नीचस्थाने वन्धनं याऽपि चापां करोति दानुर्वृत्रमाता दनुः सा ।
वृत्रो ह्यभूद् दनुजः कश्यपाच्च पापात्माऽसौ वैष्णवस्त्वष्टृजातः ।
॥ २२३ ॥

वृत्रः पुत्रोऽस्या इति सा वृत्रपुत्रा वधं तस्या अ(आ)हरत्
पूर्वमिन्द्रः ।
प्रकृतिर्वा वृत्रमाता तमो हि तस्या अभूत् तां जघानेशिता वा ।
प्रातिस्वि(का)की प्रकृतिर्यत् तमश्च दोषाश्चान्ये पुंस्वतो
युक्तमेतत् ॥ २२४ ॥

सुतावनार्थमुपरिस्था बभूव सू(सुतस्य)रस्य माता तां
निहत्यामुमेव ।
जघानेन्द्रः कारण(स्यैव)स्यापि नाशात् कार्योत्थानं वारयामास
विष्णुः ॥ २२५ ॥

स्यादेव पूर्वं कार्यनाशो ह्यथापि निःशेषनाशः कारणस्यैव नाशात्।
एवं भक्ताननुजग्राह देवो नारायणः पारयन् संसृतेश्च ॥ २२६ ॥

उत्तरत्वं प्रकृतेः शक्तितः स्यात् ........ ।

(३७८) अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये
निहितं शरीरम् ।
वृत्रस्य निण्यं विचरन्त्यापो दीर्घं तम
आशयदिन्द्रशत्रुः ॥ १० ॥ (॥ ३७ ॥)

.......... अनन्तत्वान्नैव तिष्ठन्ति काष्ठाः ।
अतस्तासां न गृहं किञ्चिदस्ति निण्यं सुखेनैव चरन्ति चापः ।
दीर्घं तमो वृत्रसञ्ज्ञं तमो वा दीर्घमन्धं प्राप वृत्रः स एव ।
॥ २२७ ॥

(३७९) दासपत्नीरहिंगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः ।
अपां विलमपिहितं यदासीद्वृत्रं जघन्वाँ अप तद्ववार ॥ ११ ॥

**दासस्य विष्णोर्वरुणस्य पत्न्यो निरुद्धा आसन्नहिना यद्वदेव ।
गावो ब(व)लेनेन्द्रयज्ञे सुक्लृप्ता वृत्रं हत्वा तमहिं चाऽशु शक्रः ।
उद्घाटयामास विलं तदाऽपां शुभद्वारं भगवान् वा तमो घ्नन् ।
॥ २२८ ॥**

(३८०) अश्व्यो वारो अभवस्तदिन्द्र सृके यत्त्वा प्रत्यहन् देव एकः ।
अजयो गा अजयः शूर सोममवासृजः सर्तवे सप्त सिन्धून् ॥ १२ ॥

**सृके युद्धे प्रत्यहंस्त्वां यदि स्म देवः प्रधानोऽपि तद(दाऽ)श्ववारः ।
वालीव त्वं ननु देवस्तदानीं प्रतिहन्ता ते नैव कश्चिद्धि तस्मात् ।
अजयो बलाद् गा अजयो हिरण्यं सोमं गन्तुममुचः सप्त सिन्धून्
॥ २२९ ॥**

(३८१) नास्मै विद्युन्न तन्यतुः सिषेध न यां मिहमकिरद्ध्रादुनिं च ।
इन्द्रश्च यद्युयुधाते अहिश्चोतापरीभ्यो मघवा वि जिग्ये ॥ १३ ॥

**अशनिं याः विद्युतं यां मिहं च नाम्ना हेतिं वेद्युपमां सुती(क्ष्णम्)क्ष्णाम् ।**

अशनिभेदं ह्रादुनिनामधेयं त्वामुद्दिश्यैवाकिरत् सोऽहिरुग्रः ।
त्वां प्रत्येतन्नैव सिद्धिं चकार पश्चात्काले (ष्व)त्वजयस्त्वं तमेव
॥ २३० ॥

(३८२) अहेर्यातारं कमपश्य इन्द्र हृदि यत्ते जघ्नुषो भीरगच्छत् ।
नव च यन्नवतिं च स्रवन्तीः श्येनो न भीतो अतरो रजांसि ॥ १४ ॥

अहेर्योद्धारं कमपश्य इन्द्र यज्जघ्नुषस्तेऽपि भयं जगाम ।
ज्ञानानि मिथ्याबोधतोऽस्मन्मनश्च शब्दादिकादमुचः सप्त
सिन्धून् ॥ २३१ ॥

महत्तत्त्वादीन् विपरीता मतिस्तु विद्युच्छब्दास्तन्यतुर्वक्तृशक्तिः ।
मिहेत्युक्ता ह्रादुनिर्ह्रुङ्कृतिश्च प्रतिवक्तृणामनुकूले रमेशे(परेशे) ।
॥ २३२ ॥

न साधयन्ति स्म तमस्समुत्था जयत्येनं संशयं वासुदेवः ।
स्वभक्तार्थे तद्धृदिस्थः क एव त्वदन्योऽहेरभिगन्ता भवेत ।
तवैव यस्मात् संशयं जघ्नुषस्तु त्वदीयानां भयमञ्जो व्यपैति ।
॥ २३३ ॥

शतमेकोनमतरस्त्वं नदीनामहिं दैत्यं घ्नन् यथाऽऽकाशदेशात् ।
भीतः श्येनो ह्यभि(ह्यति)गच्छेत् तथैव
नानानदीवा(धा)रकत्वात्तु तस्य ॥ २३४ ॥

ईशो देवानां तावतां तावतीश्च सृत्यापगास्तारयामास यद्वत् ।
भीतः श्येनस्तरतीत्थं तथैषां कृत्वोपमां तारयामास देवः ।
स्वातन्त्र्ये भेदकरणे चोक्त एव व्यत्यास इत्यनवद्यं तदेतत् ।
॥ २३५ ॥

वस्वादित्या मरुतश्चाश्विनौ च बृहस्पतिः शेषविपानिरुद्धाः ।
ब्रह्मा ब्रह्माण ऋभवश्चैव रुद्रा ऊनं शतं देवतासंहितोक्तम् ।
।। २३६ ।।

(३८३)इन्द्रो यातोऽवसितस्य राजा शमस्य च शृङ्गिणो वज्रबाहुः ।
सेदु राजा क्षयति चर्षणीनामरान्न नेमिः परि ता बभूव ।। १५ ।। (।। ३८ ।।)

।। इति प्रथमाष्टके द्वितीयोऽध्यायः ।।

स एवेन्द्रो भगवांस्तत्प्रसादात् प्राप्तो भक्तैः पर्यवसानगन्तुः ।
मुक्तस्य राजा(ऽथापि)ऽपि शमस्य मुक्तेर्ज्ञानं शृङ्गं तद्वतश्चैव नित्यम् ।
स एव राजा क्षयति प्रजानां भूतान्यराणीव च पर्यभूत् सः ।
।। २३७ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमदृग्भाष्ये द्वितीयोऽध्यायः ।।

# तृतीयोऽध्यायः

## सूक्तम् - ३३

(एतायाम पञ्चदश, ऋषिः हिरण्यस्तूप आङ्गिरसः । छन्दः त्रिष्टुप् ।
देवता इन्द्रः ।)

(३८४)ॐ ।। एतायामोप गव्यन्त इन्द्रमस्माकं सु
प्रमतिं वावृधाति ।
अनामृणः कुविदादस्य रायो गवां केतं
परमावर्जते नः ।। १ ।।

**ॐ ।। ये सखायस्त्वरिता एत देवा उपायाम पशुवत् तद्वशस्थाः । गव्यन्त उक्ता अतिनिश्चितेऽर्थेऽभूते शब्दश्चेत्याह सूत्रं परेशः ।**
**।। १ ।।**

**प्रकृष्टज्ञानं वर्धयत्येव सुष्ठु स नोऽभेद्योऽनामृणः क्वापि तस्य । वित्तानि तस्माद् वेदवाक्योत्थमेव केतं ज्ञानं परमावर्जते नः ।**
**।। २ ।।**

**ददाति ........................... ।**

(३८५)उपेदहं धनदामप्रतीतं जुष्टां न श्येनो वसतिं
पतामि ।
इन्द्रं नमस्यन्नुपमेभिरर्कैर्यः स्तोतृभ्यो हव्यो
अस्ति यामन् ।। २ ।।

**....... उपै(वैनमहं)वेशमहं पतामि यथा श्येनो वसतिं पूर्वभुक्ताम् ।**

इन्द्रं नमस्यन्ननुकूलगीर्भिरेव यः स्तोतृभ्यो हव्य एवास्ति काले ।
।। ३ ।।

(३८६) नि सर्वसेन इषुधींरसक्त समर्यो गा अंजति यस्य वष्टि ।
चोष्कूयमाण इन्द्र भूरि वामं मा पणिर्भूरस्मदधि प्रवृद्ध ।। ३ ।।

अशेषसेनापतिरेष शत्रूनशेषतो हन्तुमथो तमांसि ।
वध्नाति तूणान् निजस(द्गुणान्)ज्जनान् वा संयोजयत्यात्मनि मानबाणान् ।। ४ ।।

अर्यो गम्योऽधीश्वरो गा मतीर्वा सञ्चालयत्येव च यस्य वष्टि ।
भक्तस्य तत्त्वं ददमानश्च भूरि भद्रं मा भूरसुरस्त्वं कदाचित् ।
।। ५ ।।

अस्मदर्थे हिंसकत्वेन नित्यप्रवृद्ध .......... ।

(३८७) वधीर्हि दस्युं धनिनं घनेनँ एकश्चरन्नुपशाकेभिरिन्द्र ।
धनोरधि विषुणक् ते व्यायन्नयज्वानः सनकाः प्रेतिमीयुः ।। ४ ।।

................. वज्रेण घनेन दस्युम् ।
ज्ञानेन वाऽ(चा)ज्ञानगणं धनाढ्यमयज्युं चाप्येक एवान्तरे च ।
चरञ्छाकैः शक्तिभिः सर्वदेवनरादिलोकं यमयञ्जघन्थ ।। ६ ।।

अधिकृत्य त्वां धनुमत्यन्तपुष्टं विष्वग्जग्मुरयजन्तः सदैव ।
मृतिं प्रापुर्दुःखबाहुल्यरूपां सनका लाभे योग्यरूपा अपि स्म ।
।। ७ ।।

(३८८)परा चिच्छीर्षा ववृजुस्त इन्द्रायज्वानो यज्वभिः स्पर्धमानाः ।
प्र यद्दिवो हरिवः स्थातरुग्र निरव्रताँ अधमो रोदस्योः ।। ५ ।। (।। १ ।।)

अयज्वानोऽन्ये वक्ष्यमाणास्तु ये ते सन्त्यासुरा यज्वभिः स्पर्धमानाः ।
शिरांस्यपि स्वानि सन्तत्यजुस्ते सद्भिः स्पर्धामात्रसम्पूरितार्थाः ।
तानव्रतान् स्वर्गतः खात् पृथिव्या निरधमस्त्वं स्थैर्यवानिन्द्रियेशः ।। ८ ।।

(३८९)अयुयुत्सन्ननवद्यस्य सेनामयातयन्त क्षितयो नवग्वाः ।
वृषायुधो न वध्रयो निरष्टाः प्रवद्भिरिन्द्राच्चितयन्त आयन् ।। ६ ।।

यदा नवग्वा ऋषयोऽसुरेन्द्रैरुपद्रुताः शरणं वासुदेवम् ।
प्रापुस्तमोभिस्तामसैर्वाऽघसङ्घैः सम्पीडिता अयुयुत्संस्तदा तैः ।
।। ९ ।।

सेनां च विष्णोर्निरयातयंस्ते वधाय तेषां हरिभक्त्यादिकान् वा ।
गुणान् समर्था इव योधाः(यौधाः) स्वशत्रुवधैकशीला अपि नष्टाः प्रवद्भिः ।
गणैर्विष्णोः स्वैर्गुणैर्वा प्रसादादीशस्य सङ्कालयन्तो ह्यगच्छन् ।
।। १० ।।

(३९०)त्वमेतान् रुदतो जक्षतश्चायोधयो रजस इन्द्र पारे ।
अवादहो दिव आ दस्युमुच्चा प्र सुन्वतः
स्तुवतः शंसमावः ॥ ७ ॥

**रक्षोगणान् भक्षयतो मुनींश्च सम्पीडितान् रुदतश्च त्वयैव ।**
**अयोधयो रजसोऽन्ते सुसत्त्ववृद्धिर्यदा जगतः स्यात् तदैव ॥११॥**

**पुंदोषान् वा गुणभक्षान् नृसत्त्ववृद्धौ दिवो ज्ञानतोऽवादहश्च ।**
**अज्ञानदस्युं स्तुवतः संस्तुतिं च प्रावोऽरक्षः ....... ।**

(३९१)चक्राणासः परीणहं पृथिव्या हिरण्येन मणिना
शुम्भमानाः ।
न हिन्वानासस्तितिरुस्त इन्द्रं परि स्पशो
अदधात्सूर्येण ॥ ८ ॥

**................. वन्धनं ये जनानाम् ॥ १२ ॥**

**कुर्वन्ति हेम्ना मणिभिः शोभमाना दैत्यादयो दृढदोषा धनैर्वा ।**
**ते प्रेरयन्तोऽपि परस्परेण नैवातरन् वासुदेवं कथञ्चित् ॥ १३ ॥**

**सहैव सूर्येण च देवसङ्घांश्चरानज्ञातानदधाद् वासुदेवः ।**
**दैत्यानां वा तमसां वृत्तदृ(ष्टौ)ष्ट्यै .......... ।**

(३९२)परि यदिन्द्र रोदसी उभे अबुभोजीर्महिना
विश्वतः सीम् ।
अमन्यमानाँ अभि
मन्यमानैर्निर्ब्रह्मभिरधमो दस्युमिन्द्र ॥ ९ ॥

......... पर्यभुङ्क्थाः सह यद् रोदसी च ।
स्वमहिम्ना विश्वतः सम्यगेव तदभ(क्तानधमो)क्तान्निधमो
भक्तसङ्घैः ।। १४ ।।

(३९३)न ये दिवः पृथिव्या अन्तमापुर्न
मायाभिर्धनदां पर्यभूवन् ।
युजं वज्रं वृषभश्चक्र इन्द्रो निर्ज्योतिषा तमसो
गा अदुक्षत् ।। १० ।। (।। २ ।।)

ये दस्यवो द्युपृथिव्योरशेषभोगेच्छवो धनदं चेश्वरं तम् ।
जिगीषवः स्वीयमायाभिरेव नैवोदापुर्द्वयमेतत् कदाचित्।। १५ ।।

युक्तं ज्ञानं वज्रमेवायुधं वा दस्यून् हन्तुं कृतवान् देवदेवः ।
निजेनैव ज्योतिषा भक्तहृद्गतमोगूढान्यदुहन्निश्चयेन ।। १६ ।।

ज्ञानानि विष्णुर्यत् तदज्ञानमुग्रम् .............. ।

(३९४)अनु स्वधामक्षरन्नापो अस्याऽवर्द्धत मध्य आ
नाव्यानाम् ।
सध्रीचीनेन मनसा तमिन्द्र ओजिष्ठेन
हन्मनाहन्नभि द्यून् ।। ११ ।।

.......... यस्य कर्माण्यक्षरन् सौख्यमेव ।
यो वेदवाचां सृतिनावात्मकानां मध्येऽवर्धदयथाज्ञानरूपः ।
समीचीनज्ञानतोऽहंस्तमीश ओजिष्ठेन हतिरूपेण सम्यक् ।।१७।।

मोक्षप्रकाशार्थमथापि नावा तरणीयानां मध्यतोऽपां वृधं तम् ।
अहिं वै ...................... ।

(३९५)न्याविध्यदिलीविशस्य दृळ्हा वि
शृङ्गिणमभिनच्छुष्णमिन्द्रः ।
यावत्तरो मघवन् यावदोजो वज्रेण शत्रुमवधीः
पृतन्युम् ॥ १२ ॥

...... इळिनो भूस्थिताः स्युस्तत्राविशन्नसुरो नाम तस्य ॥१८॥

इळीविशस्तस्य दृढानि यानि वलादीनि न्यहनत् तानि देवः ।
तमसो वा शृङ्गिणं शोषकं च वृषरूपं दैत्यमहन्नथो वा ॥ १९ ॥

कामं यावच्छक्तितो विक्रमाद् वा वेगेन वा शत्रुमथो पृतन्युम् ।
जघन्थ वज्रेण सुबोधतो वा न शक्तिसामस्त्यमिहोदितं हरेः ।
॥ २० ॥

अनन्तशक्तिर्हि हरिः सदैव कुत एव शत्रुस्तदमुष्य कोऽपि ।
अतो यथाशक्त्यभियुद्ध्यमानं शत्रुं जघन्थेति महानिहार्थः॥२१॥

(३९६)अभि सिध्मो अजिगादस्य शत्रून् वितिग्मेन
वृषभेणा पुरोऽभेत् ।
सं वज्रेणासृजद्वृत्रमिन्द्रः प्र स्वां
मतिमतिरच्छाशदानः ॥ १३ ॥

स सर्वतः सिद्धियुतः सदैव जिगाय जीवारिगणान् पुरश्च ।
संसाररूपा अभिनद् वृषेण प्राणेन तिग्मेन विरोधिनः प्रति ।
॥ २२ ॥

संयोजयामास वज्रेण वृत्रं ज्ञानेन वा ज्ञानममुष्य हत्यै ।
मतिं च स्वामदिशत् स्वप्रजाभ्यः स शाशदानः सुसुखी
स(र्व)दैव ॥ २३ ॥

(३९७)आवः कुत्समिन्द्र यस्मिंश्चाकन् प्रावो युध्यन्तं
वृषभं दशद्युम् ।
शफच्युतो रेणुर्नक्षत द्यामुच्छ्वैत्रेयो नृषाह्याय
तस्थौ ।। १४ ।।

कुत्सं दशद्युं च मुनिं नृपं च यस्मिन् स्थितः स्वात्मरूपं
सुभक्त्या ।
अदर्शयस्तोषितो यः स्वतन्त्रश्चाकन्नुक्तः कर्म यतः स्वतन्त्रे ।
।। २४ ।।

वृषरूपस्यास्य नृपस्य युद्ध्यतः शफच्युतो रेणुरुन्नक्षत द्याम् ।
श्वेता वाणी वायुभार्या सुतोऽस्याः श्वैत्रेयोऽयं युधतो ह्युदस्थात् ।
।। २५ ।।

वृ(षा)षः श्वैत्रेयो धर्म एवाथ कुत्सनामाऽध्यात्मे
कुत्सितोत्सारणात् स्यात् ।
धर्मरेणुः स्वर्गमात्रा(धि)भिगामी साक्षाद् धर्मो मोक्षफलोपगः
स्यात् ।। २६ ।।

(३९८)आवः शमं वृषभं तुग्र्यासु क्षेत्रजेषे
मघवञ्छ्वित्र्यं गाम् ।
ज्योक् चिदत्र तस्थिवांसो अक्रञ्छत्रूयतामधरा
वेदनाकः ।। १५ ।। (।। ३ ।।)

शमात्मकं वृषभं धर्ममेवाप्यरक्षस्त्वं तुग्रियास्वप्यधी(शः)श ।
तु(ग्रिया)ग्र्याख्या स्यात् सन्ततिर्दीर्घकाला मुक्तिक्षेत्रविजयायैव
धर्मम् ।। २७ ।।

श्वेतासुतं रमणाद् रेफ उक्तस्तमरक्षस्त्वं त्वयि ये तस्थिवांसः ।
ज्योतिश्चक्रुर्निजरूपं विमुक्त्या ज्ञानान्यरीणामधराणि चाकरोः ।
।। २८ ।।

## सूक्तम् - ३४

(त्रिश्चिन्नो द्वादश, ऋषिः हिरण्यस्तूप आङ्गिरसः । छन्दः जगती १-८, १०-११, त्रिष्टुप् ९, १२ । देवता अश्विनौ ।)

(३९९) त्रिश्चिन्नो अद्या भवतं नवेदसा विभुर्वां याम उत रातिरश्विना ।
युवोर्हि यन्त्रं हिम्येव वाससोऽभ्यायंसेन्या भवतं मनीषिभिः ।। १ ।।

आरभ्य चाद्यैव दिवा निशायां तद(न्ते च)न्तरे च त्रिरपि स्म सर्वदा ।
अस्माकमेव भवतं यतोऽन्यो वेत्ता न तावित्युदितौ नवेदसौ ।
।। २९ ।।

गौणं तदन्यत्र हरौ तु मुख्यतो व्यापी तु मार्गो युवयो(श्च)स्तु दानम् ।
अशेषदेशेषु गतेरशेषदातृत्वतश्चैव युवोर्हि यन्त्रम् ।। ३० ।।

वासोयन्त्रं यद्वदयत्नतः स्याद्धिम्या हिनोतेस्तन्तुविक्षेपणी हि ।
तद्वद् वुद्धिप्रेरकाऽयत्नतो वामायार्थसेनौ भवतं मनीषिभिः ।
।। ३१ ।।

सहैव देवैः ...................... ।

(४००)त्रयः पवयो मधुवाहने रथे सोमस्य वेनामनु विश्व इद्विदुः ।
त्रयः स्कम्भासः स्कभितास आरभे त्रिर्नक्तं याथस्त्रिर्वश्विना दिवा ।। २ ।।

**........... पवयश्चायुधानि सोमस्य पानं चेतनत्वाद् विदुस्ते ।**
**वज्रः खङ्गः शर इत्यायुधानि त्रिवेणवः स्तम्भनामान एव।।३२।।**

**दिवा निशायां त्रिस्त्रिरेवानुयाथः कर्मारम्भार्थं लोकसिद्ध्यर्थमञ्जः।**
**चक्रं गदा शर इत्यायुधानि वेदास्त्रयो(वा) वासुदेवस्य च स्युः ।**
**रथः स्वीयो ज्ञानिनां वा शरीरं प्राणादयः स्तम्भनान्यस्य चापि ।। ३३ ।।**

(४०१)समाने अहन्त्रिरवद्यगोहना त्रिरद्य यज्ञं मधुना मिमिक्षतम् ।
त्रिर्वाजवतीरिषो अश्विना युवं दोषा अस्मभ्यमुषसश्च पिन्वतम् ।। ३ ।।

**वैषम्यहीने सुखभाजनेऽह्नि विमुक्तिकालेऽखिलदोषनाशकौ ।**
**स्वभक्तानां शोध(यन्तौ)यतं च यज्ञं त्रिरस्माकं युद्धजिता इषश्च।**
**सुखानि वा मोक्षगतानि नोऽलमहोरात्रे क्षरतं सर्वदैव ।। ३४ ।।**

(४०२)त्रिर्वर्तियातं त्रिरनुव्रते जने त्रिः सुप्राव्ये त्रेधेव शिक्षतम् ।
त्रिर्नान्द्यं वहतमश्विना युवं त्रिः पृक्षो अस्मे अक्षरेव पिन्वतम् ।। ४ ।।

यद् वर्तनं सर्वलोकेषु तच्च त्रिकालगं युवयोरेव सर्वम् ।
भक्ते जने सुष्ठु रक्ष्ये सुभक्ते त्रि(धैव)धेव कालानुगते सुशिक्षतम् ।
सुखं वहेतं च युवां तु नः सदा पुष्टिं च नित्यां क्षरतं वर्णवच्च ।
।। ३५ ।।

(४०३) त्रिर्नो रयिं वहतमश्विना युवं त्रिर्देवताता त्रिरुतावतं धियः ।
त्रिः सौभगत्वं त्रिरुत श्रवांसि नस्त्रिष्ठं वां सूरे दुहिता रुहद्रथम् ।। ५ ।।

वित्तं च नित्यं देवततिं च नित्यं धियं च शुभ्रां नित्यमेवावतं नः ।
कीर्तिं सौभाग्यं रक्षतं नः सदैव कालत्रये युष्मदीयं रथं च ।
पुत्री सूर्यस्याऽरुहद् भक्तदेहे ज्ञानोदयो वा भगवत्प्रसादात् ।
।। ३६ ।।

(४०४) त्रिर्नो अश्विना दिव्यानि भेषजा त्रिः पार्थिवानि त्रिरु दत्तमद्भ्यः ।
ओमानं शंयोर्ममकाय सूनवे त्रिधातु शर्म वहतं शुभस्पती ।। ६ ।। (।। ४ ।।)

सर्वेषु कालेष्वपि भेषजानि नः सर्वलोकप्रभवानि दत्तम् ।
अद्भ्यः सुखायैव सुखं ममैव स्वल्पस्य युष्मत्पुत्रकस्याथ दत्तम्।
पती शुभस्याथ सुतस्य शंयोर्मदीयस्यौवाऽवहतं सुखं वा ।।३७।।

(४०५) त्रिर्नो अश्विना यजता दिवेदिवे परि त्रिधातु पृथिवीमशायतम् ।

तिस्रो नासत्या रथ्या परावत आत्मेव वातः
स्वसराणि गच्छतम् ।। ७ ।।

(४०६) त्रिरश्विना सिन्धुभिः सप्तमातृभिस्त्रय
आहावास्त्रेधा हविष्कृतम् ।
तिस्रः पृथिवीरुपरि प्रवा दिवो नाकं रक्षेथे
द्युभिरक्तुभिर्हितम् ।। ८ ।।

(४०७) क्व १ त्री चक्रा त्रिवृतो रथस्य क्व १ त्रयो
वन्धुरो ये सनीळाः ।
कदा योगो वाजिनो रासभस्य येन यज्ञं
नासत्योपयाथः ।। ९ ।।

(४०८) आ नासत्या गच्छतं हूयते हविर्मध्वः पिबतं
मधुपेभिरासभिः ।
युवोर्हि पूर्वं सवितोषसो रथमृताय चित्रं
घृतवन्तमिष्यति ।। १० ।।

(४०९) आ नासत्या त्रिभिरेकादशैरिह देवेभिर्यातं
मधुपेयमश्विना ।
प्रायुस्तारिष्टं नी रपांसि मृक्षतं सेधतं द्वेषो भवतं
सचाभुवा ।। ११ ।।

(४१०) आ नो अश्विना त्रिवृता रथेनार्वाञ्चं रयिं
वहतं सुवीरम् ।
शृण्वन्ता वामवसे जोहवीमि वृधे च नो भवतं
वाजसातौ ।। १२ ।। (।। ५ ।।)

यद् वर्तनं सर्वलोकेषु तच्च त्रिकालगं युवयोरेव सर्वम् ।
भक्ते जने सुष्ठु रक्ष्ये सुभक्ते त्रि(धैव)धेव कालानुगते
सुशिक्षतम् ।
सुखं वहेतं च युवां तु नः सदा पुष्टिं च नित्यां क्षरतं वर्णवच्च ।
।। ३५ ।।

(४०३) त्रिर्नो॑ र॒यिं व॑हतमश्विना यु॒वं त्रिर्दे॒वता॑ता
त्रिरु॒ताव॑तं धियः॑ ।
त्रिः सौ॑भग॒त्वं त्रिरु॒त श्रवां॑सि नस्त्रि॒ष्ठं वां॒ सूरे॑
दु॒हिता रु॑ह॒द्रथ॑म् ।। ५ ।।

वित्तं च नित्यं देवततिं च नित्यं धियं च शुभ्रां नित्यमेवावतं
नः ।
कीर्तिं सौभाग्यं रक्षतं नः सदैव कालत्रये युष्मदीयं रथं च ।
पुत्री सूर्यस्याऽरुहद् भक्तदेहे ज्ञानोदयो वा भगवत्प्रसादात् ।
।। ३६ ।।

(४०४) त्रिर्नो॑ अश्विना दि॒व्यानि॑ भेष॒जा त्रिः
पार्थि॑वानि॒ त्रिरु॑ दत्तम॒द्भ्यः ।
ओ॒मानं॑ शं॒योर्मम॑काय सू॒नवे॑ त्रि॒धातु॒ शर्म॑ वहतं
शुभस्पती ।। ६ ।। (।। ४ ।।)

सर्वेषु कालेष्वपि भेषजानि नः सर्वलोकप्रभवानि दत्तम् ।
अद्भ्यः सुखायैव सुखं ममैव स्वल्पस्य युष्मत्पुत्रकस्याथ दत्तम्।
पती शुभस्याथ सुतस्य शंयोर्मदीयस्यौवाऽवहतं सुखं वा ।।३७।।

(४०५) त्रिर्नो॑ अश्विना यज॒ता दि॒वेदि॑वे॒ परि॑ त्रि॒धातु॑
पृथि॒वीम॑शायतम् ।

तिस्रो नासत्या रथ्या परावत आत्मेव वातः
स्वसराणि गच्छतम् ।। ७ ।।

(४०६) त्रिरश्विना सिन्धुभिः सप्तमातृभिस्त्रय
आहावास्त्रेधा हविष्कृतम् ।
तिस्रः पृथिवीरुपरि प्रवा दिवो नाकं रक्षेथे
द्युभिरक्तुभिर्हितम् ।। ८ ।।

(४०७) क्व १ त्री चक्रा त्रिवृतो रथस्य क्व १ त्रयो
वन्धुरो ये सनीळाः ।
कदा योगो वाजिनो रासभस्य येन यज्ञं
नासत्योपयाथः ।। ९ ।।

(४०८) आ नासत्या गच्छतं हूयते हविर्मध्वः पिबतं
मधुपेभिरासभिः ।
युवोर्हि पूर्वं सवितोषसो रथमृताय चित्रं
घृतवन्तमिष्यति ।। १० ।।

(४०९) आ नासत्या त्रिभिरेकादशैरिह देवेभिर्यातं
मधुपेयमश्विना ।
प्रायुस्तारिष्टं नी रपांसि मृक्षतं सेधतं द्वेषो भवतं
सचाभुवा ।। ११ ।।

(४१०) आ नो अश्विना त्रिवृता रथेनार्वाञ्चं रयिं
वहतं सुवीरम् ।
शृण्वन्ता वामवसे जोहवीमि वृधे च नो भवतं
वाजसातौ ।। १२ ।। (।। ५ ।।)

## सूक्तम् - ३५

(ह्वयाम्यग्निम् एकादश, ऋषिः हिरण्यस्तूपः आङ्गिरसः । छन्दः जगती १, ९, त्रिष्टुप् २-८, १०-११ । देवता १ (पादानां क्रमेण) अग्निः मित्रावरुणौ, रात्रिः, सविता च । २-११ सविता ।)

(४११)ह्वयाम्यग्निं प्रथमं स्वस्तये ह्वयामि मित्रावरुणाविहावसे ।
ह्वयामि रात्रीं जगतो निवेशनीं ह्वयामि देवं सवितारमूतये ।। १ ।।

**ह्वयामि देवानग्निपूर्वानथो वा विष्णुं तैस्तैर्नामभी राति यस्मात् ।**
**रतित्वाद् वा रतिदत्वाद् स रात्री ...... ।**

(४१२)आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च ।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ।। २ ।।

**........ कृष्णं रजः शार्वरं हृत्तमो वा ।। ३८ ।।**

**देवान् नृजातानथवा(ऽपि मु) विमुक्तानन्यांश्च मर्त्यान् सृतिगान् वा लयेषु ।**
**निशासु वा स्वात्मनि सन्निवेशयन् प्रस्वापयन् वा रविगो जनार्दनः ।। ३९ ।।**

(४१३)याति देवः प्रवता यात्युद्वता याति शुभ्राभ्यां यजतो हरिभ्याम् ।

आ देवो याति सविता परावतोऽप विश्वा दुरिता
बाधमानः ।। ३ ।।

**आयाति नित्यं चोच्चनी(चप्र)चैः प्रदेशैः शुभ्राश्वयुक्तेन रथेन याज्यः ।**
**शुभौ च तौ रमणीयौ च शुभ्रौ पुरोगाश्वौ हरिदश्वो हि सूर्यः ।**
**।। ४० ।।**

**परावतो दूरतः .................. ।**

(४१४) अभीवृतं कृशनैर्विश्वरूपं हिरण्यशम्यं यजतो
बृहन्तम् ।
आस्थाद्रथं सविता चित्रभानुः कृष्णा रजांसि
तविषीं दधानः ।। ४ ।।

**........... अभीवृतश्च रथो हिरण्यैस्तस्य शम्या युगाणी ।**
**तमःप्रकाशौ यदधीनौ यतस्तौ दधान इत्युच्यते वासुदेवः ।।४१।।**

**कृष्णं रजस्तविषी सत्त्वपूर्वगुणास्त्रयो वा व्युत्क्रमात् ..... ।**

(४१५) वि जनाञ्छ्यावाः शितिपादो अख्यन् रथं
हिरण्यप्रउगं वहन्तः ।
शश्वद्विशः सवितुर्दैव्यस्योपस्थे विश्वा भुवनानि
तस्थुः ।। ५ ।।

**............................................ तत्तुरङ्गाः ।**
**श्यावाः श्यामत्वान्नीलपादो जगत् ते पश्यन्ति सन्धिः प्रउगं (तद्रथस्य)रथस्य ।**

देवप्रियत्वाद् दैव्यनाम्नो हरेस्तु समीपस्थं सर्वगत्वाज्जगद्धि ।।४२।।

(४१६) तिस्रो द्यावः सवितुर्द्वा उपस्थाँ एका यमस्य भुवने विराषाट् ।
आणिं न रथ्यममृताधि तस्थुरिह ब्रवीतु य उ तच्चिकेतत् ।। ६ ।। (।। ६ ।।)

तिस्रो द्यावो मात्रयं द्वावुपस्थौ जडाजडे श्रीर्विराषाडधी(रा)शा ।
विश्वस्य साक्षाद् भगवान् नियन्ता यमोऽस्य सर्वं गदितं सदैव ।
जडाजडत्वान्मानमुक्तं पृथग्घि सर्वस्वाम्यं वक्तुमेवोदिता श्रीः ।। ४३ ।।

अन्योन्यसम्बन्धविवक्षयैव ह्युपस्थत्वं मुक्तभूतानि यानि ।
अशेषतस्तानि रथस्य यद्वदाणिं रथ्यं संश्रितं सर्वदैव ।
एवं हरिं संश्रितान्यब्जजेशपूर्वाण्यपीत्येष वेदार्थसारः ।। ४४ ।।

इह ब्रवीत्वन्यथा योऽभिपश्येत् कुर्याद् वा तद् यो यथावच्च पश्येत् ।
शेषं ज्ञानं(शेषज्ञानं) स ब्रवीत्वस्मदर्थे चकार यो विष्णुरेतत् स वा नः ।। ४५ ।।

(४१७) वि सुपर्णो अन्तरिक्षाण्यख्यद्गभीरवेपा असुरः सुनीथः ।
केदानीं सूर्यः कश्चिकेत कतमां द्यां रश्मिरस्या ततान ।। ७ ।।

गम्भीरवेगो भगवान् वा सुपर्णः परानन्दादन्तरीक्ष्याण्यपश्यत् ।
असौ रतिः शुभनीतिश्च विष्णुरि(मि)त्यपश्यद् दुर्लभत्वात्
क एव ।। ४६ ।।

पश्यन् रवे रश्मिगणानपीह सर्वव्याप्तानपि विष्णोर्न रश्मीन् ।
लोकः पश्येदिति कुत्राऽततानेत्याक्षिप्यते व्यक्तिमपेक्ष्य रश्मेः ।
। ४७ ।।

(४१८) अष्टौ व्यख्यत्ककुभः पृथिव्यास्त्री धन्व योजना
सप्त सिन्धून् ।
हिरण्याक्षः सविता देव आगाद्दधद्रत्ना दाशुषे
वार्याणि ।। ८ ।।

ऊर्ध्वं मध्यमधरं चेति धन्वत्रयं तमः सुखलीनं यतस्तत् ।
युक्तं भवेत् तद्गतैः सर्वदैव दृढश्लेषाद् योजनं स्यात् तमो हि ।
।। ४८ ।।

अष्टौ दिशः प्रकृतेर्वा पृथिव्या महदाद्याः
सिन्धवस्ता(न्व्य)न्यपश्यत् ।
हिरण्याक्षो नरसिंहात्मना स वार्याणि यद् वरणीयं सुवित्तम् ।
।। ४९ ।।

(४१९) हिरण्यपाणिः सविता विचर्षणिरुभे द्यावापृथिवी
अन्तरीयते ।
अपामीवां बाधते वेति सूर्यमभि कृष्णेन रजसा
द्यामृणोति ।। ९ ।।

**चर्षणिभ्यो यत्प्रजाभ्यो विशिष्टो विचर्षणिः केशवः सूर्यमेति ।**
**ऋणोति सम्पूरयति .............. ।**

(४२०) हिरण्यहस्तो असुरः सुनीथः सुमृळीकः स्ववाँ यात्वर्वाङ् ।
अपसेधन्रक्षसो यातुधानानस्थाद्देवः प्रतिदोषं गृणानः ।। १० ।।

**........ स्ववान् स स्वतन्त्रत्वात् स्वर्णपात्रं सुपूर्णम् ।। ५० ।।**

**दधानोऽसौ स्वर्णवर्णश्च तेन स्वर्ण(सुवर्ण)पाणिः स्वर्णहस्तश्च देवः ।**
**पृथक्पृथक् पाणिपूर्वाङ्गवित्त्यै स्वर्ण(सुवर्ण)वर्णः स्वर्णपाणिः स उक्तः ।। ५१ ।।**
**एतैर्लिङ्गैर्वेत्ति सूर्यं यतश्च सूर्यादन्यः सविता वासुदेवः ।**
**उक्तो गायत्र्या चाऽरणैस्तत्रतत्र कप्यास पद्माक्ष इति ह्युदारव्यः ।**
**।। ५२ ।।**

(४२१) ये ते पन्थाः सवितः पूर्व्यासोऽरेणवः सुकृता अन्तरिक्षे ।
तेभिर्नो अद्य पथिभिस्सुगेभी रक्षा च नो अधि च ब्रूहि देव ।। ११ ।। (।। ७ ।।)

**ये पन्थानो देवयाना अमुत्र साध्या ये तेऽरेणवोऽरागतो वा ।**
**रजोहानादथवा तान् प्रदाय रक्षाधिकान् ब्रूहि नोऽथो समेभ्यः ।**
**।। ५३ ।।**

## सूक्तम् - ३६

(प्रवो यह्वम् विंशतिः, ऋषिः कण्वो घौरः । छन्दः बृहती ३, ५, ७, ९, ११, १३, १५, १७, १९, सतोबृहती २, ४, ६, ८, १०, १२, १४, १६, १८, २० । देवता अग्निः १-१२, १५-२०, यूपः अग्निः वा १३, १४)

**कण्वस्त्वध्यापयन् विष्णोरनुग्रहमथाऽप्रुवन् ।**
**इच्छंश्च ज्ञानवितर्ति देवांस्तुष्टाव भक्तितः ॥ ५४॥**

**ऋकृच्छतेनावशिष्टं च जप्यस्यान्ते तु कालतः ।**
**शृण्वन्तु स्तोममित्यन्ता ददर्शैकाग्रमानसः ॥ ५५ ॥**

(४२२)प्र वो यह्वं पुरूणां विशां देवयतीनाम् ।
अग्निं सूक्तेभिर्वचोभिरीमहे यं सीमिदन्य ईळते
॥ १ ॥

**वह्वाधेयत्वतः पुत्रं वहूनां वो हुताशनम् ।**
**वहु(व्रह्म)ज्ञेयत्वतो विष्णुं वेमहे हे प्रजाः सदा ॥ ५६ ॥**

**देवज्ञानाद् वा यजनाद् देवयत्यः समीळते ।**
**यमन्ये च जनाः सन्तः ............ ।**

(४२३)जनासो अग्निं दधिरे सहोवृधं हविष्मन्तो
विधेम ते ।
स त्वं नो अद्य सुमना इहाविता भवा वाजेषु
सन्त्य ॥ २ ॥

**.............. सहसा वायु(नेधि)नैधितम् ॥ ५७ ॥**

**धारयन्ति जनास्तस्य कर्म कुर्मो वयं च ते ।**
**सन्त्यः सम्यक् (त्वतो)ततो विष्णुर्वायोरपि विवृद्धिकृत् ॥५८॥**

(४२४)प्र त्वां दूतं वृणीमहे होतारं विश्ववेदसम् ।
महस्ते सतो वि चरन्त्यर्चयो दिवि स्पृशन्ति
भानवः ॥ ३ ॥

(४२५)देवासस्त्वा वरुणो मित्रो अर्यमा सं दूतं
प्रत्नमिन्धते ।
विश्वं सो अग्ने जयति त्वया धनं यस्ते ददाश
मर्त्यः ॥ ४ ॥

**प्रततेः पुरातनत्वाद् वा प्रत्नः ......... ।**

(४२६)मन्द्रो होता गृहपतिरग्ने दूतो विशामसि ।
त्वे विश्वा सङ्गतानि व्रता ध्रुवा यानि देवा
अकृण्वत ॥ ५ ॥ (८ ॥)

**.................. मन्द्रो महामखः ॥**

(४२७)त्वे इदग्ने सुभगे यविष्ठ्य विश्वमाहूयते हविः ।
स त्वं नो अद्य सुमना उतापरं यक्षि
देवान्त्सुवीर्या ॥ ६ ॥

**देवान् सुवीर्याद् यजसि ............ ।**

(४२८)तं घेमित्था नमस्विन उप स्वराजमासते ।
होत्राभिरग्निं मनुषः समिन्धते तितिर्वांसो अति
स्रिधः ॥ ७ ॥

........... तं हि त्वामेव सर्वदा ।
उपासते नमस्यन्तः सन्तस्तीर्णास्तु संसृतेः ॥ ५९ ॥

स्रिधो ह्यतितितिर्वांसस्तीर्णदुःखा इहैव वा ।
त्व(त)त्प्रसादेन विद्वांसः प्राप्य ब्राह्मण्यमुत्तमम् ॥ ६० ॥

(४२९)घ्नन्तो वृत्रमतरन् रोदसी अप उरु क्षयाय चक्रिरे ।
भुवत्कण्वे वृषा द्युम्न्याहुतः क्रन्ददश्वो गविष्टिषु
॥ ८ ॥

तमो घ्नन्तोऽतरन् लोकानपः कर्माणि चोत्तमाः ।
उरु ब्रह्म क्षितित्वेन चक्रुस्तत्रैव संस्थितेः ॥ ६१ ॥

वृषा स भगवान् विष्णुर्मुनौ कण्वेऽभवत् स्थितः ।
क्रन्द(न्नश्व)दश्वस्वरूपश्च ज्ञानस्यान्वेषणे कृते ।
ततः कण्वान्निस्सरन्ति शुद्धा वेदानुगा गिरः ॥ ६२ ॥

द्युतिमत्त्वात् स तु द्युम्नी ................... ।

(४३०)सं सीदस्व महाँ असि शोचस्व देववीतमः ।
वि धूममग्ने अरुषं मियेध्य सृज प्रशस्त दर्शतम्
॥ ९ ॥

.................... देवेषु ज्ञानवत्तमः ।
स त्वं शोचस्व दीप्यस्व धूमः संसारधू(त्कृतिः)त्कृतेः ।
अरुषो रोषहीनत्वाद् धूमश्चेच्छुभगन्धनात् ॥ ६३ ॥

(४३१)यं त्वा देवासो मनवे दधुरिह यजिष्ठं
हव्यवाहन ।

यं कण्वो मेध्यातिथिर्धनस्पृतं यं वृषा
यमुपस्तुतः ।। १० ।। (।। ९ ।।)

(४३२)यमग्निं मेध्यातिथिः कण्व ईध ऋतादधि ।
तस्य प्रेषो दीदियुस्तमिमा ऋचस्तमग्निं
वर्धयामसि ।। ११ ।।

**यं सुतो मे समीधेऽग्निं मेध्यातिथि(रृता) ऋतादधि ।**
**उक्त्वा सत्यां वेदवाचं देयान्यन्नानि तस्य हि ।। ६४ ।।**

**तं प्रतीमा ऋचः सर्वाः प्रकाशाद् वर्धयाम तम् ।**
**इन्धनं तु हरेर्नान्वत् क्वचिदस्ति प्रकाशनात् ।। ६५ ।।**

(४३३)रायस्पूर्धि स्वधावोऽस्ति हि तेऽग्ने देवेष्वाप्यम् ।
त्वं वाजस्य श्रुत्यस्य राजसि स नो मृळ महाँ
असि ।। १२ ।।

**वित्तानि पूरयास्माकं देवेष्वप्याप्यमस्ति ते ।**
**यज्ञभागादिपूज्यत्वात् स्वधावः सुख(वर्तकः)वर्धकः ।**
**श्रुत्यवाजो यज्ञभागो राजा भवसि तस्य हि ।। ६६ ।।**

(४३४)ऊर्ध्व ऊ षु णं ऊतये तिष्ठा देवो न सविता ।
ऊर्ध्वो वाजस्य सनिता
यदञ्जिभिर्वाघद्भिर्विह्वयामहे ।। १३ ।।

**अस्मद्रक्षाकृते नित्यं सूद्यतो भव विष्णुवत् ।**
**विष्णुश्चेत् स्वात्मदृष्टान्तो नोऽन्नदाता तथोद्यमी ।। ६७ ।।**

यत् स्तुवद्भिर्द्विजैर्युक्ताः स्नेहैस्त्वां विह्वयामहे ॥

(४३५)ऊर्ध्वो नः पाह्यंहसो नि केतुना विश्वं समत्रिणं दह ।
कृधीन ऊर्ध्वाश्चरथाय जीवसे विदा देवेषु नो दुवः ॥ १४ ॥

ज्ञानेन पाहि नितरामुद्यम्युच्चगुणोऽपि नः ॥ ६८ ॥

अ(आ)सुरा अत्रयः प्रोक्ता मार्गत्रयविवर्जिताः ।
स्वर्गापवर्गमानुष्यं त्यक्त्वा यान्ति तमो हि ते ।
अदन्तीत्यथ रक्षांसि वाऽत्रयोऽधिकभक्षणात् ॥ ६९ ॥

भोगाय जीवनायापि स्वलोकचरणाय च ।
उत्तमान् कुरु नो नित्यं दोहनानि च लम्भय ।
देवेभ्योऽखिलकाम्यानि सदा(सप्तम्) नोऽतिमहान्ति च ॥७०॥

(४३६)पाहि नो अग्ने रक्षसः पाहि धूर्तेरराव्णः ।
पाहि रीषत उत वा जिघांसतो बृहद्भानो यविष्ठ्य ॥ १५ ॥ (॥ १० ॥)

अरं छिद्रं प्रापयतीत्यरावा पापपूरुषः ।
धूत्कृतेस्तस्य नो रक्ष नश्यतोऽस्म(दघाय)द्वधाय च ॥ ७१ ॥

यवीयस्सु स्थितत्वेन यविष्ठो हरिरुच्यते ।
ब्रह्माद्यपेक्षया नित्यं यविष्ठतम एव यत् ।
अग्निर्यविष्ठ्य इत्युक्तो यदाधिक्यार्थतोऽधिकम् ॥ ७२ ॥

(४३७) घनेव विष्वग्वि जह्यराव्णस्तपुर्जम्भ यो अस्मध्रुक् ।
यो मर्त्यः शिशीते अत्यक्तुभिर्मा नः स रिपुरीशत ।। १६ ।।

वायुर्मेघानिव जहि सर्व(श:)तः पापपूरुषान् ।
अस्मद्द्रोही च यस्तं च तापेनैवात्ति यत् ततः ।। ७३ ।।

तपुर्जम्भः शिशीते यस्तीक्ष्णो भवति सर्वदा ।
नेशो भवतु सोऽस्माकं दुरात्मा पापपूरुषः ।। ७४ ।।

(४३८) अग्निर्वव्ने सुवीर्यमग्निः कण्वाय सौभगम् ।
अग्निः प्रावन्मित्रोत मेध्यातिथिमग्निः साता उपस्तुतम् ।। १७ ।।

सुवीर्यं सौभगं चैव ममेशः समभाजयत् ।
मेध्यातिथिं सुतं चैव मित्राणि च ररक्ष मे ।
उपस्तुतं चैव मुनिं सातौ लाभे ररक्ष ह ।। ७५ ।।

(४३९) अग्निना तुर्वशं यदुं परावत उग्रादेवं हवामहे ।
अग्निर्नयन्नववास्त्वं बृहद्रथं तुर्वीतिं दस्यवे सहः ।। १८ ।।

तुर्वशादींस्तथा राज्ञो वयं तेन हवामहे ।
तुरोऽपि यद्व(शे)शो विष्णुः स च तुर्वशनामवान् ।
यदस्ति तत उच्चत्वाद् यदुरुग्रोसुरान् प्रति ।। ७६ ।।

तमेव तत्प्रसादेन ह्वयामोऽनयदेव सः ।
नववास्त्वादिकान् राज्ञो बलं दस्युविनिग्रहे ।। ७७ ।।

(४४०) नि त्वामग्ने मनुर्दधे ज्योतिर्जनाय शश्वते ।
दीदेथ कण्व ऋतजात उक्षितो यं नमस्यन्ति कृष्टयः ॥ १९ ॥

**मनुष्यः सन्नहं त्वां तु ज्योतिर्मुक्तजनाय च ।**
**निदधे हृदि स त्वं च दीप्यसे मयि सर्वदा ॥ ७८ ॥**

**ब्रह्मजोऽग्नि(र्ता) ऋताद् वेदवाचोऽभिव्यज्यते हरिः ।**
**उक्षितः स्व(स)गुणैः सर्वैर्युक्तः .......... ।**

(४४१) त्वेषासो अग्नेरमवन्तो अर्चयो भीमासो न प्रतीतये ।
रक्षस्विनः सदमिद्यातुमावतो विश्वं समत्रिणं दह ॥ २० ॥ ११ ॥

**................. अमेयाश्च शक्तयः ।**
**त्वेषा इत्युदितास्तस्य हरे रश्मय एव च ॥ ७९ ॥**

**भीमा न प्रतिगन्तुं च शक्या राक्षसपक्षिणः ।**
**यातवो(यावतो) जङ्गमास्तेषां हिंसनावांस्तु राक्षसः ॥ ८० ॥**

**यातुमावानिति प्रोक्तो यातनानुभवात् क्वचित् ।**
**यातुरित्येव च प्रोक्तः सन्तं प्रत्यनुकूलतः ॥ ८१ ॥**

**स्थितास्ताः शक्तयो विष्णोः ............ ।**

## सूक्तम् - ३७

(क्रीळं वः पञ्चदश, ऋषिः कण्वो घौरः । छन्दः गायत्री ।
देवता मरुतः ।)

(४४२)क्रीळं वः शर्धो मारुतमनर्वाणं रथेशुभम् ।
कण्वा अभि प्र गायत ।। १ ।।

**............... क्रीडाशीलं च मारुतम् ।**
**शर्धः सुखबलाढ्यं वा(चा)ऽप्यनर्वाणमनिन्द्रियम् ।। ८२ ।।**

**न वायोरिन्द्रियाणां हि देवाः सन्त्यभिमानिनः ।**
**अतोऽनिन्द्रियता तस्य रथे देहे शुभश्च सः ।**
**कण्वास्तं गायताभीक्ष्णं विष्णुं वा तादृशै(दृशं)र्गुणैः ।। ८३ ।।**

(४४३)ये पृषतीभिर्ऋष्टिभिः साकं वाशीभिरञ्जिभिः ।
अजायन्त स्वभानवः ।। २ ।।

**पृषत्यो वाहनान्येषामन्यदायुधमुच्यते ।**
**स्वप्रकाशोऽथवा विष्णु(स्तैर्लि)स्तल्लिङ्गैर्व्यज्यते सह ।**
**तत्तद्देवगतस्यापि विष्णोर्लिङ्गं च तद् भवेत् ।। ८४ ।।**

(४४४)इहेव शृण्व एषां कशा हस्तेषु यद्वदान् ।
नि यामञ्चित्रमृञ्जते ।। ३ ।।)

**यत् ते वदन्ति वचनं मेघनादात्मकं हि तत् ।**
**इहापि श्रूयत इव वर्णाव्यक्तेरिवेति च ।। ८५ ।।**

**हस्तेष्वेषां कशाः सन्ति चित्रं मार्गेऽधिगम्यते ।**
**रेण्वादिसर्ववस्तूनां गमनान्मार्गचित्रता ।**
**विष्णोः सर्वं जगच्चित्रं मार्गे सम्प्रेर्यतेऽमुना ।। ८६ ।।**

(४४५)प्र वः शर्धाय घृष्वये त्वेषद्युम्नाय शुष्मिणे ।
देवत्तं ब्रह्म गायत ॥ ४ ॥

**शोधकाय प्रधानाय वो बलाय च वायवे ।**
**शुद्धाय वा सुप्रकाशज्ञानायातिबलाय च ।**
**गायत ब्रह्म देवत्तं देवेषु ततमीश्वरम् ॥ ८७ ॥**

**प्रीतिर्वायोर्विष्णुगानाद् वेदाख्यं ब्रह्म विष्णवे ।**
**देवैरधीयमानत्वाद् देवत्तं ब्रह्म वैष्णवम् ॥ ८८ ॥**

(४४६)प्र शंसा गोष्वघ्न्यं क्रीळं यच्छर्धो मारुतम् ।
जम्भे रसस्य वावृधे ॥ ५ ॥ (॥ १२ ॥)

**अहन्तव्यत्वतस्त्वघ्न्यं वायुं वृषभरूपिणम् ।**
**क्रीडन्तं वेदरूपासु गोषु तं स्तुहि मारुतम् ॥ ८९ ॥**

**मार्भिर्वेदैः स्तुतत्वेन मारुतो विष्णुरेव वा ।**
**भक्षणार्थं रसस्यासौ ववृधे मरुतां पिता ॥ ९० ॥**

(४४७)को वो वर्षिष्ठ आ नरो दिवश्च ग्मश्च धूतयः ।
यत्सीमन्तं न धूनुथ ॥ ६ ॥

**आ समन्तादुत्तमः कः प्रधानो वायुरेव वः ।**
**विष्णोराक्षेप एव स्यात् को नामास्ति परस्त्विति ।**
**त(त्व)त्पर्यन्तं च वर्षिष्ठः को भवेदिति वा भवेत् ॥ ९१ ॥**

**आ धूतयो दिवो ग्मश्च भूम्या इत्यन्वयो भवेत् ।**
**तस्मादन्तं प्रतीवैतज्जगत् सन्धूनुथाखिलम् ॥ ९२ ॥**

(४४८) नि वो यामाय मानुषो दध्र उग्राय मन्यवे ।
जिहीत पर्वतो गिरिः ॥ ७ ॥

नीचैर्धृतो मानुषो वो मार्गायोग्राय मन्यवे ।
न पूर्यते च कोपाय स्वल्पत्वान्मानुषः क्वचित् ॥ ९३ ॥

वहुपर्वयुतोऽत्युच्चगिरिर्मार्गे हि वोऽत्यजत् ।
मूलं ............................... ।

(४४९) येषामज्मेषु पृथिवी जुंजुर्वाँ इव विश्पतिः ।
भिया यामेषु रेजते ॥ ८ ॥

..... येषां तथाऽज्मेषु मार्गेष्वतिभिया धरा ।
कम्पते जीर्णराजेव .................. ।

(४५०) स्थिरं हि जानमेषां वयो मातुर्निरेतवे ।
यत्सीमनु द्विता शवः ॥ ९ ॥

................. स्थिरं वो जननं यतः ॥ ९४ ॥

जाता वायोर्दिवि वयो मातुः प्राप्ता निरेतवे ।
निर्गन्तुं तत्क्षणेनैव सर्वलोकाटनाय हि ।
यौवनं ते युवानो हि निसर्गान्मातुरा जनेः ॥ ९५ ॥

मातुरेव प्रसादेन सम्यक् तद्(च) द्विविधं बलम् ।
प्रज्ञावाहुभवं(बलं) यस्मात् तस्मात् ..............

(४५१) उदु त्ये सूनवो गिरः काष्ठा अज्मेष्वत्नत ।
वाश्रा अभिज्ञु यातवे ॥ १० ॥ (॥ १३ ॥)

...................... दिश उदापिरे ॥ ९६ ॥

ते गिरः सूनवो देव्या वाश्रा वचनशीलिनः ।
अभिजन्मानुसारेण गुणान् यातुमुदापिरे ॥ ९७ ॥

(४५२)त्यं चिद्घा दीर्घं पृथुं मिहो नपातममृध्रम् ।
प्र च्यावयन्ति यामभिः ॥ ११ ॥

'पद्भ्यां भूमिः'इति श्रुत्या सुता विष्णोर्वसुन्धरा ।
तज्जत्वात् पर्वता विष्णोर्नप्तारः सेचनाद्धि मिट् ।
हरिस्तमपि मेर्वादिं मरुतश्च्यावयन्ति हि ॥ ९८ ॥

अमृध्रमप्रधृष्यत्वात् ........... ।

(४५३)मरुतो यद्ध वो बलं जनाँ अचुच्यवीतन ।
गिरीँरचुच्यवीतन ॥ १२ ॥

............... बलं यदपि वोऽखिलम् ।
जनांश्च्यावयितुं स्थानाच्छक्ताः सम्यग् गिरीनपि ॥ ९९ ॥

(४५४)यद्ध यान्ति मरुतः सं ह ब्रुवतेऽध्वन्ना ।
शृणोति कश्चिदेषाम् ॥ १३ ॥

कुर्वन्ति शास्त्रसंवादं मार्गे शृण्वन्ति केचन ।
तेषां मध्ये हि मरुतां ............ ।

(४५५)प्र यात शीभमाशुभिः सन्ति कण्वेषु वो दुवः ।
तत्रो षु मादयाध्वै ॥ १४ ॥

........... शीभं क्षिप्रं प्रया(तन)त नः ॥ १०० ॥

**मदं कुरुत तत्रैव दोहनान्यत्र सन्ति हि ।।**

(४५६) अस्ति हि ष्मा मदाय वः स्मसि ष्मा वयमैषाम् ।
विश्वं चिदायुर्जीवसे ।। १५ ।। (।। १४ ।।)

**सर्वमायुर्जीवसेऽस्ति प्रसादान्मरुतां हि नः ।। १०१ ।।**

## सूक्तम् - ३८

(कद्ध नूनम् पञ्चदश, ऋषिः कण्वो घौरः, छन्दः गायत्री, देवता मरुतः)

(४५७) कद्ध नूनं कधप्रियः पिता पुत्रं न हस्तयोः ।
दधिध्वे वृक्तबर्हिषः ।। १ ।।

**कदाऽनयोर्हस्तयोर्देवा दधिध्वे प्रियतातवत् ।**
**कदाऽपि यत् प्रियस्तातः कधप्रिय इतीरितः ।**
**स्तृतं वर्हिर्यद्विषये ते प्रोक्ता वृक्तबर्हिषः ।। १०२ ।।**

(४५८) क्व नूनं कद्वो अर्थं गन्ता दिवो न पृथिव्याः ।
क्व वो गावो न रण्यन्ति ।। २ ।।

**दिवः पृथिव्याश्चेदानीं क्व गच्छथ च किं फलम् ।**
**न गच्छथ क्व वा(वो)ऽप्येतज्ज्ञातव्यं तत्प्रसादतः ।। १०३ ।।**

**आह्वयन्ति क्व (वा)वो गावो यथैव यवसार्थिनः ।**
**फलार्थिनः स्तुवन्तो (वा)वः काऽह्वयन्ति तथैव च ।। १०४ ।।**

(४५९)क्व वः सुम्ना नव्यांसि मरुतः क्व सुविता ।
को ३ विश्वानि सौभगा ॥ ३ ॥

**स्तुत्यानि वः सुखानि च कथं ज्ञेयानि नः सदा ।**
**इत्यभिप्रायतः प्रश्नः कस्मिन् नो ज्ञापकस्त्विति ।**
**सुवितानि सुभद्राणि सौभगं लक्षणं परम् ॥ १०५ ॥**

(४६०)यद्यूयं पृश्निमातरो मर्तासः स्यातन ।
स्तोता वो अमृतः स्यात् ॥ ४ ॥

**पृश्निर्वेदः प्रश्नयोग्यः पृश्निमाता हरिस्ततः ।**
**ज्ञेयस्तस्यापि विज्ञाता मरुतश्चेत् सुता गिरः ।**
**मानुषा यदि यूयं वः स्तोता देवो भवेदपि ॥ १०६ ॥**

(४६१)मा वो मृगो न यवसे जरिता भूदजोष्यः ।
पथा यमस्य गादुप ॥ ५ ॥ (॥ १५ ॥)

**न स्यादसेव्यः स्तोताऽत्र यथा यवसगोचरे ।**
**गोप्राप्ये तु मृगोऽसेव्यो यममार्गं न च व्रजेत् ।**
**याच्ञारीतिविशेषोऽयं निन्दा स्तुत्येकदेशयुक् ॥ १०७ ॥**

(४६२)मो षु णः परापरा निर्ऋतिर्दुर्हणा वधीत् ।
पदीष्ट तृष्णया सह ॥ ६ ॥

**मा वधीन्नः क्वचिन्मृत्युः परतः परतोऽपि च ।**
**दुर्हणा दुःखदा हन्त्री यातु सा तृष्णया सह ॥ १०८ ॥**

(४६३)सत्यं त्वेषा अमवन्तो धन्वञ्चिदा रुद्रियासः ।
मिहं कृण्वन्त्यवाताम् ॥ ७ ॥

**अप्रमेया यथा सत्यं धन्वन्नपि हि सेचनम् ।**
**रुजां विद्रावकस्यैव वायोः पुत्रा हि रुद्रियाः ।**
**विनाऽप्यचेतनं वातं वृष्टिं कृण्व(कुर्व)न्ति हीच्छया ॥ १०९ ॥**

(४६४) वाश्रेव विद्युन्मिमाति वत्सं न माता सिषक्ति ।
यदेषां वृष्टिरसर्जि ॥ ८ ॥

**एषां सकाशाद् वृष्टिश्च विद्युद् भूमिं प्रकाशयेत् ।**
**गौर्वत्समिव भूम्यां च ............ ।**

(४६५) दिवा चित्तमः कृण्वन्ति पर्जन्येनोदवाहेन ।
यत्पृथिवीं व्युन्दन्ति ॥ ९ ॥

**................ लोकं सिञ्चन्ति मातृवत् ॥ ११० ॥**

(४६६) अध स्वनान्मरुतां विश्वमा सद्म पार्थिवम् ।
अरेजन्त प्र मानुषाः ॥ १० ॥ (॥ १६ ॥)

**मानुषादि(कम)त्वमन्य(च विभे)चाविभेदेषां स्वनादपि ।**
**गृहमानिनो गृहाद्यं वा चचालैषां स्वना(दिति)दपि ॥ १११ ॥**

(४६७) मरुतो वीळुपाणिभिश्चित्रा रोधस्वतीरनु ।
यातेमखिद्रयामभिः ॥ ११ ॥

**अखिन्नैर्गमनैश्चैव दृढस्वीयैश्च पाणिभिः ।**
**अनुयात नदीश्चित्राः ................. ।**

(४६८) स्थिरा वः सन्तु नेमयो रथा अश्वास एषाम् ।
सुसंस्कृता अभीशवः ॥ १२ ॥

................. स्थिराः सन्ति रथादयः ॥ ११२ ॥

(४६९) अच्छा वदा तना गिरा जरायै ब्रह्मणस्पतिम् ।
अग्निं मित्रं दर्शतम् ॥ १३ ॥

ब्रह्मणश्च पतिं विष्णुं यथावद् व्याप्तया गिरा ।
जरायै संस्तुतित्वेन तृतीया भावरूपिणी ॥ ११३ ॥

सर्वा विभक्तयश्चेत्थम्भाववाचिन्य एव च ।
महाव्याकरणे सूत्रमिति संस्तुति(तत्स्तुति)रूपतः ।
वद विष्णुं स्वप्रकाशमग्निवत् सूर्यवत् तथा ॥ ११४ ॥

आह चाऽत्मानमेवात्र दार्ढ्ये स्वप्रतियोगिता ।
इति सूत्रात् ......................... ।

(४७०) मिमीहि श्लोकमास्ये पर्जन्य इव ततनः ।
गाय गायत्रमुक्थ्यम् ॥ १४ ॥

............ कीर्तिमस्य विष्णोः कुरु मुखे सदा ॥ ११५ ॥

विस्तारयति पर्जन्यो यद्वद् वृष्टिं तथैव च ।
विस्तृणीहि तथेशस्य तथा कीर्तिं जगत्यपि ॥ ११६ ॥

(४७१) वन्दस्व मारुतं गणं त्वेषं पनस्युमर्किणम् ।
अस्मे वृद्धा असन्निह ॥ १५ ॥ (॥ १७ ॥)

पनस्युं ज्ञानशीलं च विज्ञेयं गणमर्किणम् ।
अभवन् ज्ञापका वृद्धा अस्माकं तदनुग्रहात् ॥ ११७ ॥

## सूक्तम् - ३९

(प्रयदित्था दश, ऋषिः कण्वो घौरः । छन्दः बृहती (१, ३, ५, ७, ९), सतोबृहती (२, ४, ६, ८, १०), देवता मरुतः ।

(४७२)प्र यदित्था परावतः शोचिर्न मानमस्यथ ।
कस्य क्रत्वा मरुतः कस्य वर्पसा कं याथ कं ह धूतयः ॥ १ ॥

**परावतो हरेः स्थानान्मानं शोचिरिवास्यथ ।**
**सूर्यादयो यथा शोचिर्दूरादस्यन्ति जन्तुषु ।**
**एवं ज्ञानं सम्प्रदायान्मरुतो विष्णुरेव वा ॥ ११८ ॥**

**इत्थं यथा सर्वदृश्यं तत् तथा भवतां कृतम् ।**
**एवं यत्र क वा ज्ञानाद् बलाद् वा गच्छत कचित् ।**
**स्वतन्त्रत्वात् परापेक्षा नहि वः कचिदिष्यते ॥ ११९ ॥**

**किञ्चिद्(कंचिद्) याथ बलात् किञ्चिद्(कश्चित्) धूनुथ स्वबलाद्धि तत् ॥**

(४७३)स्थिरा वः सन्त्वायुधा पराणुदे वीळू उत प्रतिष्कभे ।
युष्माकमस्तु तविषी पनीयसी मा मर्त्यस्य मायिनः ॥ २ ॥

**शत्रूणामपनोदाय सन्ति वस्त्विह हेतयः ।**
**स्तम्भनाय च शत्रूणां सुदृढान्येव ताः सदा ॥ १२० ॥**

स्थिरत्वं दीर्घकालत्वं वीळुत्वं दृढता तथा ।
युष्माकं तविषी तेजो बलमस्त्युत्तमं सदा ।।
मायिनो नहि मर्त्यस्य बलं तेजोऽथवोत्तमम् ।। १२१ ।।

(४७४)परा ह यत्स्थिरं हथ नरो वर्तयथा गुरु ।
वि याथन वनिनः पृथिव्या व्याशाः पर्वतानाम्
।। ३ ।।

स्थिरं चाज्ञानपापादि तद्भक्ताय पराहथ ।
गुरूनपि नरान् नित्यं गुणैर्वर्तयथाञ्जसा ।। १२२ ।।

पर्वतानां पृथिव्याश्च दिशो नित्यं वियाथन ।
वनिनश्च तरून् सम्यग् भजनीयान् सुरान् हरिः ।। १२३ ।।

(४७५)नहि वः शत्रुर्विविदे अधि द्यवि न भूम्यां
रिशादसः ।
युष्माकमस्तु तविषी तना युजा रुद्रासो नू
चिदाधृषे ।। ४ ।।

भूमौ दिवि च वः शत्रुः कश्चिन्नैव हि लभ्यते ।
रिशादसः सुसुखिनः सुखेन शमदन्ति यत् ।। १२४ ।।

बलं तेजोऽपि वो ह्यस्ति व्याप्ता (व्याप्त्या)नित्यतया युजा ।
अद्याप्याधर्षणायैव निखिलाशुभसन्ततेः ।। १२५ ।।

(४७६)प्र वेपयन्ति पर्वतान् विविञ्चन्ति वनस्पतीन् ।
प्रो आरत मरुतो दुर्मदा इव देवासः सर्वया
विशा ।। ५ ।। (।। १८ ।।)

प्रवेपयन्ति पर्वतान् विभिन्दन्ति (विविश्चन्ति)वनस्पतीन् ।
जनिपर्ववतो जीवान् सम्प्रेरयति केशवः ॥ १२६ ॥

भजनीयपतीन् ब्रह्मपूर्वांश्च फलदानतः ।
तारतम्येन सम्यक् च विवेचयति सर्वदा ॥ १२७ ॥

सर्वप्रजास्वतिष्ठन्त प्राप्तास्ताभिः सहैव च ।
मत्ता इव प्रेरयन्ति शुभाशुभकृतौ नरान् ॥ १२८ ॥

(४७७)उपो रथेषु पृषतीरयुग्ध्वं प्रष्टिर्वहति रोहितः ।
आ वो यामाय पृथिवी चिदश्रोदबीभयन्त मानुषाः ॥ ६ ॥

अयुङ्ग्ध्वं (अयुग्ध्वं)पृषतीश्चैव रोहितं पृष्टतो रथे ।
वो यामं प्रति दार्ढ्याय शेषमश्रेत् पुनर्धरा ॥ १२९ ॥

भीतिमापु(र्मनुष्याश्च)र्मानुषाश्च ...................... ।

(४७८)आ वो मक्षू तनाय कं रुद्रा अवो वृणीमहे ।
गन्ता नूनं नोऽवसा यथा पुरेत्था कण्वाय बिभ्युषे ॥ ७ ॥

.............. क्षिप्रं वः प्राप्तये सुखम् ।
रक्षां वृणीमहे युष्मद् गन्ताद्यापि च नोऽवसा ॥ १३० ॥

भीतियुक्ताय कण्वाय मह्यम् ........... ।

(४७९)युष्मेषितो मरुतो मर्त्येषित आ यो नो अभ्व ईषते ।

वि तं युयोत शवसा व्योजसा वि
युष्माकाभिरूतिभिः ॥ ८ ॥

**.............................. युष्माभिरेव च ।**
**प्रेरितोऽथ नियन्तृत्वाद् युष्माकं मानुषेण (च)वा ॥ १३१ ॥**

**बाह्यदृष्ट्या त्वभूतीर्नो य इच्छति तमोजसा ।**
**बलेन च द्रावयत युष्मदीयोतिभिस्तथा ॥ १३२ ॥**

(४८०) असामि हि प्रयज्यवः कण्वं दद प्रचेतसः ।
असामिभिर्मरुत आ न ऊतिभिर्गन्ता वृष्टिं न
विद्युतः ॥ ९ ॥

(४८१) असाम्योजो विभृथा सुदानवोऽसामि धूतयः
शवः ॥
ऋषिद्विषे मरुतः परिमन्यव इषुं न सृजत
द्विषम् ॥ १० ॥ ( ॥ १९ ॥ )

**ओजोऽसमं बिभृथ च मखेज्याः सममुत्तमम् ।**
**सुदानशीलाः कण्वाय दत्तासममभीप्सितम् ।**
**असमैर्नोऽप्यभिप्रायैर्गन्त वृष्टिं न विद्युतः ॥ १३३ ॥**

## सूक्तम् - ४०

(उत्तिष्ठ अष्टौ, ऋषिः कण्वो घौरः । छन्दः बृहती १, ३, ५, ७, सतोबृहती २, ४, ६, ८ । प्रगाथः=विषमा बृहत्यः, समाः सतो बृहत्यः । देवता १ ब्रह्मणस्पतिर्मरुत इन्द्रश्च, २ सहसस्पुत्रो मरुतश्च, ३ ब्रह्मणस्पतिः, सूनृता देवी, देवाश्च, ४-५ ब्रह्मणस्पतिः, ६-७ देवाः, ८ इन्द्रः ।)

(४८२)उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे ।
उप प्र यन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा ।। १ ।।

**देवयन्तः पूजयन्तः स्तुवन्तोऽतिकृताशनः ।**

**प्राशूः .................................**

(४८३)त्वामिद्धि सहसस्पुत्र मर्त्य उपब्रूते धने हिते ।
सुवीर्यं मरुत आ स्वश्व्यं दधीत यो व आचके ।। २ ।।

**............. वायोः सुतेत्येव सह(सस्पुत्र)सः पुत्र इत्यथ ।**
**तव्यङ्ग्यत्वाद्धरिः प्रोक्तः शक्रस्तत्सुत एव च ।। १३४ ।।**

**युद्धं हितधनं प्रोक्तं निहितं धनमेव वा ।**
**स्वश्व्यं(स्वश्व्यं) तु स्विन्द्रियफलमाचकेऽपश्यदित्यपि।। १३५ ।।**

(४८४)प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता ।
अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः ।। ३ ।।

पतिस्तु ब्रह्मणो विष्णुर्वागीशत्वात् समीरणः ।
अग्रतो यात्वसावस्मत्कार्येष्वेवं सरस्वती ॥ १३६ ॥

सूनृता वैष्णवी वाग् वा वीरं नरं प्रति ।
नयन्तु देवाः सर्वेऽपि यत् पञ्चजनवर्धनः ॥ १३७ ॥

पङ्क्तिराधा हरिस्तेन वीरो नर्यः स एव च ।
देवगन्धर्वनृपितृदैत्याः पञ्चजनाभिधाः ॥ १३८ ॥

(४८५)यो वाघते ददाति सूनरं वसु स धत्ते अक्षिति श्रवः ।
तस्मा इळां सुवीरामा यजामहे सुप्रतूर्तिमनेहसम् ॥ ४ ॥

वाघते स्तुवते विष्णुर्ददाति सु(सू)नरं वसु ।
सुष्ठु येन नरो भूयात् सु(सू)नरं ज्ञानमुच्यते ॥ १३९ ॥

स धत्ते चाक्षयां कीर्तिमिळामन्नं यजामहे ।
सुवीर्यत्वात् सुवीरं तत् सुप्रतूर्तिः सुपेशकृत् ।
प्राणचेष्टानिमित्तत्वात् तदनेह इतीरितम् ॥ १४० ॥

(४८६)प्र नूनं वह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् ।
यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे ॥ ५ ॥ ( ॥ २० ॥ )

स एव भगवान् विष्णुर्मन्त्रं तद्विषयं वदेत् ।
उक्थ(उत्था)मुत्थापकत्वेन स एव भगवान् हरिः ॥ १४१ ॥

तन्मन्त्रवाच्या देवाश्च .................. ।

(४८७)तमिद्वोचेमा विदथेषु शम्भुवं मन्त्रं देवा अनेहसम् ।
इमां च वाचं प्रतिहर्यथा नरो विश्वेद्वामा वो अश्नवत् ।। ६ ।।

**............... यद्वाच्या देवतास्तु ताः ।**
**तमेव मन्त्रं वोचेम ज्ञानार्थं सुखकारणम् ।। १४२ ।।**

**इमां वाचं स्वीकुरुत सकाशाद् वोऽखिलं शुभम् ।**
**अश्नवानि ...................... ।**

(४८८)को देवयन्तमश्नवज्जनं को वृक्तबर्हिषम् ।
प्रप्र दाश्वान् पस्त्याभिरस्थितान्तर्वावत्क्षयं दधे ।। ७ ।।

**........ अतिदौर्लभ्याद् देवभक्तं क आप्नुयात् ।**
**यजमानं वाऽनुगच्छेत् कः सम्यक् स्तृतबर्हिषम् ।। १४३ ।।**

**तत्रतत्र प्रस्थितोऽसौ यजमानः सुखैः स्वयम् ।**
**स्वेष्टस्थानेषु चान्तर्वा विष्णुरन्तर्गतो यतः ।**
**तद्वत्त्वेन क्षयं स्थानं प्राप्नोति ज्ञानतो यजन् ।। १४४ ।।**

(४८९)उप क्षत्रं पृञ्चीत हन्ति राजभिर्भये चित्सुक्षितिं दधे ।
नास्य वर्ता न तरुता महाधने नार्भे अस्ति वज्रिणः ।। ८ ।। (।। २१ ।।)

।। इति चत्वारिंशं सूक्तम् ।।

उपपृ(क्तैः)क्तः क्षत्रियैः स आवेशेन जनार्दनः ।
हन्ति शत्रूंश्च तैर्देवो भये च स्वाश्रयं ददौ ॥ १४५ ॥

वर्ताऽभिगन्ता तरुता जेता चास्य नहि कचित् ।
युद्धं महाधनं त्वर्भं प्रसिद्धं धन(द्धधन)मेव हि ॥ १४६ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमदृग्भाष्ये
तृतीयाध्याये एकविंशो वर्गः समाप्तः ॥
॥ श्रीकृष्णार्पणमस्तु ॥

॥ समाप्तश्चायं ग्रन्थः ॥

# Appendix - I

## गीताभाष्ये उदाहृताः प्रमाणग्रन्थाः

१. अभिधानम्
२. अथर्वणीश्रुतिः (अथर्वणसंहिता)
३. अणुगीता
४. अनभिम्लातश्रुतिः
५. आदित्यपुराणम्
६. आयास्यशाखा
७. अग्निवेश्यश्रुतिः (अग्निवेश्यशाखा)
८. उपनारदीयम्
९. ऋग्वेदः
१०. ऋग्वेदखिलः
११. ऐतरेयारण्यकम्
१२. कठोपनिषत्
१३. काषायणश्रुतिः
१४. गारुडम्
१५. गीताकल्पः
१६. गौपवनशाखा (सामवेदे)
१७. गौतमखिलः
१८. छान्दोग्योपनिषत्
१९. जाबालखिलश्रुतिः
२०. तैत्तिरीयब्राह्मणम्
२१. तैत्तिरीयारण्यकम्
२२. तैत्तिरीयोपनिषत्
२३. नारदीयपुराणम्
२४. नारदपरिव्राजकोपनिषत्
२५. नारायणाष्टाक्षरकल्पः
२६. नारायणगोपालकल्पः
२७. पद्मपुराणम् (पाद्मम्)
२८. पञ्चरात्रम्
२९. पिप्पलादशाखा
३०. प्राचीनशालश्रुतिः
३१. पैङ्गिखिलः
३२. बाष्कलशाखा (सामवेदे)
३३. ब्रह्मपुराणम्
३४. ब्रह्मवैवर्तम्
३५. बृहदारण्यकोपनिषत्
३६. बाभ्रव्यशाखा
३७. भागवतपुराणम्
३८. भारतम्
४०. भाल्लवेयशाखा
४१. मनुस्मृतिः
४२. मत्स्यपुराणम्
४३. महाकौर्मम्

४४. महानारायणोपनिषत्
४५. महावाराहम्
४६. माधुच्छन्दसशाखा
४७. माण्डूक्योपनिषत्
४८. मुण्डकोपनिषत्
४९. मोक्षधर्मः
५०. मैत्रायिणी
५१. यास्कश्रुतिः
५२. वराहपुराणम्
५३. वसिष्ठशाखा
५४. वामनपुराणम्
५५. वारुणशाखा
५६. विष्णुपुराणम्
५७. व्यासयोगः
५८. शिवपुराणम्
५९. शाण्डिल्यशाखा
६०. श्वेताश्वतरोपनिषत्
६१. शार्कराक्ष्यश्रुतिः
६२. सनत्सुजातम्
६३. सौकरायणश्रुतिः
६४. स्कान्दपुराणम्
६५. हरिवंशः

# Appendix - II

## भगवद्गीतातात्पर्योदाहृताः प्रमाणग्रन्थाः

१. आग्येयपुराणम्
२. अथर्वणश्रुतिः
३. अभिधानम्
४. ऋग्वेदः
५. कृष्णसंहिता
६. तत्त्वविवेकः
७. दत्तात्रेयवचनम्
८. नारदीयम्
९. नारायणश्रुतिः
१०. पञ्चरात्रम्
११. परमयोगः
१२. परमश्रुतिः
१३. पद्मपुराणम्
१४. पैङ्गिश्रुतिः
१५. प्रकाशसंहिता
१६. प्रवृत्तम्
१७. बर्कश्रुतिः
१८. ब्रह्मतर्कः
१९. ब्रह्मपुराणम्
२०. ब्रह्मवैवर्तपुराणम्

२१. ब्रह्मसूत्राणि
२२. ब्रह्माण्डपुराणम्
२३. भगवद्वचनम्
२४. भविष्यत्पर्व
२५. भागवतम्
२६. महाभारतम्
२७. महावराहम्
२८. महाविष्णुपुराणम्
२९. विभूतितत्वम्
३०. वैहायससंहिता
३१. व्यासस्मृतिः
३२. शब्दतत्वम्
३३. शब्दनिर्णयः
३४. श्रुतिः
३५. सत्तत्त्वम्
३६. सूदशास्त्रम्
३७. सौपर्णशाखा (ऋग्वेदे)
३८. स्कान्दपुराणम्
३९. अनिर्दिष्टाकराः

# Appendix - III
## गीताभाष्योदाहृतप्रमाणवचनानि

अग्निर्ब्रह्म च तत्पूजा, इति च, VI–1
अग्निं प्राप्य ततश्चार्चिः, इति **नारदीयम्**, VIII–26
अग्निमुग्धो ह वै धूमतान्तः स्वम्, इत्यादि, V–4
अग्नौ प्रास्ताहुतिः सम्यक्, इति III–14
अङ्गुष्ठमात्रः पुरुषोङ्गुष्ठं, **महानारायणोपनिषत्** (१६-५), IX–3
अचिन्त्याः खलु ये भावाः, **श्रीविष्णुपुराणम्**, XI–16
अजस्य नाभावध्येकमर्पितं, **ऋग्वेदः** (१०-८२-६), VI–11
अज्ञात्वा एनं सर्वम्, इति **ऋग्वेदखिलः**, X–42
अज्ञात्वा ध्यायिनो ध्यानात्, इति **नारदीयम्**, VI–47
अतीव श्रद्धया युक्तः, इति **नारदीयम्**, VI–45
अतीव परिपूर्णं ते सुखं ज्ञानं च, इत्यादिभ्यः, II–72

अस्य महतो भूतस्य निश्वसितं, **बाभ्रव्यशाखा**, IX–11
अहं रुद्रेभिः वसुभिः **ऋग्वेदः** (१०-१२५), XII–1
अहं राष्ट्री सङ्गमनी, इति **ऋग्वेदः** (१०-१२५), XII–1
अहं ग्रहोपासकस्तस्य, इति **आग्निवेश्यश्रुतिः**, XIII–24
अहं भोगप्रदो वत्स, **पाद्मे शैवे** II–24
अक्षपादकणादानां साङ्ख्ययोगजटाभृताम्, इति, II–72
अक्षरात् परतः परः, इति **मुण्डकोपनिषत्**, XII–1
आकाशसंस्थितात्वैषा, इति **ऋग्वेदखिलः**, (2-1-4) XII–4
आकाङ्क्षन्नपि देवोऽसौ नेच्छते, इति, IV–14
आचार्यचैत्यवपुषा स्वगतिं, इति च, VII–14
आत्मारामा हि मुनयो, इति, II–52
आत्मनः प्रवृत्तिं चैव, इति, VII–25
आत्माभिमानाधिकारस्थितं, **स्कान्दम्**, VIII–4
आत्मानं सर्वभूतेषु भगवन्तम्, इति, VI–29
आनन्दो ब्रह्मेति व्यजानात्, इति **तैत्तिरीये** (३-३), II–72
आनन्ददेहं मन्यन्ते पुरुषं, तच्चोक्तम्, VII–24
आनन्दरूपो निष्परिमाण एष, **शाण्डिल्यशाखा**, X–36
आनन्दम् आनन्दमयो वसाने, **भागवतम्**, XII–1
आमेरुब्रह्मसदनात् आ जनात्, **नारायणगोपालकल्पः**, VIII–16
आसीदिदं तमोऽभूतम्, इति **मानवे**, XII–4
इतिहासपुराणाभ्यां वेदम्, इति **भारतम्** (उपोद्घातः)
इन्द्रियाणि जयन्त्याशु निराहाराः, इति **भागवतम्**, II–59
इडोपहूतं गेहेषु हरे भागं क्रतुषु, **मोक्षधर्मः**, XI–9
ईश्वरो यदि सर्वस्य कारकः, इति **सामवेदे यास्कश्रुतिः**, XVI–18

ज्ञानं स्वभावो जीवानां, **व्यासयोगः**, VII–16
ज्ञानप्रधाना देवास्तु, **नारदीयम्**, VII–16
ज्ञानं ज्ञेयं ज्ञानिनं, **ऋग्वेदखिलः**, XVIII–18
ज्ञानासिनोपासनया शितेन, **भागवतम्**, XV–4
त्वयीश्वरे ब्रह्मणि नो विरुद्ध्यते, इत्यादि, II–24
तत्रापि मोक्ष एवार्थः, इत्यादि, II–24
तत्प्रसादादवाप्नोति, इत्यादि, II–24
तस्मिन्प्रसन्ने किमिहास्ति, इत्यादि, II–24
तस्य लोम च न, **तैत्तिरीयारण्यकम्**, (३-१-३) II–24
तथैव सर्वशास्त्रेषु महाभारतमुत्तमम्, इति, II–24
त्वमग्र इन्द्रो वृषभः, **ऋग्वेदः** 2-1-3 II–24
तपो मे हृदयं साक्षात्, इत्यादि, II–24
तं त्वा भग, इत्यादि **तैत्तिरीयोपनिषत्** (१-११), II–24
तस्माद् ब्राह्मणाः पाण्डित्यं, **बृहदारण्ये** (५-१-५), II–52
त्वत्पादभक्तिमिच्छन्ति, इति **भागवतम्**, II–55
तद्धि जिज्ञासुभिः साध्यम्, इति, II–56
तस्य तावदेव चिरम्, **छान्दोग्योपनिषत्** (६-१४-२), II–72
तद्यथैषीकातूलं, **छान्दोग्ये** 5-24-3 II–72
तद्यथा पुष्करपलाशे इत्यादि, II–72
तमेवं विद्वानमृत इह भवति, इति **तैत्तिरीयारण्यकम्**, (३-१-३)
III–20, II–24

तस्मान्नेष्टियाजुकः स्यात्, इति, III–9
तस्मात्ते धनसनयः, इति **श्रुतिः**, IV–12
तनुर्विद्या क्रियाकृतिः, इति च, IV–13

प्रतिपत्तौ विमोक्षस्य, इति, II–18

प्रविष्णुरस्तु तव, इति **ऋग्वेदः** (१-१५४-३) XI–30

प्रसन्नो भविता देवः, **आयास्यशाखायाम्** XII–5

प्रजापतिप्रमुखाः सर्वजीवाः क्षरोऽक्षरः पुरुषः, **शार्कराक्ष्यश्रुतिः**, XV–16

पार्थार्ष्टिषेण, इत्यादि, II–47

पाताल इव दुष्पूरो, **मोक्षधर्मः**, XVI–10

प्रीणन्ति केचित् तस्य रूपस्य, **वारुणशाखा**, XI–20

पुण्यचितो लोकः क्षीयते, इत्यादि, II–24

पुण्यमेवामुं गच्छति, **वृहदारण्यकोपनिषत्**, (१-५-२०) VII–11

पूर्तेरचिन्त्यवीर्यो यो यश्च दाशरथिः स्वयं, **स्कान्दपुराणम्**, II–72

पूर्णोयमस्यात्र न किञ्चित्, **ऋग्वेदखिलः**, IV–7

पूजितः स्त्वयनेनासौ, **गरुडपुराणम्**, VIII–26

बद्धो वापि तु मुक्तो वा, **पद्मपुराणम्**, XIV–26

बहवः पुरुषाः राजन्, **मोक्षधर्मः**, VIII–13

बहुनात्र किमुक्तेन, **आदित्यपुराणम्**, II–50

बहुजन्मविपाकेन भक्तिज्ञानेन, **ब्रह्मवैवर्तपुराणम्**, II–72

बहुधा तस्य रूपमाधाति, **सनत्सुजातम्**, IX–15

ब्रह्मापि तन्न जानाति, **उपनारदीयम् (उपोद्घातः)**

ब्रह्माद्यैः प्रार्थितो विष्णुः, **नारदपुराणम् (उपोद्घातः)**

ब्रह्मेति परमात्मेति भगवान्, **भागवतम्**, II–72

ब्रह्मज्ञानेन वा मुक्तिः प्रयागमरणेन वा, III–20

ब्रह्मचर्यादेव प्रव्रजेत्, इति च, V–2

ब्रह्मा स्थाणुः तस्य प्रसादात्, **मोक्षधर्मः**, VIII–9

ब्रह्मपुरोहित ब्रह्मकायिक महाराजिक, **मोक्षधर्मः**, IX–11

मय्यनन्तगुणेऽनन्ते, इति **भागवते**, II–24, II–72, IX–18
महतः परमव्यक्तम्, इति **कठोपनिषत्**, XII–1
महती ब्रह्मणी द्वे तु प्रकृतिश्च महेश्वरः, **मत्स्यपुराणम्**, XIV–3
महत्त्वात् भारवत्त्वात्, **भारतम्**, (उपोद्घातः)
महदादेस्तु माता या, इति, IV–7
महादेव परे जन्मंस्तव, **नारदपुराणम्**, II–72
महाविभूते महात्म्यशरीरे, **मोक्षधर्मः**, IX–5
महान्तं च समावृत्य प्रधानं, **आदित्यपुराणम्**, XI–16
मां विधत्तेऽभिधत्ते मां, इति, **भागवतम्**, II–44
मा वः पदव्यः, इति V–4
मातापित्रोः अन्तरङ्गः सः, **वारुणश्रुतिः**, XI–20
मा नो माता पृथिवी, इत्यादि, XI–20
मुक्तश्च कां गतिं, **मोक्षधर्मः**, VII–23
मुमुक्षोरमुमुक्षुस्तु, **नारदपुराणम्**, VII–30
मुक्तानां च गतिर्ब्रह्मन् क्षेत्रज्ञ, **मोक्षधर्मः**, VIII–5
मृत्युर्वाव नमः, इति, VIII–9
यदि विद्याच्चतुर्वेदान्, **भारतम्**, (उपोद्घातः)
यदिहास्ति तदन्यत्र, **भारतम्**, (उपोद्घातः)
यस्य प्रसादजो ब्रह्मा रुदश्च क्रोधसम्भवः, इत्यादि, II–24
यदन्तरं व्याघ्रहरीन्द्रयोः, **स्कान्दपुराणम्**, II–24
यदि च नार्चिषमेव, **छान्दोग्योपनिषत्** (४-१५-५), II–72
यदि विद्यात् चतुर्वेदान्, इति, **भारतम्**, II–24
यथा भैषज्यरोचनम्, **भागवतम्**, II–47
यथा भक्तिविशेषो, इति, II–52

विज्ञानमानन्दं ब्रह्म, **बृहदारण्यकोपनिषत्**, II–72
वेदे रामायणे चैव, इति, II–45
वेदोऽखिलो धर्ममूलं, **मनुः**, II–45
वेदप्रणिहितो धर्मो, **मनुः**, II–45
वेदा स्वधीताः, **मोक्षधर्मः**, IX–34
वेदः कृत्स्नोऽधिगन्तव्यः, इति **मनुः**, XVII–1
वेदोऽखिलो धर्ममूलम्, इति **मनुस्मृतिः**, XVII–1
वेदप्रणिहितो धर्मो, **भागवतम्**, XVII–1
वैरेण यन्नृपतयः शिशुपाल पौण्ड्र, इति, IX–12
वृणीमहे ते परितोषणाय, इति, II–47
शारीरं जायते तेषां षोडश्या, **नारायणाष्टाक्षरकल्पः**, II–50
शमो मन्निष्ठता बुद्धेः, **भागवतम्**, X–5
शरीरस्तु त्रिधा भिन्नः, **गरुडपुराणम्**, VII–11
शरीरौ तावुभौ ज्ञेयौ, **नारदपुराणम्**, VII–11
शरीररूपिका सा, **सौकरायणश्रुतिः**, XII–5
शुद्धात्मतत्त्वविज्ञानं साङ्ख्यं, **व्यासस्मृतिः**, II–39
शुभेच्छारहितानां च द्वेषिणां च रमापतौ, **ब्रह्मपुराणम्**, VI–36
श्रवणात् मननात्, इति, VI–8
श्रीर्भूर्दुर्गेति या भिन्ना, **व्यासयोगः**, VII–14
श्रीर्भूर्दुर्गा महती तु माया, **काषायणश्रुतिः**, XIV–3
स एकधा भवति, **छान्दोग्योपनिषत्**, (७-२६-२), II–50
स एव एको भार्गव दाशारथिकृष्णाद्याः, **गौतमखिलः**, X–41
स तत्रैव पर्येति, **छान्दोग्यम्**, (८-१२-३) II–50
सत्यं सत्यं पुनः, **नारदपुराणम्**, II–24

## Appendix - IV
## गीतातात्पर्योदाहृतप्रमाणवचनानि

लिङ्गादिसाम्यं यत्र स्यात्, **ब्रह्मतर्कः**, II–43
लोकस्थितान् प्रकाशादीन्, इति, XIV–22
वायुर्बलज्ञानयोगात्, इति, XI–41
विद्वान् ब्रह्म समाप्नोति, **पाद्मम्**, VIII–23
विश्वनामा स भगवान्, **पाद्मम्**, XI–47
विशेषणं तु द्विविधं, **तत्त्वविवेकः**, XVII–18
विश्वं सत्यम्, इति, II–16
विश्वरूपं प्रथमतो ब्रह्मा, **ब्रह्माण्डम्**, XI–47
विषमेषु अपि जीवेषु, इति, V–18
विष्णुप्रसादाद् रतिमान्, **आग्नेयम्**, III–17
विष्णुना अर्थेषु ईरितानि, इति, V–8
विष्णुं तत्परमं ज्ञात्वा, इति, VII–20
विष्णुगान्यप्यतत्स्थानि, इति, IX–4
विष्णुं समाश्रितो ब्रह्मा, **पाद्मम्**, XI–18
विष्णुभक्तिविधानार्थं, **पैङ्गिश्रुतिः**, XVII–28
विष्णोरन्यत् न स्मरेत्, इति, XII–15
विष्णोः प्रसादात्, **पाद्मम्**, XVIII–39
वेदवादरतो न स्यात्, **भागवतम्**, II–42
वैष्णवाः सात्त्विकाः, इति, IV–13
वैष्णवान्येव कर्माणि, इति, XII–15
वैष्णवो भक्तियोगो, इति, XVIII–34
शमो मन्निष्ठता, **भागवतम्**, VI–4
शरीरस्थस्तु संसारी, इति, XIII–34
शुद्धभागवतानां तु स्वभावा, **सूदास्रम्**, XVII–11

## Appendix - V

## गीताभाष्योक्तपदार्थकोशः

| | |
|---|---|
| **अनादिः** – अनश्चेष्टयिता आदिः सर्वस्येत्यनादिः | 10-3 |
| **अश्वत्थः** – श्वः अपि एकप्रकारेण न तिष्ठति इति अश्वत्थः | 15-1 |
| **अध्यात्मं** – आत्मनि अधि तत् अध्यात्मम् | 8-3 |
| **अकृतात्मानः** – अशुद्धबुद्धयः | 15-11 |
| **अधिष्ठानं** – देहादिः | 18-14 |
| **अव्यक्तः** – भगवान् | 8-21 |
| **असुराः** – असुषु रताः असुराः | 7-16 |
| **आत्मना** – परमात्मना | 2-55 |
| **आत्मानं मनः** – **आत्मना**, बुद्ध्या | 3-42 |
| **आत्मा मनः** – **आत्मनः**, जीवस्य, **आत्मना** – बुद्ध्या | 6-6 |
| **आत्मनो योगं** – भगवद्विषयं योगं | 6-19 |
| **आत्मना** – मनसा, **आत्मनि** – देहे, **आत्मानं** – भगवन्तं | 6-20 |
| **आत्मना** – विष्णुना, तत्प्रसादेन, **आत्मनि** – विष्णौ | II-55 |

**उदासीनः** – कर्तव्य उपकारेऽपकारे च य उदास्ते स उदासीनः 6-9
**कर्मफलहेतुः** – कर्मफलं तत्कृतौ हेतुः यस्य सः कर्मफलहेतुः 2-47
**कूटस्थः** – कूटम् आकाशः कूटवत्स्थितः कूटस्थः निर्विकारः 6-8
**कविं** – सर्वज्ञम् 8-9
**कपिलः** – सुखरूपः पाल्यते लीयते च जगदनेनेति कपिलः 10-30
**कर्मयोगः** – कर्मप्रचुरः योगः 3-3
**कार्यं** – शरीरम् 13-21
**कृष्णः** – कर्षतीति कृष्णः 15-1
**ऊर्ध्वः** – उत्तमः सर्वतः, **अधः** निकृष्टं शाखाभूतानि 15-1
**कालः** – कालशब्दः जगद्बन्धनच्छेदनज्ञानादिसर्वभगवद्धर्मवाची, कल बन्धने, कलच्छेदने, कल ज्ञाने 11-32
**गुणाः** – इन्द्रियादीनि, **गुणेषु**-विषयेषु 2-28
**जनार्दनः** – न जायते अर्दयति च संसारमिति जनार्दनः 10-20
**जीवभूता** – श्रीः जीवानां प्राण धारिणी, चिद्रूपभूता 7-6
**क्षमा** – क्षमा तु क्रोधाभावेन सहापकर्तुरनपकृतिः 16-3
**तृप्तिः** – अन्यत्रालम्बुद्धिः 3-17
**तपः** – ब्रह्मचर्यादि 16-1
**दुःखसंयोगवियोगः** – दुःखसंयोगः येन वियुज्यते सः दुःखसंयोगवियोगः 6-23
**दिव्यं** – सृष्ट्यादिक्रीडायुक्तं 8-8
**दीर्घसूत्री** – परकृतं दोषं दीर्घकालकृतमपि अनुचितं यः सूचयति स दीर्घसूत्री 18-28
**धाम** – स्वरूपम् 8-21
**धर्मः** – धत्ते इति धर्मः, धर्मो भगवान् तद्विषयं धर्म्यं 9-3

| | |
|---|---|
| धर्मो – विष्णुः तद्विषयं धर्म्यं | 12-20 |
| निर्वाणम् – अशरीरम् | 2-72 |
| निर्वेदं – नितरां लाभम् | 2-52 |
| निष्ठा – स्थितिः | 3-3 |
| नैष्कर्म्यसिद्धिं – नैष्कर्म्यफलां योगसिद्धिम् | 18-49 |
| पुराणः – पुरं देहम् अणति इति पुराणः | 2-20 |
| प्रज्ञावादः – स्वमनीषोत्थवचनाति, प्राज्ञमतविरुद्धवादः | 2-11 |
| प्रज्ञां – प्रज्ञानं | 2-67 |
| प्रकृतिः – पूर्वसंस्कारः | 3-33 |
| पुरुषः – पुरि शयनात् पुरुषः (जीवः) | 8-4 |
| प्रत्यक्षः – अक्षेषु इन्द्रियेषु प्रति स्थितः प्रत्यक्षः | 9-3 |
| पैशुनं – परोपद्रवनिमित्तानां राजादेः कथनम् | 16-2 |
| बुद्धिः – बुध्यते अनया इति बुद्धिः | 2-39 |
| ब्राह्मणः – ब्रह्म अणतीति ब्राह्मणः (अपरोक्षज्ञानी) | 2-46 |
| ब्राह्मी स्थितिः – ब्रह्मविषया स्थितिः | 2-72 |
| ब्रह्मयोगः – ब्रह्मविषयः योगः | 5-21 |
| ब्रह्म – परिपूर्णम् | 10-15 |
| वुद्धिः – कार्याकार्यविनिश्चयः | 10-5 |
| ब्रह्मभूयं – ब्रह्मवत् प्रकृतिवत् भगवत्प्रियं | 14-26 |
| भाषा – भाष्यते अनया इति भाषा | 2-54 |
| भावैः – पदार्थैः | 7-13 |
| भूतमहेश्वरं – भूतं महदीश्वरं चेति | 9-12 |
| भोगः – अनुभवः | 13-21 |
| भूयाय – भावाय | 14-26 |

| | |
|---|---|
| **मात्राः** – मीयन्ते इति मात्राः, विषयाः | 2-14 |
| **मत्परः** – अहमेव परः सर्वस्मादुत्कृष्टः यस्य सः मत्परः | 2-61 |
| **मुनिः** – मननयुक्तो मुनिः | 2-69 |
| **मद्भावाः** – मत्तः भावः येषां ते मद्भावाः | 10-7 |
| **योगः** – उपायः 2-39, समाधियोगः | 6-14 |
| **यज्ञः** – विष्णुः | 3-9 |
| **यज्ञं** – भगवन्तम् | 4-25 |
| **यज्ञः** – यज्ञो देवमुद्दिश्य द्रव्यपरित्यागः | 3-14 |
| **योगारूढस्य** – सम्पूर्णोपायस्य - अपरोक्षज्ञानिनः इत्यर्थः | 6-3 |
| **राजविद्या** – प्रधानविद्या | 9-3 |
| **रामः** – आनन्दरूपत्वात् पूर्णत्वात् लोकरमणत्वात् रामः । | |
| **रश्च अमश्च** – इति **रामः** (इति व्युत्पत्तिः) | 10-36 |
| लौल्यं – रागः | 16-2 |
| विकर्म – कर्माकर्मादन्यत् (निषिद्धं कर्म) विकर्म | 4-17 |
| विज्ञानं – विशेषज्ञानम् अपरोक्षज्ञानं वा | 6-8 |
| **विसर्गः** – विशेषेण सर्जनं विसर्गः | 8-3 |
| **व्यासः** – विशिष्टः, सर्वस्मात् समन्तात् | 10-31 |
| **विश्वरूपः** – पूर्णरूपः | 11-16 |
| **शाश्वतः** – सदैकरूपः | 2-20 |
| **शान्तिः** – मुक्तिः | 2-66 |
| **शमः** – परमात्मनिष्ठता | 10-5 |
| श्रत् – आस्तिक्यम् | 13-20 |
| **स्पर्शाः** – सम्बन्धाः | 2-14 |
| साङ्ख्यं – ज्ञानम् | 2-39 |

सङ्गः – कर्मअकरणे स्नेहः 2-48
सम्मोहः – अकार्येच्छा, अधर्मकामिता 2-63
साङ्ख्यानां – ज्ञानिनां सनकादीनाम् 3-3
साङ्ख्यम् – शुद्धात्मतत्त्वविज्ञानम् 2-39
संन्यासः – काम्यकर्मपरित्यागः 3-4
स्वभावः – स्वाख्यो भावः स्वभावः जीवः,
सर्वदा अस्ति एकप्रकारेणेति भावः 8-3
सत् – कार्यम्, असत् कारणम् 9-19
साङ्ख्येन – वेदोक्तभगवत्स्वरूपज्ञानेन 13-26
हरिः – सर्वयज्ञादिभागहारित्वात् हरिः 11-9
ज्ञानयोगः – ज्ञानप्रचुरः योगः 3-3

## Appendix - VI
## गीतातात्पर्योक्तपदार्थकोशः

अनलः – नालमिति मन्यते चेति अनलः 3-37
अनुमतिः – अनुसारिणी मतिः 13-23
अवशः – विष्णुवशः 3-5
आत्ममायया – आत्मेच्छया 5-6
आत्मानं – विष्णुम्, आत्मना तत्प्रसादेन 6-20
आत्मनि – विष्णौ 2-55
क्षेत्रं – श्रीः 13-27
द्वन्द्वमोहः – मिथ्याज्ञानम् 7-29
धर्म्यामृतं – धर्मसाधनं धर्म्यं, तदेवामृतसाधनममृतं धर्म्यामृतं 12-20
नैष्कर्म्यसिद्धिं – अनिष्टसर्वकर्मनाशाख्यसिद्धिम् 18-49

| | |
|---|---|
| पुरुषः – पुरु सरणात् पुरुषः | 2-15 |
| पुराणः – पुराणि अणति गच्छति इति पुराणः | 2-20 |
| वुद्धिः – भगवज्ज्ञानमेव बुद्धिः | 2-50 |
| बाणं – शरीरम् | 2-72 |
| ब्रह्मचर्यम् – ब्रह्मणि चरणं ब्रह्मचर्यम् | 8-12 |
| ब्राह्मी – ब्रह्मविषया | 2-72 |
| ब्रह्मभूयं – ब्रह्मणि भूयं | 14-26 |
| योगारूढः – सम्पूर्णोपायः | 6-3 |
| रसः – रागः | 2-59 |
| विभूतिः – विशिष्टभवनं विभूतिः | 10-7 |
| शान्तिः – भगवन्निष्ठा | 2-64 |
| श्रद्धामयः – श्रद्धास्वरूपः | 17-2 |
| सनातनः – नदेन शब्देन सह वर्तते इति सनादनः, स एव सनातनः | 2-24 |
| स्वभावः – स्वाख्यो भावः स्वशब्दः स्वरूपवाची | 4-6 |
| सङ्गं – फलस्नेहम् | 2-48 |
| संन्यासः – द्वेषादिवर्जनमेव संन्यासशब्दार्थः | 5-3 |

# Appendix - VII
## गीताभाष्योदाहृताभिधानवचनानि

| | |
|---|---|
| अलम्बुद्धिस्तथा तुष्टिः । | 10-5 |
| अक्रोधोऽदोषकृच्छत्रोः क्षमावान् स निगद्यते । | 16-3 |
| उद्दिश्य देवान् द्रव्याणां त्यागो यज्ञ इतीरितः । | 9-18 |
| केतुः केतश्चितिश्चित्तं मतिः कर्तुः मनीषा माया । कूटं खं विदलं व्योम सन्धिराकाश उच्यते । | 6-8 |

| | |
|---|---|
| चपलश्चश्चलोऽस्थिरः । | 16-2 |
| ज्ञानं प्रतीतिर्बुद्धिस्तु कार्याकार्यविनिर्णयः । | 10-5 |
| ज्ञात्वाऽपि स्वात्मनोऽल्पत्वं दम्भो माहात्म्यभावनम् । | 13-8 |
| तेजः स्वरूपं च गृहं प्राज्ञैर्धामेति गीयते । | 8-21 |
| प्रीतिः सुखं कमानन्दः । | 10-30 |
| परोपद्रवहेतूनां दोषाणां पैशुनं वचः । | |
| राजादेस्तु मदाद्भीतेः अदृष्टिर्दर्प उच्यते ।। | 16-2 |
| परेण कृतो दोषो दीर्घकालकृतोऽपि वा । | |
| यस्तस्य सूचको दोषान् दीर्घसूत्री स उच्यते ।। | 18-22 |
| भावनात्वतिवासना । | 8-7 |
| रसो रागस्तथा रक्तिः शोभनाध्यास उच्यते । | 2-57 |
| रागो लौल्यं तथा रक्तिः । | 16-2 |
| वादो विषयकृत्त्वं च मुखतो वचनं स्मृतम् । | 2-45 |
| शान्तिर्मोक्षोऽथ निर्वाणम् | 2-66 |
| श्रद्धामास्तिक्यमुच्यते । | 12-20 |
| शब्दाद्या इन्द्रियाद्याश्च सत्त्वाद्याश्च शुभानि च । | |
| अप्रधानानि च गुणा निगद्यन्ते निरुक्तिगैः ।। | 3-29 |
| सदभिव्यक्तिरूपत्वात् कार्यमित्युच्यते बुधैः । | |
| असदव्यक्तरूपत्वात् कारणं चापि शब्दितम् ।। | 9-19 |
| स्नेहः सक्तिः स एवातिपक्वोऽभिष्वङ्ग उच्यते ।। | 13-10 |
| सन्तोषस्तृप्तिरापूर्तिः प्रीतिः पर्यायवाचकाः । | 3-17 |

## Appendix - VIII

## गीतातात्पर्योदाहृतशब्दनिर्णयवचनानि

| | |
|---|---|
| अध्यक्षोऽधिपतिः प्रोक्तः । | |
| यदक्षाण्यस्य चोपरि । | 9-10 |

| | |
|---|---|
| इङ्गनं क्षणिकं कर्म दीर्घमारम्भ उच्यते । | 14-23 |
| क्वचित्स्वभावः प्रकृतिः क्वचिच्च त्रिगुणात्मिका । | |
| क्वचित्प्रकृष्टकर्तृत्वात् भगवान् प्रकृतिर्हरिः ।। | 3-29 |
| दुःखं दुरिति सम्प्रोक्तं खं नाम सुखमुच्यते । | 14-24 |
| दुःखं तु मानसं ज्ञेयमायासो बाह्यमुच्यते । | |
| विशेषस्य विवक्षायामन्यथा सर्वमेव तु ।। | |
| नित्यं सनातनं प्रोक्तं नित्यं नियतमेव हि । | |
| निश्चितार्थः स तु ज्ञेयो यत्रात्मैव परोक्षतः । | |
| उच्यते विष्णुना यद्वत् तद् ब्रह्मेत्यादि कथ्यते ।। | 18-61 |
| प्रकृतेन क्रियायोगं चशब्दः क्वचिदीरयेत् । | |
| क्वचित् समुच्चयं ब्रूयात् क्वचिद्दौर्लभ्यवाचकः ।। | 13-30 |
| बहुवाचिनां तु शब्दानां लिङ्गप्रकरणादिभिः । | |
| प्रवृत्तिहेतोश्चाधिक्यान्निर्णयोऽर्थेषु गम्यते ।। | 4-42 |
| बुद्धेर्बोधनिधित्वात् तदन्तःकरणमुच्यते । | 10-4 |
| मयः प्रधानमुद्दिष्टं स्वरूपं कार्यमेव च । | 17-3 |
| योनिर्भार्या तथा स्थानं योनिः कारणमेव च । | 14-4 |
| रतिरानन्द उद्दिष्टस्तृप्तिस्तु कृतकृत्यता । | |
| प्रीतिस्तु द्विविधः स्नेहः कर्मजो निज एव च ।। | 3-17 |
| सम्यक् तत्त्वदृशिः साङ्ख्यं योगस्तत्साधनं स्मृतम् । | 2-39 |
| सद्भाववाचिनः शब्दाः सर्वे ते सुखवाचकाः । | |
| अभाववाचिनः शब्दाः सर्वे ते दुःखवाचकाः ।। | 2-16 |
| सत् साधुगुणपूर्णत्वादस्मान्नान्यो गुणाधिकः । | |
| यतोऽतोऽसदिति प्रोक्तं विष्ण्वाख्यं परमं पदम् ।। | 9-18 |
| सत्त्वं जीवः क्वचित्प्रोक्तः क्वचित्सत्त्वं जनार्दनः । | |

सत्त्वं नाम गुणः क्वापि क्वचित्साधुत्वमुच्यते ।। 13-27

हृतिर्मदादधर्माय हर्षो नाम प्रकीर्तितः । 12-17

हृद्यं पश्चान्मनोहारि प्रियं तत्कालसौख्यदम् ।
सुखं तु दीर्घसुखदं रम्यमभ्याससौख्यदम् ।। 17-8

## Appendix - IX
## अनिर्दिष्टकोशवचनानि

अभावाज्जडदेहस्य विष्णुर्निर्बाण उच्यते ।
भिन्नदेहाभावतो वा स सहस्रशिरा अपि ।। 2-72

अलसो दीर्घसूत्री च सत्त्वयुक् तामसो मतः ।
अयुक्तो राजसः स्तब्धः प्राकृतो निकृतिः शठः ।।
एकैकेनैव दोषेण प्रोक्तस्तामसतामसः ।
दुर्नरत्वं च तिर्यक्त्वं तमश्चैतत्फलं क्रमात् ।। 18-30

## Appendix - X
## ।। गीताश्लोकानुक्रमणिका ।।